नागाङ्कं मोक्तुमिच्छोः शयनमुरु फणाचक्रवालोपधानम्
निद्राच्छेदाभिताम्रा चिरमवतु हरेर्दृष्टिराकेकरा वः ॥१४०॥
[ मु. रा. अं. ३. श्लो. २१ ]

६५) व्याध्यादेर्ग्लानिर्वैवर्ण्यादिकृत् ॥ ३९ ॥

५ व्याधिमनस्तापनिधुवनोपवासक्षुत्पिपासाध्वलङ्घननिद्राच्छेदातिपानतपोजराकलाभ्यासादिभ्यो बलापचयो ग्लानिस्तां वैवर्ण्यक्षामनेत्रकपोलोक्तिश्लथाङ्गत्वप्रवेपनदीनसंचारानुत्साहादिभिर्वर्णयेत् । यथा—

किसलयमिव मुग्धं बन्धनाद्विप्रलूनं
हृदयकुसुमशोषी दारुणो दीर्घशोकः ।
१० ग्लपयति परिपाण्डु क्षाममस्याः शरीरं
शरदिज इव घर्मः केतकीगर्भपत्रम् ॥ १४१ ॥
[ उ. रा. च. अं. ३ श्लो. ५ ]

६६) दौर्गत्यादेर्दैन्यममृजादिकृत् ॥४०॥

दौर्गत्यमनस्तापादिभ्योऽनौजस्यं दैन्यम् । तन्मृजात्यागगुर्वङ्गता-
१५ शिरःप्रावरणादिभिर्वर्णयेत् । यथा—

अस्मान्साधु विचिन्त्य संयमधनानुच्चैः कुलं चात्मन-
स्त्वय्यस्याः कथमप्यबान्धवकृतां प्रेमप्रवृत्तिं च ताम् ।
सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
भाग्याधीनमतः परं न खलु तत् स्त्रीबन्धुभिर्याच्यते ॥१४२॥
२० [ अ. शा. अं. ४ श्लो. ११ ]

६७) व्यायामादेः श्रमोऽङ्गभङ्गादिकृत् ॥४१॥

व्यायमाध्वगत्यादिभ्यो मनःशरीरखेदः श्रमः । सोऽङ्गभङ्गमर्दनमन्दक्रमास्यविकूणनादिभिर्वर्णयेत्[1] । यथा—

1. P. वर्ण्यते

अलसलुलितमुग्धान्यध्वसंतापखेदा-
दशिथिलपरिरम्भैर्दत्तसंवाहनानि ।
मृदुमृदितमृणालीदुर्बलान्यङ्गकानि
त्वमुरसि मम कृत्वा यत्र निद्रामवाप्ता ॥१४३॥
[ उ. रा. च. अं. १ श्लो. २४ ] ५

**६८) इष्टवियोगादेरुन्मादोऽनिमित्तस्मितादिकृत् ॥ ४२ ॥**

इष्टवियोगधननाशाभिघातवातसन्निपातग्रहादिभ्यश्चित्तविप्लव उन्मादः । तमनिमित्तस्मितरुदितोत्क्रुष्टनृत्तगीत[1]प्रधावितोपवेशनोत्थानासंबद्धप्रलापभस्मपांशूद्धूलननिर्माल्यचीर[2]घटवक्त्रशरावाभरणादिभिर्वर्णयेत्। यथा— १०

हंस प्रयच्छ मे कान्तां गतिस्तस्यास्त्वया हृता ।
संभावितैकदेशेन देयं यदभियुज्यते ॥१४४॥
[ वि. अं. ४. श्लो. १७ ]

**६९) प्रहारादेर्मोहो भ्रमणादिकृत् ॥ ४३ ॥**

प्रहारमत्सरभयदैवोपघातपूर्ववैर[3]स्मरणत्रासनादिभ्यश्चित्तस्य मूढत्वं मोहः । मोहस्य प्रागवस्थापि मोहशब्देनोच्यते । तं भ्रमणदेहघूर्णनपतनसर्वेन्द्रियप्रमोहवैचित्र्यादिभिर्वर्णयेत् । यथा— १५

तीव्राभिषङ्गप्रभवेण वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम् ।
अज्ञातभर्तृव्यसना मुहूर्तं कृतोपकारेव रतिर्बभूव ॥१४५॥
[ कु. सं. स. ४ श्लो. ७३ ] २०

सुखजन्मापि मोहो भवति । यथा—
कान्ते तल्पमुपागते विगलिता नीवी स्वयं बन्धना-
त्तद्वासः श्लथमेखलागुणधृतं किंचिन्नितम्बे स्थितम् ।

1. I. गीतनृत्त 2. I. चीवर° 3. P. पूर्वसारण

एतावत्सखि वेद्मि सांप्रतमहं तस्याङ्गसङ्गे पुनः
कोऽसौ कास्मि रतं तु किं कथमिति स्वल्पापि मे न स्मृतिः ।१४६।
[ अ. श. श्लो. १०१ ]

७०) दारिद्र्यादेश्चिन्ता संतापादिकृत् ॥ ४४ ॥

५ दारिद्र्येष्टद्रव्यापहारैश्वर्यभ्रंशादिभ्यो ध्यानं चिन्ता । सा च स्मृतेरन्या । ग्रसनाददनवत्, खेलनाद्रमनवच्च । तां संतापशून्यचित्तत्वकार्श्यश्वासाधोमुखचिन्तनादिभिर्वर्णयेत् । सा च वितर्कात्ततो वा वितर्क इति वितर्कात्पृथग्भवति चिन्ता । यथा—

पश्यामि तामित इतश्च पुरश्च पश्चा-
१० दन्तर्बहिः परित एव विवर्तमानाम् ।
उद्बुद्धमुग्धकनकाब्जनिभं वहन्ती-
मासज्य तिर्यगपवर्तितदृष्टिवक्त्रम् ॥ १४७ ॥
[ मा. मा. अं. १. श्लो. ४३ ]

७१) आक्षेपादेरमर्षः स्वेदादिकृत् ॥ ४५ ॥

१५ विद्यैश्वर्यबलाधिककृतेभ्य आक्षेपावमानादिभ्यः प्रतिचिकीर्षारूपोऽमर्षः । स च स्वेदध्यानोपायान्वेषणशिरःकम्पाधोमुखविचिन्तनादिभिर्वर्ण्यते । यथा—

लाक्षागृहानलविषान्नसभाप्रवेशैः
प्राणेषु चित्तनिचयेषु च नः प्रहृत्य ।
२० आकृष्टपाण्डववधूपरिधानकेशाः
स्वस्था भवन्ति मयि जीवति धार्तराष्ट्राः ॥ १४८ ॥
[ वे. सं. अं. १ श्लो. ८. ]

७२) निर्घातादेस्त्रासोऽङ्गसंक्षेपादिकृत् ॥ ४६ ॥

निर्घातगर्जितभूपर्वतकम्पशिलोल्काशनिविद्युत्पातरक्षःस्थूलपशूत्क्रु-
२५ ष्टादिभ्यश्चेतश्चमत्कृतिरूपस्त्रासो भयात्पूर्वापरविचारवतो भिन्न एव । सोऽङ्गसंक्षेपस्तम्भरोमोद्गमगद्गदप्रलयोत्कम्पनिःस्पन्दवीक्षितैर्वर्ण्यः। यथा—

परिस्फुरन्मीनविघट्टितोरवः सुराङ्गनास्त्रासविलोलदृष्टयः ।
उपाययुः कम्पितपाणिपल्लवाः सखीजनस्यापि विलोकनीयताम् ॥१४९॥
[ कि. स. ८. श्लो. ४५ ]

### ७३) ग्रहादेरपस्मारः कम्पादिकृत् ॥ ४७ ॥

ग्रहभूतदेवयक्षपिशाचब्रह्मराक्षसशून्यारण्यश्मशानसेवनोच्छिष्टगम- ५
नधातुवैषम्यादेरावेशरूपोऽपस्मारः । तं कम्पितस्फुरितस्विन्न[1]धावितश्व-
सितभूमिपतनारावमुखफेनादिभिर्वर्णयेत् । अयं च प्राय आभासेष्वेव
शोभते । यथा—

आश्लिष्टभूमिं रसितारमुच्चैर्लोलद्भुजाकारबृहत्तरङ्गम् ।
फेनायमानं पतिमापगानामसावपस्मारिणमाशशङ्के ॥ १५० ॥ १०
[ शि. व. स. ३ श्लो. ७२ ]

### ७४) रोगादेर्निर्वेदो रुदितादिकृत् ॥ ४८ ॥

रोगाधिक्षेपताडनदारिद्र्येष्टवियोगावमानतत्त्वज्ञानादिभ्यः स्वाव-
वमाननारूपो निर्वेदः । स रुदितश्वसितानुपादेयतादिभिर्वर्ण्यते[2] । यथा—

**तत्त्वज्ञानादिभ्य** इति । चिरकालविभ्रमविप्रलब्धस्य उपादेयत्वनिवृत्तये १५
यत्सम्यग्ज्ञानं तन्निर्वेदं जनयति, न त्वात्मस्वभावः । तस्य शान्तस्थायित्वेनोक्तत्वात् ।
यथा—

'वृथा दुग्धोऽनड्वान्स्तनभरनता गौरिति चिरं
परिष्वक्तः षण्ढो युवतिरिति लावण्यरहितः ।
कृता वैडूर्याशा विकचकिरणे काचशकले २०
मया मूढेन त्वां कृपणमगुणज्ञं प्रणमता ॥ १६१ ॥ इति ॥
[ सुभाषितावली ४४९ ]

अयं च निर्वेदः स्वयं पुरुषार्थसिद्धये वा, उत्साहरत्यादिवदत्यन्तानुरञ्जनाय
वा हासविस्मयादिवत्र प्रभवतीत्यन्यमुखप्रेक्षितत्वाद्व्यभिचार्येवेति ।

1. L. खिन्न 2. I. L. वर्ण्यः

किं करोमि क्व गच्छामि कमुपैमि दुरात्मना ।
दुर्भरेणोदरेणाहं प्राणैरपि विडम्बितः ॥ १५१ ॥
[ ]

७५) उत्पातादिभ्य आवेगो विस्मयादिकृत् ॥ ४९ ॥

५ उत्पातवातवर्षाग्निगजप्रियाप्रियश्रवणव्यसनादिभ्यः संभ्रम आवेगः । तं विस्मयावगुण्ठनच्छत्नश्रयणधूमान्ध्यत्वरितापसर्पणपुलकविलापसंनहनादिभिर्यथासंख्यं वर्णयेत् ।

---

**उत्पातवातेति** । आदिशब्दः प्रत्येकमभिसंबध्यते । ततश्चोत्पातादेर्वातादेर्वर्षादेरग्न्यादेर्गजादेः प्रियश्रवणादेरप्रियश्रवणादेर्व्यसनादेश्च विभावादित्यर्थः ।
१० एवं विस्मयादिना अवगुण्ठनादिनाच्छत्रश्रयणादिना धूमान्ध्यादिना त्वरितापसर्पणादिना पुलकादिना विलापादिना संनहनादिना चानुभावेनेति प्रतिपत्तव्यम् । तत्र उत्पातावेगः 'किं किं सिंहः' इत्यादिना निदर्शितः । वातावेगो यथा—

वाताहृतं वसनमाकुलमुत्तरीयम् ॥ १६२ ॥ इत्यादि ।
[ ]

१५ वर्षावेगो यथा—

'देवे वर्षत्यशनपचनव्यापृता वह्निहेतो[1]
र्गेहाद्गेहं फलकनिचितैः सेतुभिः पङ्कभीताः ।
तीव्रपान्तानविरलजलान्[2]पाणिभिस्ताडयित्वा
सूर्पैश्छत्रस्थगितशिरसो योषितः संचरन्ति ॥ १६३ ॥
२० [ ]

अग्न्यावेगो यथा–'क्षिप्तो हस्तावलग्नः–' इत्यादि । [ अ. श. श्लो. २ ]
गजावेगो यथा—

'स च्छिन्नबन्धद्रुतयुग्यशून्यं
भग्नाक्षपर्यस्तरथं क्षणेन ।
२५ रामापरित्राणविहस्तयोधं
सेनानिवेशं तुमुलं चकार ॥ १६४ ॥
[ र. वं. स. प. श्लो. ४९ ]

प्रियदर्शनादावेगो यथा—

एह्येहि वत्स रघुनन्दन पूर्णचन्द्र
चुम्बामि मूर्धनि चिरं च परिष्वजे त्वाम् ।

---

1. C. °हेतौ 2. A. B. °नविरतजलान्

तत्रोत्पातादावेगो[1] यथा—

किं किं सिंहस्ततः किं नरसदृशवपुर्देव चित्रं गृहीतो
नैवेदृक्कोऽपि जीवोऽद्भुतमुपनिपतन्पश्य संप्राप्त एव ।

आरोप्य वा हृदि दिवानिशमुद्वहामि
वन्देऽथ वा चरणपुष्करकद्वयं ते ॥ १६५ ॥ ५
[ म. च. अं. १. श्लो. ५५ ]

अप्रियदर्शनश्रवणावेगो यथा—**उदात्तराघवे**[2]

' चित्रमायः—( ससंभ्रमम् । ) भगवन् कुलपते रामभद्र, परित्रायतां परित्रायताम् । ( इत्याकुलतां नाटयति । )' इत्यादि ॥ १६६ ॥ पुनः चित्रमायः— १०

मृगरूपं परित्यज्य विधाय विकटं वपुः ।
नीयते रक्षसा तेन लक्ष्मणो युधि संशयम्[3] ॥ १६७ ॥

रामः—

वत्सस्याभयवारिधेः प्रतिभयं मन्ये कथं राक्षसात् ।
त्रस्तश्चैष मुनिर्विरौति मनसश्चास्त्येव मे संभ्रमः । १५
मा हासीर्जनकात्मजामिति मुहुः स्नेहाद्गुरुर्याचते
न स्थातुं न च गन्तुमाकुलमतेर्मूढस्य मे निश्चयः ॥ १६८ ॥
[ ]

व्यसनं राजविद्रवादि[4] तद्धेतुरावेगो यथा—

आगच्छागच्छ[5] शस्त्रं कुरु, वरतुरगं संनिधेहि द्रुतं मे २०
खड्गः क्वासौ, कृपानीमुपनय, धनुषा किं किमङ्गप्रविष्टे ।
संरम्भोन्निद्रितानां क्षितिभृति गहनेऽन्योन्यमेव प्रतीत्थं
नादः स्वप्नाभिदृष्टे त्वयि चकितदृशां विद्विषामाविरासीत् ॥ १६९ ॥
[ धनिकस्य द. रू. प्र. ४. सू. २८. ]

1. I. उत्पातावेगो 2 N. उन्मत्तराघवे 3. N, संक्षयम् २५

4 A. B, C. N °विद्रवादि. which is obviously incorrect. The correct reading must be विद्रव. cf. द रू. अवलोक p. 137 from which this verse is taken.

5 A. B. drop गच्छ

शस्त्रं शस्त्रं न शस्त्री त्वरितमहह हा कर्कशत्वं नखानाम्
इत्थं दैत्याधिनाथो निजनखकुलिशैर्येन भिन्नः स पायात् ॥१९२॥
[ क. व. स. ४० ]

एवं वातावेगादिषूदाहार्यम् ।

५ **७६) संदेहादेर्वितर्कः शिरःकम्पादिकृत् ॥ ५० ॥**

संदेहविमर्शविप्रतिपत्त्यादिभ्यः संभावनाप्रत्ययो[1] वितर्कः । स शिरःकम्पभ्रूक्षेपसंप्रधारणकार्यकलापमुहुर्ग्रहण[2]मोक्षणादिभिर्वर्ण्यः । यथा—

अनङ्गः पञ्चभिः पौष्पैर्विश्वं व्यजयतेषुभिः ।
इत्यसंभाव्यमथ वा विचित्रा वस्तुशक्तयः ॥ १९३ ॥

१० [ ]

**७७) परोत्कर्षादेरसूयावज्ञादिकृत् ॥ ५१ ॥**

परस्य सौभाग्यैश्वर्यविद्यादिभिरुत्कर्षादादिशद्वादपराधमुहुर्द्वेषादिभ्यश्चाक्षमरूपासूया । तामवज्ञाभ्रुकुटिक्रोधसेर्ष्योक्त्यालोकितदोषोपवर्णनादिभिर्वर्णयेत् । यथा—

१५ वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु हुं वर्तते
सुन्दस्त्रीदमनेऽप्यखण्डयशसो लोके महान्तो हि ते ।

---

**संदेहेति** । संदेहः किंस्विदित्युभयावलम्बी प्रत्ययः संशयरूपः । **विमर्शो** विशेषप्रतीत्याकाङ्क्षात्मिका इच्छा । बाधकप्रमाणेन पक्षान्तराभावप्रतीतिमात्रं **विप्रतिपत्तिः** । येभ्योऽनन्तरं भवितव्यताप्रत्ययस्वभावः एकतरपक्षाशैथिल्यदायी
२० पक्षान्तरतुल्यकक्षभावाच्च्यावयन्नुन्मग्नतामन्यस्य दर्शयंस्तर्कः । स च संशयात्पृथगेव । संदेहेन तत्त्वबुभुत्सादिरूपस्य विमर्शादेः स्वीकारेऽपि कविशिक्षार्थं भङ्ग्या निरूपणम् । अन्ये तु—

(49) "धर्मिणि संदेहो धर्मे तु विमर्शो भ्रान्तिज्ञानं विप्रतिपत्तिः" इत्याहुः । [ ]

---

1. I. संभवनीय 2. L. drops from संभावना to वर्ण्यः

यानि त्रीणि कुतोमुखान्यपि पदान्यासन् खरायोधने
यद्वा कौशलमिन्द्रसूनुनिधने तत्राप्यभिज्ञो जनः ॥ १५४ ॥
[ उ. रा. च. अं. ५ श्लो. ३५ ]

**७८) व्याध्यभिघाताभ्यां मृतिर्हिक्काकार्श्यादिकृत्** ॥ ५२ ॥

व्याधेर्जरादिः प्रतीतः, सर्पविषशस्त्रगजादिसंभवोऽभिघातस्ताभ्यां  ५
मृतेः प्रागवस्था मृतिः । साक्षान्मृतावनुभावाभावात् । तत्र व्याधिजां
मृतिं हिक्काश्वासाङ्गभङ्गाक्षिमीलनाद्यैः, अभिघातजां तु कार्श्यवेपथुदाह-
हिक्काफेनाङ्गभङ्गजडतामरणादिभिर्वर्णयेत् । यथा—

स गतः क्षितिमुष्णशोणितार्द्रो खुरदंष्ट्राग्रनिपातदारिताश्मा ।
असुभिः क्षणमीक्षितेन्द्रसूनुर्विहितामर्षगुरुध्वनिर्निरासे ॥  १०
[ ]

शृङ्गारे तु मरणाध्यवसायो मरणादूर्ध्वं झटिति पुनर्योगो वा
निबध्यते । अन्यत्र तु स्वेच्छा । यथा—

संप्राप्तेऽवधिवासरे क्षणममुं तद्वर्त्मवातायनं
वारंवारमुपेत्य निष्क्रियतया निश्चित्य किंचिच्चिरम् ।  १५
संप्रत्येव निवेद्य केलिकुररीः सास्रं सखीभ्यः शिशो-
र्माधव्याः सहकारकेण करुणः पाणिग्रहो निर्मितः ॥१५९॥
[ ]

---

**प्रागवस्थेति** । म्रियमाणावस्थैव अनेन व्याधिना मे न निवर्तितव्य-
मित्येवंविधचित्तवृत्तिरूपा ।  २०

**कार्श्येति** । अष्टौ हि विषवेगाः । यदाह **भरतः**—

(50) कार्श्यं तु प्रथमे वेगे द्वितीये वेपथुं तथा ।
दाहं तृतीये हिक्कां च चतुर्थे संप्रयोजयेत् ॥
फेनं च पञ्चमे कुर्यात्स्यात्षष्ठे स्कन्धभञ्जनम् ।
जडतां सप्तमे कुर्यादष्टमे मरणं तथा ॥  २५
[ ना शा. अ. ७. श्लो. ७९-८० ]

तथा—[1]

तीर्थे तोयव्यतिकरभवे जह्नुकन्यासरय्वो-
देहत्यागादमरगणनालेख्यमासाद्य सद्यः ।
पूर्वाकाराधिकतररुचा संगतः कान्तयासौ
लीलागारेष्वरमत पुनर्नन्दनाभ्यन्तरेषु ॥ १५६ ॥

[ र. वं. स. ८. श्लो. ९५ ]

अथ सात्त्विकानाह—

७९) **स्तम्भस्वेदरोमाञ्चस्वरभेदकम्पवैवर्ण्याश्रुप्रलया अष्टौ सात्त्विकाः ॥ ५३ ॥**

सीदत्यस्मिन्मन इति व्युत्पत्तेः सत्त्वगुणोत्कर्षात्साधुत्वाच्च प्राणात्मकं वस्तु सत्त्वम्, तत्र भवाः सात्त्विकाः । भावा इति वर्तते । ते च प्राणभूमिप्रसृतरत्यादिसंवेदनवृत्तयो बाह्यजडरूपभौतिकनेत्रजलादिवि-

---

आदिग्रहणात्सहसाभूमिपतनविकम्पनस्फुरणादयो ज्ञेयाः[2] ।

**प्राणभूमीति** । अयं भावः । रत्यादयश्चित्तवृत्तिविशेषाः पूर्वं संविद्रूपाः समुल्लसन्ति । तत आभ्यन्तरप्राणान्[3] ते स्वरूपाध्यासेन कलुषयन्ति । न चैतदसंवेद्यम् । तथा हि क्रोधावेशे[4] अन्तरा ज्वलत्येव पूर्वमुन्मिषति ततः स्वेदः । अनेनैवाशयेन **भट्टबाणेनो**क्तम्—

(51) 'पूर्वं तपो गलति पश्चात्स्वेदसलिलम्' इति ।

[ ह. च. उ. १. पृ. १३ ]

तथा तदवस्थां प्राप्तोऽवहित्थादिना भावो बहिर्विकारपर्यन्तताप्राप्तेः[5] परिरक्ष्यमाणोऽपि लोके दृष्टः । यथा—

पिअमुहससङ्कदंसणचलिअं रइसाअरं पिआहिअअम् ।
गुरुसंकमरुम्भियसेअपमुहपसरं पि हु ण ठाइ ॥' ॥ १७० ॥

[ ]

---

1. P. drops तथा 2. A. omits ज्ञेयाः. 3. A. B. आभ्यंतरप्राणान्तरूपा°. C. आभ्यंतरं प्राणं ते स्वरूपा० 4. A. B. क्रोधावसरे 5. C. °पर्यन्ताप्राप्तेः

लक्षणा विभावेन रत्यादिगतेनैवातिचर्वणागोचरेणाहृता अनुभावैश्च गम्यमाना भावा भवन्ति । तथा हि पृथ्वीभागप्रधाने प्राणे संक्रान्तश्चित्तवृत्तिगणः स्तम्भो विष्टब्धचेतनत्वम् । जलभागप्रधाने तु बाष्पः । तेजसस्तु प्राणनैकट्यादुभयथा तीव्रातीव्रत्वेन प्राणानुग्रह इति द्विधा

---

प्रियमुखदर्शनेन रतिविषये सादरं सत्प्रियाहृदयं चलितं गुरुविषये मा संक्रमीदिति । निरुद्धस्वेदप्रभृति बाह्यप्रसरमपि न विश्राम्यति । आन्तरस्वेदादि सात्त्विकक्षोभमयमेवेत्यर्थः । निदर्शनं चात्र प्रतीयमानम् । तथा हि–प्रियं मुखं यस्य तादृशस्य शशाङ्कस्य दर्शने आहृदयमपि चलितो रयी वेगवान्सागरो गुरुणा सेतुना रुद्धाः सेकप्रारम्भकाः प्रसरा यस्य तादृशोऽपि खल्वित्याश्चर्यं न तिष्ठति न निस्तरङ्गीभवति । सागरशब्द उभयलिङ्गः । प्राकृते वा लिङ्गविपर्यासः । तदत्र रतिर्मनोरूपत्वाच्च्युता बाह्य[1]भौतिकविकारपर्यवसायिनी च न जातेति प्राणभूमावेव विश्रान्ता वर्णिता ।

**रत्यादिगतेनैवेति** । न तु विभावान्तरेण, तेषां बाह्यविषयविशेषाभिमुख्यनिरपेक्षत्वादित्यर्थः । ग्लान्यालस्यश्रममूर्छादीनां तु यद्यप्यालम्बनविषयशून्यता, तथापि बाह्यहेतुकाः[2] सन्तो व्यभिचारिषु गणिताः । अबाह्यहेतुकास्तु स्तम्भादय इति सात्त्विकाः ।

**स्तम्भो विष्टब्धचेतनत्वमिति** । मनसा हर्षादिपरवशेनानिन्द्रियप्रदेशचारिणा विकल्पपर्यन्तता[3]गमनरहिताविकल्पकबहिर्वृत्तिमात्रनिष्ठानामिन्द्रियाणामनधिष्ठानादित्यर्थः । यथा—

तं ताण हयच्छायं णिच्चललोअणसिहं पउत्थपया ।
आलिक्खपईवाण व णिययं पयइचडुलत्तणं पि विअलिअम् ॥ १७० ॥
[ वि. बा. ली. ]

एवं बाष्पहेतुत्वाद्बाष्पो यथा—

उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्ति
बाष्पं कुरु स्थिरतया विहितानुबन्धम् ।
अस्मिन्नलक्षितनतोन्नतभूमिभागे
मार्गे पदानि खलु ते विषमीभवन्ति ॥ १७१ ॥
[ अ. शा. अं. ४ श्लो. १४ ]

**तीव्रातीव्रत्वेनेति** । तीव्रत्वेन प्राणानुग्रहस्वेदो यथा—

---

1. C. बाह्या   2. C. °का अतो   3. C. °र्यन्तागमन

स्वेदो वैवर्ण्यं च। तद्धेतुत्वाच्च तथा व्यवहारः। आकाशानुग्रहे गतचेतनत्वं प्रलयः। वायुस्वातन्त्र्ये तु तस्य मन्दमध्योत्कृष्टावेशात्रेधा रोमाञ्चवेपथुस्वरभेदभावेन स्थितिरिति **भरतविदः**।

---

आश्लेषे प्रथमं क्रमादथ जिते हृद्येऽधरस्यार्पणे
केलिद्यूतविधौ पणं प्रियतमो कान्तां पुनः पृच्छति।
सान्तर्हासनिरुद्धसंभृतरसोद्भेदस्फुरद्गण्डया
तूष्णीं शार[1]विशारणाय निहितः स्वेदाम्बुगर्भः करः ॥ १७२ ॥
[ ]

अतीव्रत्वेन तु वैवर्ण्यं यथा—
संचारिणी दीपशिखेव रात्रौ
यं यं व्यतीयाय पतिंवरा सा।
नरेन्द्रमार्गाट्ट इव प्रपेदे
विवर्णभावं स स भूमिपालः ॥ १७३ ॥
[ र. वं. स. ६, श्लो. ६७ ]

**प्रलय इति** प्रकर्षेण प्राणनिलीनेष्विन्द्रियेषु लयः प्रलयः। यथा— 'तीव्राभिषङ्गप्रभवेण–' इति।

**तस्येति**। प्राणस्य।

**मन्देति**। प्राणस्य मन्दावेशाद्रोमाञ्चो यथा—
तद्वक्त्राभिमुखं मुखं विनमितं दृष्टिः कृता पादयोः
तस्यालापकुतूहलाकुलतरे श्रोत्रे निरुद्धे मया।
पाणिभ्यां च तिरस्कृतः सपुलकः स्वेदोद्गमो गण्डयोः
सख्यः किं करवाणि यान्ति शतधा यत्कञ्चुके संधयः ॥१७४॥
[ अ. श. श्लो. ११ ]

मध्यावेशाद्वेपथुर्यथा—
मा गर्वमुद्वह कपोलतले चकास्ति
कान्तस्वहस्तलिखिता मम मञ्जरीति।
अन्यापि किं सखि न भाजनमीदृशानां
वैरी न चेद्भवति वेपथुरन्तरायः ॥ १७५ ॥
[ ]

उत्कृष्टावेशात्**स्वरभेदो** यथा—'याते द्वारमतीम्—' इति ॥

---

1. A. साकारविसारणाय B. कारविसारणाय

बाह्यास्तु स्तम्भादयः शरीरधर्मा अनुभावाः । ते चान्तरालिकान्सात्त्विकान्भावान्गमयन्तः परमार्थतो रतिनिर्वेदादिगमका इति स्थितम् । एवं च नवस्थायिनस्त्रयस्त्रिंशद्व्यभिचारिणोऽष्टौ सात्त्विका इति पञ्चाशद्भावाः ।

रसभावानभिधाय तदाभासानाह—

**८०) निरिन्द्रियेषु तिर्यगादिषु चारोपाद्रसभावाभासौ ।५४।** ५

निरिन्द्रिययोः संभोगारोपणात्संभोगाभासो यथा—

पर्याप्तपुष्पस्तबकस्तनीभ्यः स्फुरत्प्रवालौष्ठमनोहराभ्यः ।
लतावधूभ्यस्तरवोऽप्यवापुर्विनम्रशाखाभुजबन्धनानि ॥ १९७ ॥

[ ]

एते च सात्त्विकाः प्रतिरसं संभवन्तीति राजानुगतविवाहप्रवृत्तभृत्यन्यायेनापि व्यभिचारिवन्न स्वातन्त्र्यगन्धमपि भजन्त इति सुलभोदाहरणत्वाच्च वृत्तौ —उदाहरणानि न प्रदर्शितानि ॥ १०

**रसाभास इति ।** परस्परास्थाबन्धात्मिकाया हि रतेः शृङ्गारत्वमुक्तम् । अत्र तु कामनाभिलाषमात्ररूपा रतिर्व्यभिचारिभावो न स्थायी । तस्य तु स्थायिकल्पत्वेनाभाति । अतश्च स्थाय्याभासत्वं रतेः । यतो रावणस्य सीता द्विष्टा मय्युपेक्षिका चेति हृदयं नैव स्पृशति । तत्स्पर्शे ह्यभिमानोऽस्य लीयेतैव, मयीयं रक्तेति तु निश्चयोऽप्यनुपयोगी कामजमोहसारत्वात्, शुक्तौ रूप्याभासवत् । तस्माद्विभावाद्याभासाद्रत्याभासे प्रतीते चर्वणाभाससारः शृङ्गाराभास इति । १५

एवं हास्याभासो यथा—

लोकोत्तराणि चरितानि न लोक एष
संमन्यते यदि किमङ्ग वदाम नाम ।
यस्त्वत्तु हासमुखरत्वममुष्य तेन
पार्श्वोपपीडमिह को न विजाहसीति ॥ १७६ ॥ २०

[ ]

अत्र यदभिनन्दनीयेऽपि वस्तुनि लोकस्य हासमुखरत्वं स हास्याभासः । [1] किंशब्दवाच्यस्य तु [2] हास्यत्वमेव । एवं रसान्तरेषूदाहार्यमिति । २५

1. C. किंशब्दस्य वाच्यस्य तु एवं रसान्तरे° 2. A. हास्य एव

विप्रलम्भारोपणाद्विप्रलम्भाभासो यथा—

वेणीभूतप्रतनुसलिला तामतीतस्य सिन्धुः
पाण्डुच्छाया तटरुहतरुभ्रंशिभिः शीर्णपर्णैः ।
सौभाग्यं ते सुभग विरहावस्थया व्यञ्जयन्ती
५ कार्श्यं येन त्यजति विधिना स त्वयैवोपपाद्यः ॥ १५८ ॥
[ मे. दू. पू. श्लो. २९ ]

भावाभासो यथा—

गुरुगर्भभरक्लान्ताः स्तनन्त्यो मेघपङ्क्तयः ।
अचलाधित्यकोत्सङ्गमिमाः समधिशेरते ॥ १५९ ॥
१० [ ]

तिरश्चोः संभोगाभासो यथा—

मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः ।
शृङ्गेण संस्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः ॥१६०॥
[ कु. सं. स. ३. श्लो. ३६ ]

१५ यथा च—

ददौ सरः पङ्कजरेणुगन्धि गजाय गण्डूषजलं करेणुः ।
अर्धोपभुक्तेन बिसेन जायां संभावयामास रथाङ्गनामा ॥१६१॥
[ कु. सं. स. ३. श्लो. ३७ ]

विप्रलम्भाभासो यथा—

२० आपृष्टासि व्यथयति मनो दुर्बला वासरश्री-
रेह्यालिङ्ग क्षपय रजनीमेकिका चक्रवाकि ।
नान्यासक्तो न खलु कुपितो नानुरागच्युतो वा
दैवाशक्तस्तदिह भवतीमस्वतन्त्रस्त्यजामि ॥१६२॥
[ ]

२५ यथा वा—

नान्तर्वर्तयति ध्वनत्सु जलदेष्वामन्द्रमुद्गर्जितं
नासन्नात्सरसः करोति कवलानावर्जितैः शैवलैः ।

दानास्वादिनिषण्णमूकमधुपव्यासङ्गदीनाननो
नूनं प्राणसमावियोगविधुरः स्तम्बेरमस्ताम्यति ॥१६३॥
[ ]

भावाभासो यथा—

त्वत्कटाक्षावलीलीलां विलोक्य सहसा प्रिये ।
वनं प्रयात्यसौ व्रीडाजडदृष्टिर्मृगीजनः ॥१६४॥
[ ]

आदिशब्दान्निशाचन्द्रमसोर्नायकत्वाध्यारोपात् संभोगाभासो यथा—

अङ्गुलीभिरिव केशसंचयं सन्निगृह्य तिमिरं मरीचिभिः ।
कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ॥१६५॥
[ कु. सं. स. ८. श्लो. ६३ ]

भावाभासो यथा—

त्वदीयं मुखमालोक्य लज्जमानो निशाकरः ।
मन्ये घनघटान्तर्धिं समाश्रयति सत्वरः ॥१६६॥
[ ]

रसाभासस्य भावाभासस्य[1] च समासोक्त्यर्थान्तरन्यासोत्प्रेक्षारूपकोपमाश्लेषादयो जीवितम् ।

**८१) अनौचित्याच्च ॥५५॥**

अन्योन्यानुरागाद्यभावेनानौचित्याद्रसभावाभासौ । रसाभासो यथा—

दूराकर्षणमोहमन्त्र इव मे तन्नाम्नि याते श्रुतिं
चेतःकालकलामपि प्रसहते नावस्थितिं तां विना ।
एतैराकुलितस्य विक्षतरतेरङ्गैरनङ्गातुरैः
संपद्येत कथं तदाप्ति सुखमित्येतन्न वेद्मि स्फुटम् ॥१६७॥
[ ]

1. P. drops भावाभासस्य

अत्र सीताया रावणं प्रति रत्यभावाद्रसाभासः ।

यथा वा—

स्तुमः कं वामाक्षि क्षणमपि विना यन्न रमसे
विलेभे कः प्राणान्रणमखमुखे यं मृगयसे ।
५ सुलग्ने को जातः शशिमुखि यमालिङ्गसि बलात्
तपःश्रीः कस्यैषा मदननगरि ध्यायसि तु यम् ॥१६८॥
[ ]

अत्रानेककामुकविषयमभिलाषस्तस्याः स्तुम इत्याद्यनुगतं बहुव्यापारोपादानं व्यनक्ति ।

१० भावाभासो यथा—

निर्माल्यं नयनश्रियः कुवलयं वक्त्रस्य दासः शशी
कान्तिः प्रावरणं तनोर्मधुमुचो यस्याश्च वाचः किल ।
विंशत्या रचिताञ्जलिः करतलैस्त्वां याचते रावण-
स्तां द्रष्टुं जनकात्मजां हृदय हे नेत्राणि मित्रीकुरु ॥१६९॥
१५ [ ]

अत्रौत्सुक्यम् ॥

काव्यस्य लक्षणमुक्त्वा भेदानाह—

**८२) व्यङ्ग्यस्य प्राधान्ये काव्यमुत्तमम् ॥५६॥**

वाच्यादर्थाद् व्यङ्ग्यस्य वस्त्वलङ्काररसादिरूपस्य प्राधान्य उत्तमं

२० काव्यम्[1] । यथा—

वल्मीकः किमुतोद्धृतो गिरिरियत्कस्य स्पृशेदाशयं
त्रैलोक्यं तपसा जितं यदि मदो दोष्णां किमेतावता ।
सर्वं साध्वथ वा रुणत्सि विरहक्षामस्य रामस्य चेत्
त्वद्दन्ताङ्कितवालिकक्षरुधिरक्लिन्नाग्रपुङ्खं शरम् ॥१७०॥
२५ [ ]

1. I. काव्यमुत्तमम्

अत्र दन्ताङ्कितपदेन तदवजयस्तत्कक्षपरिग्रहस्तथैव[1] चतुर्णवभ्रमणं पुनः कृपामात्रेण त्यागस्तत्राप्रतीकारः पुनरप्यभिमानदर्प इत्यादि व्यज्यते ।

---

**दन्ताङ्कितपदेनेति** । वस्तुस्वभावेन ।

**अभिमानदर्प इत्यादीति** । वस्त्वित्यर्थः । ५

एवमलङ्कारे रसादौ च प्राधान्येन व्यङ्ग्ये काव्यस्योत्तमत्वं विज्ञेयम् । तद्यथा—

लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन्
स्मेरेऽधुना तव मुखे तरलायताक्षि ।
क्षोभं यदेति न मनागपि तेन मन्ये १०
सुव्यक्तमेव जलराशिरयं पयोधिः ॥ १७७ ॥

[ सुभाषितावली. २०३१ जयवर्धनस्य ]

अत्र रूपकालङ्कारो व्यङ्ग्यः । तथा हि । लावण्यं संस्थानमुग्धिमा, कान्तिः प्रभा, ताभ्यां परिपूरितानि संविभक्तानि हृद्यानि संपादितानि दिङ्मुखानि येन । अधुना कोपकषायकालुष्यादनन्तरं प्रसादौन्मुख्येन स्मेरे ईषद्विहसनशीले तरलायते १५ प्रसादान्दोलनविकाससुन्दरे अक्षिणी यस्यास्तस्या आमन्त्रणम् । अथ चाधुना कोपादनन्तरं प्रसादोदये न एति, वृत्ते तु क्षणान्तरे क्षोभमगमत्[2] । कोपकषायपाटलस्मेरं च तव मुखं संध्यारुणपूर्णशशधरमण्डलमेवेति भाव्यम्, क्षोभेण चलितचित्तवृत्तितया सहृदयस्य न चैति तत्सुव्यक्तमन्वर्थतयायं जलराशिर्जाड्यसंचयः । जलादयः शब्दा भावार्थप्रधाना इत्युक्तं प्राक् । अत्र क्षोभो मदन- २० विकारात्मा सहृदयस्य त्वन्मुखावलोकने भवतीति इयताभिधाया[3] विश्रान्तत्वाद्रूपकं व्यङ्ग्यमेव । तदाश्रयेण च काव्यस्य चारुत्वं व्यवतिष्ठत इति तस्यैव प्राधान्यम् ।

रसप्राधान्ये यथा—

कृच्छ्रेणोरुयुगं व्यतीत्य सुचिरं भ्रान्त्वा नितम्बस्थले
मध्येऽस्यास्त्रिवलीतरङ्गविषमे निस्पन्दतामागता । २५
मद्दृष्टिस्तृषितेव संप्रति शनैरारुह्य तुङ्गौ स्तनौ
साकाङ्क्षं मुहुरीक्षते जललवप्रस्यन्दिनी लोचने ॥ १७८ ॥

[ र. अं. २ श्लो. ३० ]

---

1 P. कक्षा 2 A. B. °भगमनं 3 A. B. °भिधायां

**८३) असत्संदिग्धतुल्यप्राधान्ये मध्यमं त्रेधा ॥५७॥**

असति संदिग्धे तुल्ये च प्राधान्ये व्यङ्ग्यस्य मध्यमं काव्यम्। तत्रासत्प्राधान्यं क्वचिद्वाच्यादनुत्कर्षेण यथा—

वाणीरकुडंगुड्डीणसउणिकोलाहलं सुणंतीए ।
५ घरकम्मवावडाए वहूए सीयंति अंगाइं ॥१७१॥

[ स. श. ८७४ ]

अत्र 'दत्तसंकेतः कश्चिल्लतागहनं प्रविष्टः' इति व्यङ्ग्यात्[1] 'सीदन्त्यङ्गानि' इति वाच्यमेव सातिशयम् ।

क्वचित्पराङ्गत्वेन यथा—

१० अयं स रसनोत्कर्षी पीनस्तनविमर्दनः
नाभ्यूरुजघनस्पर्शी नीवीविश्रंसनः करः ॥१७२॥

[ म. भ. स्त्री. प. अ. २४ श्लो. १९ ]

---

अत्र हि नायिकाकारानुवर्त्यमानस्वात्मप्रतिकृतिपविचित्रितचित्रफलहकालोकनाद् वत्सराजस्य परस्पराख्याबन्धरूपो रतिस्थायिभावो विभावानुभावसंयोजनावशेन चर्वणा-[2]
१५ मारूढ इति प्राधान्येनात्र रसो व्यङ्ग्यः । एवं भावतदाभासादीनामुत्तमकाव्यप्रभेदतयोदाहरणानि ज्ञेयानीति ।

**सातिशयमिति** । तथा हि । गृहकर्मव्यापृताया इत्यन्यपराया अपि । वध्वा इति सातिशयलज्जा पारतन्त्र्यबद्धाया अपि । अङ्गानीत्येकमपि न तादृशमङ्गं यद्गाम्भीर्यावहित्थवशेन संवरीतुं पारितम् । सीदन्तीत्यास्तां गृहकर्मसंपादनं
२० स्वात्मानमपि धर्तुं न प्रभवन्ति । गृहकर्मयोगे च स्फुटं लक्ष्यमाणानीति अस्माद्वाच्यादेव सातिशयमदनपरवशताप्रतीतिरित्यर्थः ।

**पराङ्गत्वेनेति** । परस्य रसभावतदाभासभावप्रशमभावोदयभावसंधिभावशबलतारूपस्य वाच्यस्य वाक्यार्थीभूतस्य अङ्गं रसादिवस्त्वलङ्काररूपं वा व्यङ्ग्यं तस्य भावस्तत्त्वम् । तेनेति रसेन ।

२५ **रसनोत्कर्षीति** । रसनां मेखलां संभोगावसरे ऊर्ध्वं कर्षतीति ।

---

1. I. वाक्यात् 2. C. चर्वणा इति मारूढ इति

अत्र शृङ्गारः करुणस्याङ्गम् ।

---

**शृङ्गार इति ।** समरभुवि पतितकरावलोकनेन प्राक्तनसंभोगवृत्तान्तः स्मर्यमाण इदानीं विध्वस्ततया यतः शोकविभावतां प्रतिपद्यते, अतः करुणस्याङ्गतां याति । यथा च—

तव शतपत्रपत्र[1]मृदुताम्रतलश्चरणश्चलकलहंसनूपुरकलध्वनिना मुखरः ।   ५
महिषमहासुरस्य शिरसि प्रसभं निहितः कनकमहामहीध्रगुरुतां कथमम्ब गतः।।१७९

[ ]

अत्र वितर्कविस्मयादयो भावा देवताविषयाया रतेरङ्गम् । यथा च—

समस्तगुणसंपदः सममलङ्क्रियाणां गणै-
र्भवन्ति यदि भूषणं तव तथापि नो शोभसे ।   १०
शिवं हृदयवल्लभे यदि यथा तथा रञ्जये
तदेव ननु वाणि ते जगति सर्वलोकोत्तरम् ॥ १८० ॥

अत्र शृङ्गाराभासो भावस्याङ्गम् । यथा च—

अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः ।
ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात् ॥ १८१ ॥   १५

[ ]

अत्र राजविषयस्य रतिभावस्य भावप्रशमोऽङ्गम् ।

साकं कुरङ्गकदृशा मधुपानलीलां
कर्तुं सुहृद्भिरपि वैरिणि ते प्रवृत्ते ।
अन्याभिधायि तव नाम विभो गृहीतं   २०
केनापि तत्र विषमामकरोदवस्थाम् ॥ १८२ ॥

[ ]

अत्र त्रासस्योदयः ।

असोढा तत्कालोल्लसदसहभावस्य तपसः
कथानां विस्रम्भेष्वथ च रसिकः शैलदुहितुः ।   २५
प्रमोदं वो दिश्यात्कपटबटुवेषापनयने
त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः ॥ १८३ ॥

[ ]

अत्रावेगधैर्ययोः संधिः ।

पश्येत्कश्चिच्चल चपल रे का त्वराहं कुमारी   ३०
हस्तालम्बं वितर हहहा व्युत्क्रमः क्वासि यासि ।

---

1. A. drops one पत्र

यथा च—

जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया
वचो वैदेहीति प्रतिदिशमुदश्रु[1] प्रलपितम् ।
कृता लंकाभर्तुर्वदनपरिपाटीषु घटना
५ मयाप्तं रामत्वं कुशलवसुता नत्वधिगता ॥१७३॥
[ सुभाषितावली. ३२६४ ]

अत्र व्यङ्ग्य उपमानोपमेयभावो रामत्वमिति वाच्यस्याङ्गतां नीतः।

यथा वा—

भ्रमिमरतिमलसहृदयतां प्रलयं मूर्च्छां तमः शरीरसादम् ।
१० मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम् ॥१७४॥
[ ]

---

इत्थं पृथ्वीपरिवृढ भवद्विद्विषोऽरण्यवृत्तेः
कन्या कश्चित्फलकिसलयान्याददानाभिधत्ते ॥ १८४ ॥
[ ]

१५ अत्र शङ्कासूयाधृतिस्मृतिश्रमदैन्यविबोधौत्सुक्यानां शबलता । एते च रसवदाद्यलङ्काराः । यद्यपि भावोदयसंधिशबलत्वानि नालङ्कारतयोक्तानि तथापि कश्चिद्ब्रूयादित्येवमुक्तम् ।

इदानीं वाच्यं प्रत्यलङ्कारस्य व्यङ्ग्यस्याङ्गतामाह—

**यथा चेति** । **जनस्थाने इति** । जनानां स्थानम्, दण्डकारण्यं च । २० कनकमृगतृष्णा, भ्रान्तिश्च । वैदेही सीता, वै देहि इति पदद्वयं च । लङ्काभर्तुः रावणस्य, अलमीषद्रूपत्वात्कुत्सितस्य भर्तुश्च । वदनेषु दशसु । इषुघटना शरयोजना, विचित्रोक्तिपरम्परासु च । कुशलवौ सुतौ यस्याः सा सीता, शुभधनता च ।

**प्रलयेति** । प्रलय इन्द्रियाणामल्पं सामर्थ्यम् । **मूर्छा** मनस इन्द्रियाणां २५ च शक्तिनिरोधः । **तमः**–सत्येव तमसि[2] इन्द्रियाणामशक्तिः । **मरणमिति** । प्राणत्यागकर्तृतात्मिका पूर्वक्रियैव च पाशबन्धाद्यवसरगता मरणशब्देनात्र विवक्षिता । विषमिति जलं कालकूटं च ।

---

1. I. L. प्रतिपदमु°

2. C. सत्येव मनसि; A. B. सत्येव मतसि. Obviously the correct reading is सत्येव तमसि. म and त have interchanged their places.

अत्र हालाहलं वस्तु व्यङ्ग्यं भुजगरूपणलक्षणस्य वाच्यस्याङ्गम् ।

क्वचिदस्फुटत्वेन यथा-

अहयं उज्जुअरूआ[1] तस्स वि उम्मन्थराइं पिम्माइं ।

सहिआअणो अ निउणो अलाहि किं पायराएण ॥१७५॥

[ गा. स. २. २७; स. श. १२७ ] ५

अत्र स मां पुरुषायितेऽर्थयते, अहं च निषेद्धुमशक्ता[2], तत्सख्यः पादमुद्रया तर्कयित्वा मा मां हसिषुरिति[3] व्यङ्ग्यमस्फुटम् ।

क्वचिदतिस्फुटत्वेन यथा—

श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरितानाम् ।

उपदिशति कामिनीनां यौवनमद एव ललितानि ॥१७६॥ १०

[ सुभा. २८५४ रविगुप्त. ]

अत्राप्रयासेन शिक्षादानलक्षणं वस्तु व्यङ्ग्यमतिस्फुटत्वेन प्रतीयमानमसत्प्राधान्यमेव कामिनीकुचकलशवत्तद्गूढं चमत्करोति नागूढम् ।

संदिग्धप्राधान्ये यथा—

महिलासहस्सभरिए तुह हिअए सुहय सा अमायन्ती । १५

अणुदिणमणण्णकम्मा अंगं तणुयं पि तणुएइ ॥१७७॥

[ गा. स. २-८२. स. श. १८२ ]

---

**गूढमिति** । यथा—

मुखं विकसितस्मितं वशितवक्रिम प्रेक्षितं

समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः । २०

उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरं

बतेन्दुवदनातनौ[4] तरुणिमोद्गमो मोदते ॥ १८५ ॥

[ ]

अत्र विकसितशब्देन बाधितव्याकोशात्मकमुख्यार्थेन सच्छायत्वप्रसरणादिसादृश्यात् स्मितं लक्षयता हृद्यत्वसुरभित्वबहुमानास्पदत्वनित्यसुलभत्वादिधर्मसहस्रं २५

---

1. I. उज्जुअरूया 2. I. न शक्ता 3. I. L. हासिषुः

4. A. B. तवेन्दु

अत्र अङ्गं तनुकमपि तनूकरोतीति किं वाच्यम्, किं वा तनूभावप्रकर्षाधिरोहेण यावदत्याहितं नाप्नोति तावदुज्झित्वा दौर्जन्यं सानुनीयतामिति व्यङ्ग्यं प्रधानमिति संदिग्धम्।

तुल्यप्राधान्ये यथा—'ब्राह्मणातिक्रम' इति। अत्र जामदग्न्यः ५ सर्वेषां क्षत्राणामिव रक्षसां क्षयं करिष्यतीति व्यङ्ग्यस्य वाच्यस्य च समं प्राधान्यम्।

यथा वा—

> पङ्क्तौ विशन्तु गणिताः प्रतिलोमवृत्त्या
>
> पूर्वे भवेयुरियताप्यथवा त्रपेरन्।

---

१० ध्वन्यते। वशितशब्देन निश्चेतने वक्रिमणि असंभवत्पारतन्त्र्यात्मकस्वार्थेन किंकरत्वतन्मुखप्रेक्षित्वादिसादृश्याद्वक्रिमाणं लक्षयता एकान्ततस्तदनुसरणं न कदाचिदप्यन्यत्र सद्भावः स्वेच्छया यत्रकुत्रचिदविचरणमित्यादि ध्वन्यते। समुच्छलितशब्देनानुपपद्यमानसामस्त्योर्ध्वललनात्मकस्वार्थेनाकस्मादुत्कल्लोलीभवनसादृश्याद्विभ्रमं[1] लक्षयता प्रौढप्रौढतरत्वबद्धास्पदत्वसर्वजनाभिलषणीयत्वादि ध्वन्यते। १५ अपास्तशब्देनामूर्त्तायां मत्याश्रितमर्यादायामसंभवदपक्षेपणात्मकस्वार्थेन स्वत्वनिवृत्तिसादृश्यात्संस्थां लक्षयता पुनरस्वीकारानवलोकादि ध्वन्यते। मुकुलितशब्देनासंभवत्कोरकात्मकस्वार्थेनाभिनवोद्भेदसादृश्यात्स्तनयुग्मं लक्षयता स्पृहणीयत्वरामणीयकास्पदत्वमनोभवसमुद्दीपकत्वादि ध्वन्यते। उद्धुरशब्देन बाधितधुरौन्मुख्यस्वार्थेनोच्चैस्त्वत्सादृश्यादसंबन्धवज्जघनं लक्षयतोपचितत्वस्पृहणीयत्वमनोभवनिकेतनत्वादि ध्वन्यते। इन्दुवदनेत्यत्र यद्युपचारस्तदा इन्दुशब्देन बाधित- २० स्वार्थेन पारिमाण्डल्यादिसादृश्याद्वदनं लक्षयता जगज्जीवपितृत्वादि ध्वन्यते। उद्गमशब्देन बाधितोदयात्मकस्वार्थेनाभिनवोद्भेदसादृश्यात्तरुणिमानं लक्षयता स्पृहणीयत्वादि ध्वन्यते। मोदते शब्देन बाधितहर्षात्मकमुख्यार्थेनार्द्रवितर्दैकत्वसादृश्यादुद्गमं[2] लक्षयता उच्छृङ्खलत्वस्पृहणीयत्वादि ध्वन्यते।

---

1. Here a few lines in B are not legible. A numbei of words are omitted.

2 A. B. C. नादर्द्रवित॰

सन्तोऽप्यसन्त इति चेत्प्रतिभान्ति भानो-
भसावृते नभसि शीतमयूखमुख्याः ॥१७८॥
[ भल्लट श. ११ ]

अत्र प्राकरणिकाप्राकरणिकयोः समं प्राधान्यम् । यथ वा—

मथ्नामि कौरवशतं समरे न कोपा- ५
दुःशासनस्य रुधिरं न पिबाम्युरस्तः ।
संचूर्णयामि गदया न सुयोधनोरू
सन्धिं करोतु भवतां नृपतिः पणेन ॥१७९॥
[ वे. सं. अं. १. श्लो. १५ ]

अत्र मथ्नाम्येवेत्यादि व्यङ्ग्यं वाच्यतुल्यभावेन स्थितम् । इति १० त्रयो मध्यमकाव्यभेदा न त्वष्टौ ।

८४) अव्यङ्ग्यमवरम् ॥५८॥

शब्दार्थवैचित्र्यमात्रं व्यङ्ग्यरहितं अवरं काव्यम् । यथा—

अघौघं नो नृसिंहस्य घनाघनघनध्वनिः ।
हताद्[1] द्रचुरुघुराघोषः सुदीर्घो घोरघर्घरः ॥१८०॥ १५
[ ]

यथा च—

ते दृष्टिमात्रपतिता अपि कस्य[2] नात्र
क्षोभाय पक्ष्मलदृशामलकाः खलाश्च ।

---

न त्वष्टाविति । यथाह मम्मटः—

(52) अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम् । २०
संदिग्धतुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम् ।
व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याष्टौ भिदाः स्मृताः ॥ इति ॥
[ का. प्र. उ. ५. का. ४५, ४६ ]

---

1. L. हताधुरु° N. हताद्धुरु 2. I. नाभ कस्य

नीचाः सदैव सविलासमलीकलग्ना
ये कालतां कुटिलतामिव न त्यजन्ति ॥१८१॥

[ ]

यद्यपि सर्वत्र काव्येऽन्ततो विभावादिरूपतया रसपर्यवसानम्, तथापि स्फुटस्य रसस्यानुपलम्भादव्यङ्ग्यमेतत्काव्यमुक्तम् ।

इत्याचार्य[1]श्रीहेमचन्द्रविरचितायामलङ्कारचूडामणिसंज्ञस्वोपज्ञकाव्यानुशासनवृत्तौ रसभावतदाभासकाव्यभेदप्रतिपादनो द्वितीयोऽध्यायः ॥

---

ननु यत्र रसादीनामविषयः स काव्यप्रकारोऽपि न भवत्येव । यस्माद्वस्तुसंस्पर्शिता काव्यस्य तावन्नोपपद्यते । वस्तु च सर्वमेव जगद्गतमवश्यं कस्यचिद्रसस्य भावस्य वाङ्गत्वं प्रतिपद्यते । अन्ततो विभावत्वेन चित्तवृत्तिविशेषा हि रसादयः । न च तदस्ति वस्तु यन्न कञ्चित् चित्तवृत्तिविशेषमुपजनयति । तदनुत्पादने वा कविविषयतैव तस्य न स्यादित्याशङ्क्याह—**यद्यपीति** ॥

इति । **आचार्यश्रीहेमचन्द्र**विरचिते **विवेके** द्वितीयोऽध्यायः ।

---

1. I. omits श्री.

## तृतीयोऽध्यायः

अदोषौ शब्दार्थौ काव्यमित्युक्तम् । तत्र दोषाणां रसापकर्षहेतुत्वं सामान्यलक्षणमुक्तम् । विशेषलक्षणमाह—

**८५) रसादेः स्वशब्दोक्तिः क्वचित्सञ्चारिवर्जं दोषः ॥१॥**

रसस्थायिव्यभिचारिणां स्वशब्देन वाच्यत्वं दोषः । सञ्चारिणस्तु क्वचित्स्वशब्दाभिधानेऽपि न दोषः । तत्र रसस्य स्वशब्देन शृङ्गारादिना चाभिधानं यथा—

श्रृङ्गारी गिरिजानने सकरुणो रत्यां प्रवीरः स्मरे
बीभत्सोऽस्थिभिरुत्फणी च भयकृन्मूर्त्याद्भुतस्तुङ्गया
रौद्रो दक्षविमर्दने च हसकृन्नग्नः प्रशान्तश्चिरा-
दित्थं सर्वरसात्मकः पशुपतिर्भूयात्सतां भूतये ॥१८२॥

[ श्रृङ्गारतिलक. प. १. श्लो. १ ]

स्थायिभावानां यथा—

**वाच्यत्वमिति** । वाच्यत्वं हि रसादीनां स्वशब्दनिवेदितत्वेन वा स्याद्विभावादिप्रतिपादनमुखेन वा । पूर्वस्मिन् पक्षे स्वशब्दनिवेदितत्वाभावे रसादीनामप्रतीतिप्रसङ्गः । न च सर्वत्रैतेषां स्वशब्दनिवेद्यत्वं यथा–'यद्विश्रम्य'–इति । अत्रानुभावविभावबोधानन्तरमेव तन्मयीभवनयुक्त्या तद्विभावानुभावोचितचित्तवृत्तिवासनारञ्जितस्वसंविदानन्दचर्वणागोचरोऽर्थात्माऽभिलाषचिन्तौत्सुक्यनिद्राधृतिग्लान्यालस्यश्रमस्मृतिवितर्कादिशब्दाभावेऽपि स्फुरत्येव । न च केवलशृङ्गारादिशब्दमात्रभाजि विभावादिप्रतिपादनरहिते काव्ये मनागपि रसवत्त्वप्रतीतिरस्ति । यथा—' शृङ्गारहास्यकरुणा '— इत्यादौ । तस्मादन्वयव्यतिरेकाभ्यामभिधेयसामर्थ्याक्षिप्तत्वमेव रसादीनाम् । न त्वभिधेयत्वं कथञ्चिदिति स्वशब्दोक्तिर्दोष इत्यर्थः । द्वितीयश्च पक्षोऽस्माकमप्यभिमत एव । एतेन—

(53) रसवद्दर्शितस्पष्टशृङ्गारादिरसोदयम् ।
स्वशब्दस्थायिसंचारिविभावाभिनयास्पदम् ॥

[ का. लं. सं. वर्ग ४. का. ३; भामह का. लं. प. ३. श्लो. ६. a. ]

इत्येतद्व्याख्यानावसरे यद् **भट्टोद्भटेन** ' पञ्चरूपा रसाः ' इत्युपक्रम्य तत्र ' स्वशब्दाः शृङ्गारादेर्वाचकाः शृङ्गारादयः शब्दा ' इत्युक्तम् , तत्प्रतिक्षिप्तम् ।

संप्रहारे प्रहरणैः प्रहाराणां परस्परं ।
छणत्कारैः[1] श्रुतिगतैरुत्साहस्तस्य[2] कोऽप्यभूत् ॥ १८३ ॥
[ ]

अत्रोत्साहस्य स्थायिनः ।

यत्रापि स्वशब्देन निवेदितत्वमस्ति तत्रापि विशिष्टविभावादि-
५ प्रतिपादनमुखेनैव रसादीनां प्रतीतिः, स्वशब्देन सा केवलमनूद्यते । यथा 'याते द्वारवतीम्' इत्यादि । अत्र विभावानुभावबलादुत्कण्ठा प्रतीयत एव । सोत्कण्ठ–शब्दः केवलं सिद्धं साधयति । उत्कमित्यनेन तूक्तानुभावाकर्षणं कर्तुं सोत्कण्ठशब्दः प्रयुक्त इत्यनुवादोऽपि नानर्थकः । व्यभिचारिणां यथा—

१० सव्रीडा दयितानने सकरुणा मातङ्गचर्माम्बरे
सत्रासा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि ।
सेर्ष्या जह्नुसुतावलोकनविधौ[3] दीना कपालोदरे
पार्वत्या नवसङ्गमप्रणयिनी दृष्टिः शिवायास्तु वः ॥१८४॥
[ सुभाषितावली ७८ ]

१५ अत्र व्रीडादीनाम् ।

क्वचित्सञ्चारिवर्जमिति वचनात्क्वचिन्न दोषो यथा—

औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः ।
दृष्ट्वाग्रे वरमात्तसाध्वसरसा गौरी नवे सङ्गमे
२० संरोहत्पुलका हरेण हसता श्लिष्टा शिवायास्तु वः ॥१८५॥
[ र. अं. १ श्लो. २ ]

---

**नानर्थक इति ।** शब्दोपात्तस्यैव ह्यनुवादो भवति न प्रतीयमानस्येत्यर्थः ।

---

1. I. P. छणक्कारै 2. I. °त्साहस्य 3. I सुताविलोकन

अत्रौत्सुक्यशब्द इव तदनुभावो न तथा प्रतीतिकृत् । अत एव 'दूरादुत्सुकम्' इत्यादौ व्रीडाद्यनुभावानां विवलितत्वादीनामिवौत्सुकत्वानुभावस्य सहसा प्रसरणादिरूपस्य तथा प्रतिपत्तिकारित्वाभावादुत्सुकमिति कृतम् ।

**८६) अबाध्यत्वे आश्रयैक्ये नैरन्तर्येऽनङ्गत्वे च विभावादिप्रातिकूल्यम् ॥ २ ॥**　५

अबाध्यत्वादिषु सत्सु विभावादिप्रातिकूल्यं[1] रसादेर्दोषः । यथा—

प्रसादे वर्तस्व[2] प्रकटय मुदं संत्यज रुषं
　प्रिये शुष्यन्त्यङ्गान्यमृतमिव ते[3] सिञ्चतु वचः ।
निधानं सौख्यानां क्षणमभिमुखं स्थापय मुखं　१०
　न मुग्धे प्रत्येतुं प्रभवति गतः कालहरिणः ॥ १८६ ॥

[ १६२९ सुभाषितावली. चन्द्रकस्य ]

अत्र कालहरिणश्चपलः[4] शीघ्रमेव प्रयाति न च पुनरागच्छतीत्यादिवैराग्यकथाभिः प्रियानुनयनं निर्विण्णस्येव कस्यचिदिति शृङ्गारप्रतिकूलस्य शान्तस्यानित्यताप्रकाशनरूपो विभावो निबद्ध इति विभावप्रातिकूल्यम्[5], तत्प्रकाशितो निर्वेदश्च स्वदत इति व्यभिचारिप्रातिकूल्योदाहरणमप्येतत् ।　१५

एवं शृङ्गारबीभत्सयोर्वीरभयानकयोः शान्तरौद्रयोरप्युदाहार्यम् । यथा च—

निहुयरमणम्मि लोअणपहम्मि[6] पडिए गुरूण मज्झम्मि ।　२०
सयलपरिहारहिअया वणगमणं चेव[7] महइ वहू ॥ १८७ ॥

[　　　　]

1. I. प्रातिकौलयम्　2. I. L. वर्तयस्व　3. I. मे
4. P. कालो हरिणचपलः　5. I, प्रातिकौलयम्　6. I. P. लोयणवहम्मि
7. P. L. चेअ, N. वेब

अत्र सकलपरिहारवनगमने शान्तानुभावौ । इन्धनाद्यानयनव्याजेनोपभोगार्थं वनगमनं चेन्न दोषः ।

अबाध्यत्वे-इति । अबाध्यत्वमशक्याभिभवत्वम् । तदभावे न केवलं न दोषो यावत्प्रकृतस्य रसस्य परिपोषः । यथा-'क्वाकार्यं शशलक्ष्मणः'[1] इत्यादि । अत्र वितर्कौत्सुक्ये मतिस्मरणे शङ्कादैन्ये धृतिचिन्तने परस्परबाध्यबाधकभावेन भवन्ती चिन्तायामेव पर्यवस्यन्ती परमास्वादस्थानम् ।

सत्यं मनोरमाः कामाः सत्यं रम्या विभूतयः ।
किन्तु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम् ॥ १८८ ॥
[ सुभाषितावली. श्लो. ३२६६ ]

अत्र त्वाद्यमर्धं बाध्यत्वेनैवोक्तम् ।' द्वितीयं तु प्रसिद्धास्थिरत्वापाङ्गभङ्गोपमानेन जीवितस्यास्थिरत्वं प्रतिपादयद् बाधकत्वेनोपात्तं शान्तमेव पुष्णाति, न पुनः शृङ्गारस्यात्र प्रतीतिः, तदङ्गस्याप्रतिपत्तेः । **ध्वनिकारस्तु—**

(14) विनेयानुन्मुखीकर्तुं काव्यशोभार्थमेव वा ।
तद्विरुद्धरसस्पर्शस्तदङ्गानां न दुष्यति ॥
[ ध्वन्या० उ. ३. कारिका ३० ]

इति विरोधपरिहारमाह ।

आश्रयैक्ये-इति । एकाश्रयत्वे दोषो भिन्नाश्रयत्वे तु वीरभयानकयोः परस्परविरुद्धयोरपि नायकप्रतिनायकगतत्वेन निवेशितयोर्न दोषः । यथा-अर्जुनचरिते—

समुत्थिते धनुर्ध्वनौ भयावहे किरीटिनः
महानुपप्लवोऽभवत् पुरे पुरन्दरद्विषाम् ।
श्रवेण तस्य तु ध्वनेर्विलुप्तमूलबन्धनं
अशेषदैत्ययोषितां श्लथीबभूव जीवितम् ॥ १८९ ॥

इत्यादि । [ अ. च. ]

1. I. adds क च कुलम्

नैरन्तर्ये–इति । एकाश्रयत्वेऽपि शान्तशृङ्गारयोः परस्परविरुद्ध-योर्निरन्तरत्वे दोषो न तु रसान्तरान्तरितयोः । यथा **नागानन्दे** शा-न्तरसस्य—

'अहो गीतमहो वादितम्' ॥ १९० ॥

[ नागा. अं. १. पृ. १० ] ५

इत्यद्भुतमन्तरे निवेश्य जीमूतवाहनस्य मलयवतीं प्रति शृङ्गारो निबद्धः ।

न केवलं प्रबन्धे यावदेकस्मिन्नपि वाक्ये रसान्तरव्यवधानाद्विरोधो निवर्तते । यथा—

भूरेणुदिग्धान्नवपारिजातमालारजोवासितबाहुमध्याः । १०
गाढं शिवाभिः परिरभ्यमाणान् सुराङ्गनाश्लिष्टभुजान्तरालाः ॥१९१॥
सशोणितैः क्रव्यभुजां स्फुरद्भिः पक्षैः खगानामुपवीज्यमानान् ।
संवीजिताश्चन्दनवारिसेकसुगन्धिभिः कल्पलतादुकूलैः ॥ १९२ ॥
विमानपर्यङ्कतले निषण्णाः कुतूहलाविष्टतया तदानीम् ।
निर्दिश्यमानाँ[1]ल्ललनाङ्गुलीभिर्वीराः स्वदेहान्पतितानपश्यन् ॥ १९३ ॥ १५

[ ]

अत्र बीभत्सशृङ्गारयोरन्तरा वीररसनिवेशान्न विरोधः । वीराः स्वदेहानित्यादिना उत्साहाद्यवगत्या कर्तृकर्मणोः समस्तवाक्यार्थानुया-

**शान्तरसस्येति** ।

रागस्यास्पदमित्यवैमि न हि मे ध्वंसीति न प्रत्ययः २०
कृत्याकृत्यविचारणासु विमुखं को वा न वेत्ति क्षितौ ।
इत्थं निन्द्यमपीदमिन्द्रियवशं प्रीत्यै भवेद्यौवनं
भक्त्या याति यदीत्थमेव पितरौ शुश्रूषमाणस्य मे ॥ १८६ ॥

[ नागा. अं. १. श्लो. ५. ]

इत्यादिनोपक्षेपात् प्रभृति परार्थशरीरवितरणात्मकनिर्वहणपर्यन्तं प्रतिपादितस्य । २५

1. I. L. P. °मानाल्ल°

यितया प्रतीतिरिति मध्यपाठाभावेऽपि सुतरां वीरस्य व्यवधायकता[1]। स्वदेहानित्यनेन चैकत्वाभिमानादाश्रयैक्यम्।

अनङ्गत्वे–इति। द्वयोर्विरुद्धयोरङ्गित्वे दोषः, नाङ्गभावप्राप्तौ। सा हि नैसर्गिकी समारोपकृता वा। तत्र येषां नैसर्गिकी तेषां ताव-
५ दुक्तावविरोध एव। यथा विप्रलम्भे तदङ्गानां व्याध्यादीनाम्। ते हि निरपेक्षभावतया सापेक्षभावविरोधिन्यपि करुणे सर्वथाङ्गत्वेन दृष्टाः। यथा–'भ्रमिमरतिमलसहृदयताम्' इत्यादि। समारोपितायामप्यदोषो यथा 'कोपात्कोमललोलबाहुलतिका' इत्यादि। अत्र बद्ध्वा हन्यत इति च रौद्रानुभावानां रूपकबलादारोपितानां तदनिर्वाहादेवाङ्गत्वम्। इयं चा-
१० ङ्गभावप्राप्तिरन्या।

यदाधिकारिकत्वात्प्रधान एकस्मिन् काव्यार्थे रसयोर्भावयोर्वा परस्परविरोधिनोरङ्गभावस्तत्रापि न दोषः। यथा—

क्षिप्तो हस्तावलग्नः प्रसभमभिहतो व्याददानोंऽशुकान्तं
गृह्णन्केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण।
१५ आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः सास्रनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः॥१९४॥
[अ. श. श्लो. २.]

अत्र त्रिपुररिपुप्रभावातिशयवर्णने प्रकृते करुण इव शृङ्गारोऽप्यङ्गमिति न[2] तयोर्विरोधः।

---

२० **एकत्वाभिमानादिति**। अन्यथा विभिन्नविषयत्वात्को विरोधः स्यादित्यर्थः। ननु वीर एवात्र रसो न शृङ्गारो न बीभत्सः किं तु रतिजुगुप्से वीरं प्रति व्यभिचारीभूते। भवत्वेवम्। तथापि प्रकृतोदाहरणता तावदुपपन्ना रतिजुगुप्सयोरपि हि न विरोधः।

**करुण इवेति**। तथा हि—हस्तावलग्नस्य वह्नेः क्षेपो विधूननं भय-
२५ हेतुकमिति करुणाङ्गम्। उपलालनाप्रवृत्तस्य तु वल्लभस्य करग्रहणासहनं क्षेपो

---

1. I. L. व्यवधायिकता 2. I. तयोर्न विरोधः

पराङ्गत्वेऽपि कथं विरोधिनोर्विरोधनिवृत्तिरिति चेत् ? उच्यते। विधौ विरुद्धसमावेशस्य दुष्टत्वं, नानुवादे । यथा—

एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर ।
एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः ॥ १९५ ॥

[ सुभाषितावली. ३१६८ व्यासमुनेः ]    ५

---

नायिकान्तरसम्पर्कसमुत्थेर्ष्याकोपनिमित्तो विप्रलम्भसंसूचकः । पटाञ्चलावलग्नस्य वह्नेः प्रसभाभिहननं दाहनिमित्तदुःखजनितमवधूननं जलादिप्रक्षेपरूपं चेति करुण-रसपरिपोषकम् । करावधूननेन करग्रहणासम्पत्तावञ्चलावलम्बिनो वल्लभस्य प्रस-भमभिहननमवताडनमसूयावशावज्ञानिमित्तं विप्रलम्भपरिपोषकम् । इतश्चेतश्च प्रवर्तमानस्य वह्नेः कबरीकलापासङ्गिनस्त्रासहेतुकः ससंभ्रमकरयुगलजनितः प्रक्षे-    १०
पोपासनमभिव्यञ्जकमिह करुणस्य । पटाञ्चलावताडनपूर्वकत्वरितगतिनायिकावेणी-लतावग्रहोपायहठचुम्बनप्रवृत्तवल्लभस्यापासनमपक्षेपणा[1] मयि निर्लज्ज तथा नाम व्यलीकशतानि कृत्वा सम्प्रतीत्थमाचरसीत्येवंरूपोपालम्भवचनादिमयं कृतककोप-वशामीर्ष्यारोषाभिव्यञ्जकम् । केशावलग्नस्य वह्नेः सेन्धनस्य प्रक्षेपे च संभ्रम-वशेनानालोचितदेशतया पादपतनमवज्वालितस्य वा सर्वतोदिक्कस्य पादाक्रमण-    १५
मिति तथाभूतस्य संभ्रमवशेनानिरीक्षणमनालोचनम् । वेल्लद्वेणीविलग्ननायकावलो-कनजनितरोषावेगारुणितनयनस्फुरिताधरसंरब्धकान्तादर्शननिश्चितमानग्रहणः प्रणा-मान्तो मान इति वल्लभः पादपतितो न विगणितस्तदपराधामुखीकरणविस्मृत-तदपराधया[2] नायिकया । वह्नयाक्रान्तपादतया पलायनासमर्थत्रिपुरनारीसमाश्लेष-कारी वह्निरितितीव्रतरावेगवशेन सर्वाङ्गप्रकम्पनेनावधूतः क्षिप्तो दुःसहदुःखावस्था-    २०
द्योतकः । पादपतनप्रसादितवल्लभालिङ्गनप्रवृत्तः[3] कान्तजनोऽसहनया दृढकोपनया झगिति प्रसादमव्रजन्त्या गर्वगरिममन्थरितयावधूतस्तदा मोटनेन निवारित इति संस्कारशेषेर्ष्याविप्रलम्भसंसूचनम् । अत एव परित्यक्तप्रायेर्ष्याकोपतया वल्लभ-कृतापराधानुस्मरणजनिताश्रुबाधाविलीकृतकुवलयदलसदृशलोचनतया शृङ्गारोद्दी-पनम् । वह्निदाहजनितवल्लभसुतादिविनाशानुस्मरणहेतुकदुःखसंभारवशोद्गताश्रु-    २५
प्रवाहविसंस्थुलीकृतसुन्दरतरनयनतया शोकावेगपोषणम् । आर्द्रापराधः प्रत्य-

---

1. C. °स्यापोसन° N, °स्यायासनमपक्षेपेण
2. A. B. तदुपरोधया 3. C. N. °दितवल्लभो वल्लभा°

न ह्यत्र विधिस्तदैव तदेव कुरु माकार्षीरितिवदेकदा प्राधान्य-लक्षणोऽपि त्वन्याङ्गतालक्षणाऽनुवादः[1] । एहीति क्रीडन्ति, गच्छेति क्रीडन्तीति क्रीडाङ्गयोरागमनगमनयोर्न विरोधः, न च रसेषु विध्यनुवा-दव्यवहारो नास्तीति शक्यं वक्तुम् । तेषां वाक्यार्थत्वेनाभ्युपगमात् ।
५ वाक्यार्थस्य च वाच्यस्य यौ विध्यनुवादौ तौ तदाक्षिप्तानां रसाना-मपि भवतः । अथवा त्रिपुररिपुप्रभावातिशयस्य करुणोऽङ्गम्, तस्य तु शृङ्गारस्तथापि न करुणे विश्रान्तिरिति तस्याङ्गतैव । अथवा प्राग्यथा

---

प्रप्रेमस्खलितादिप्रमादयुक्तः । अत एवेर्ष्याकोपनिमित्तता । वह्नेरपि प्रत्यग्रापरा-धता दाहजनिता तथा च शोकावेगहेतुता ।-इति सदृशार्थवाचकपदनिकुरुम्बजनि-
१० तरसद्वयप्रतीतिभूषितकाव्यार्थाभोगः सहृदयानां परं चमत्कारमावहतीति ।

**उच्यत इति** अयं भावः—सामग्रीविशेषपरिपतितत्वेन भावानां विरोधा-विरोधौ न स्वभावमात्रनिबन्धनौ, भिन्नदेशयोः शीतोष्णयोरपि विरोधाभावात् ।

ननु प्रधानतया यद्वाच्यं तत्र विधिः, अप्रधाने तु वाच्येऽनुवादः, न च रसस्य वाच्यत्वं सह्यत इत्याशङ्कमानः परिहरति—**न चेति** । प्रधाना-
१५ प्रधानत्वकृतौ विध्यनुवादौ, तौ च व्यङ्ग्यतायामपि भवत एवेति भावः । मुख्यतया च रस एव काव्यवाक्यानामर्थः । तेन यत्रामुख्यतया सोऽर्थस्तत्रानू-द्यमानत्वं रसस्यापि युक्तम् । यदि चानूद्यमानविभावादिसमाक्षिप्तत्वाद् रसस्या-नूद्यमानता ।

तदाह—**वाक्यार्थस्य चेति । अस्त्येवाविरोधित्वमिति** (पृ.१६७)।
२० अत्रायं भावः—पूर्वं पक्षद्वये विप्रलम्भकरुणयोरन्यत्राङ्गभावगमनान्निर्विरोधित्व-मुक्तम् । अधुना तु स विप्रलम्भः करुणस्यैवाङ्गतां प्रतिपन्नो न विरोधीति । तथा हि—करग्रहणासहनादिना ईर्ष्याविप्रलम्भवृत्तान्तः स्मर्यमाण इदानीं विध्वस्ततया शोकविभावतां प्रकृष्टां प्रतिपद्यत इति वाक्यार्थीभूतस्य करुणस्य विरोधिनापि शृङ्गारेण परिपोष एव विधीयते । परतस्तु शृङ्गारपोषितेन करुणेनात्र मुख्य
२५ एवार्थ उपोद्बल्यते । उक्तं हि—

(54) गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते ।
प्रधानस्योपकारे हि तथा भूयसि वर्तते ॥ इति ॥
[ ]

---

1. I. त्वन्योद्गता

कामुक आचरति स्म तथा शराग्निरिति स्मर्यमाणशृङ्गारेणेदानीं विध्वस्ततया शोकविभावतां प्रतिपद्यमानेन पोषितः करुणो रसः प्रधानमेव वाक्यार्थमभिधत्ते, यतः प्रकृतिरमणीयाः पदार्थाः शोचनीयतां प्राप्ताः प्रागवस्थाभाविभिः स्मर्यमाणैर्विलासैरधिकतरं शोकावेगमुपजनयन्ति । यथा–' अयं स रसनोत्कर्षी[1] ' इति । इदं हि भूरिश्रवसः समरभुवि पतितं बाहुं दृष्ट्वा तत्कान्तानामनुशोचनम् । तथात्रापि त्रिपुरयुवतीनाम् । शाम्भवः शराग्निरार्द्रापराधः कामी यथा व्यवहरति स्म तथा व्यवहृतवानित्यनेनापि प्रकारेणास्त्येवाविरोधित्वम् । एवं च

दन्तक्षतानि करजैश्च विपाटितानि
प्रोद्भिन्नसान्द्रपुलके भवतः शरीरे ।
दत्तानि रक्तमनसा मृगराजवध्वा
जातस्पृहैर्मुनिभिरप्यवलोकितानि ॥१९६॥

[ ]

इत्यादावपि शृङ्गारः शान्तस्याङ्गम् । तथा हि–यथा कश्चिन्मनोरथशतप्रार्थितप्रेयसीसंभोगावसरे जातपुलकस्तथा त्वं परार्थसम्पादनाय स्वशरीरदान इति शृङ्गारेण शान्त एव पोष्यत इति । यत्र तु न पोष्यते तत्रानङ्गत्वाद्दोष एव । यथा—

---

**दन्तक्षतानीति** । बोधिसत्त्वस्य सिंहीं स्वकिशोरभक्षणप्रवृत्तां प्रति निजशरीरं वितीर्णवतः केनचिच्चाटुकं क्रियते । प्रोद्भूतः सान्द्रः पुलकः परार्थसम्पत्तिजेनानन्दभरेण यत्र । रक्ते रुधिरे मनोभिलाषो यस्याः । अनुरक्तं च मनो यस्याः । मुनयश्चोद्बोधितमदनावेशाश्चेति विरोधः । जातस्पृहैरिति च वयमपि यदि कदाचिदेवं[2] कारुणिकपदवीमधिरोक्ष्यामस्तदा सत्यतो मुनयो भविष्याम इति मनोराज्ययुक्तैः ।

---

1. I. adds पीनस्तनविमर्दनः
2. A. °देवं

राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी ।
गन्धवद् रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥१९७॥
[ र. वं. स. ११ श्लो. २० ]

अत्र प्रकृतस्य करुणरसस्य विरुद्धः शृङ्गारो न पोषकः ।

५ **न पोषक इति** । अपि त्वङ्गितयैव प्रतिभासते । ननु यत्रैकतात्पर्येणेतरेषां विरुद्धानामविरुद्धानां च न्यग्भूतत्वेनोपादानं तत्र भवत्वङ्गत्वेनाविरोधः । यत्र तु समप्रधानत्वेनानेकस्य भावस्योपनिबन्धनं तत्र कथम् । यथा—

एकत्तो रुअइ पिआ अण्णत्तो समरतूरनिग्घोसो ।
नेहेण रणरसेण य भडस्स दोलाइयं हिअअम् ॥ १८७ ॥
१० [ ]

इत्यादौ रत्युत्साहयोः, ' मात्सर्यमुत्सार्य विचार्य कार्यम् '– इत्यादौ रतिशमयोः,

इयं सा लोलाक्षी त्रिभुवनललामैकवसतिः
स चायं दुष्टात्मा स्वसुरप्रकृतं येन मम तत् ।
१५ इतस्तीव्रः कामो गुरुरयमितः क्रोधदहनः
कृतो वेशश्चायं कथमिदमिति भ्राम्यति मनः ॥ १८८ ॥
[ ]

इत्यादौ रतिक्रोधयोः,

अन्त्रैः कल्पितमङ्गलप्रतिसराः स्त्रीहस्तरक्तोत्पल-
२० व्यक्तोत्तंसभृतः पिनह्य सरसा हृत्पुण्डरीकस्रजः ।
एताः शोणितपङ्ककुङ्कुमजुषः संभूय कान्तैः पिब-
न्त्यस्थिस्नेहसुरां कपालचषकैः प्रीताः पिशाचाङ्गनाः ॥१८९॥
[ मा. मा. अं. ५. श्लो. १८ ]

इत्यादौ रतिजुगुप्सयोः,

२५ एकं ध्याननिमीलनान्मुकुलितं चक्षुर्द्वितीयं पुनः
पार्वत्या वदनाम्बुजस्तनतटे शृङ्गारभारालसम् ।
अन्यद्दूरविकृष्टचापमदनक्रोधानलोद्दीपितं
शम्भोर्भिन्नरसं समाधिसमये नेत्रत्रयं पातु वः ॥ १९० ॥
[ ]

३० इत्यादौ शमरतिक्रोधानाम्,

८७) विभावानुभावक्लेशव्यक्तिपुनःपुनर्दीप्त्यकाण्डप्रथाच्छेदाङ्गातिविस्तराङ्ग्यननुसन्धानानङ्गाभिधानप्रकृतिव्यत्ययाश्च।३।

एते चाष्टौ रसस्य दोषाः । तत्र विभावानुभावयोः क्लेशव्यक्तिर्यथा—

परिहरति रतिं मतिं लुनीते स्खलतितरां परिवर्तते च भूयः । ५
इति बत विषमा दशास्य देहं परिभवति प्रसभं किमत्र कुर्मः ॥१९८॥
[ ]

---

एकेनाक्ष्णा प्रविततरुषा वीक्षते व्योमसंस्थं
भानोर्बिम्बं सजललुलितेनापरेणात्मकान्तम् ।
अह्नश्छेदे दयितविरहाशङ्किनी चक्रवाकी १०
द्वौ संकीर्णौ रचयति रसौ नर्तकीव प्रगल्भा ॥ १९१ ॥
[ सुभाषितावली १३१६. चन्द्रकस्य ]

इत्यादौ रतिशोकक्रोधानां समप्राधान्येनोपनिबन्धस्तत्र कथं न विरोधः । अत्रोच्यते—अत्राप्येक एव स्थायी । तथाहि—'एकत्तो[1] रुअइ पिआ—' इत्यादौ स्थायिभूतोत्साहव्यभिचारिवितर्कलक्षणभावहेतुसन्देहकारणतया[2] करुणसंग्रामतूर्ययोरुपादानं वीरमेकं पुष्णातीति भटस्येत्यनेन पदेन प्रतिपादितम् । १५
न च द्वयोः समप्रधानयोरन्योन्यमुपकार्योपकारकभावरहितयोरेकवाक्यभावो युज्यते । किं च—उपक्रान्ते सङ्ग्रामे सुभटानां कार्यान्तरकरणेन प्रस्तुतसंग्रामौदासीन्येन महदनौचित्यम् । अतो भर्तुः संग्रामैकरसिकतया शौर्यमेकं प्रकाशयन् प्रियतमाकरुणो वीरमेव पुष्णाति । एवं 'मात्सर्यम्'—इत्यादावपि चिरप्रवृत्तरतिवासनाया हेयतयोपादानाच्छमैकपरत्वं 'आर्याः समर्यादम्'—इत्यनेन प्रकाशितम् । 'इयं सा लोलाक्षी' इत्यादावपि रावणस्य प्रतिपक्षनायकतया निशाचरत्वेन मायाप्रधानतया च रौद्रव्यभिचारिविषादविभाववितर्कहेतुतया रतिक्रोधयोरुपादानं रौद्रपरमेव । 'अन्त्रैः कल्पितमङ्गलप्रतिसराः' इत्यादौ हास्यरसैकपरत्वम् । 'एकं ध्याननिमीलनान्मुकुलितम्—' इत्यादौ तु शम्भोर्भावान्तरैरनाक्षिप्ततया शमस्तस्यापि योग्यन्तरशमाद्वैलक्षण्यप्रतिपादनेन शमैकपरतैव 'समाधिसमये' इत्यनेन स्फुटीकृता । 'एकेनाक्ष्णा' इत्यादौ तु समस्तमपि वाक्यं भविष्यद्विप्रलम्भविषयमिति न क्वचिदनेकतात्पर्यम् । तदेवमुक्तप्रकारेण रत्याद्युपनिबन्धे सर्वत्राविरोध इति । २० २५

---

1. C. एकतो. 2. °लक्षणवितर्क° ( दशरूपकावलोक, G. P.)

अत्र रतिपरिहारादीनामनुभावानां करुणादावपि संभवात्कामिनी-रूपो विभावः क्लेशप्रतिपाद्यः[1]।

कर्पूरधूलिधवलद्युतिपूरधौत-
दिङ्मण्डले शिशिररोचिषि तस्य यूनः ।
लीलाशिरांशुकनिवेशविशेषक्लृप्ति-
व्यक्तस्तनोन्नतिरभून्नयनावनौ सा ॥ १९९ ॥
[ ]

अत्रोद्दीपनालम्बनरूपाः शृङ्गारयोग्या विभावा अनुभावापर्यवसायिनः स्थिता इति क्लेशव्यक्तिः ।

पुनः पुनर्दीप्तिर्यथा **कुमारसंभवे** रतिप्रलापेषु [ स. ४ ] । उपभुक्तो हि रसः स्वसामग्रीलब्धपरिपोषः पुनः पुनः परामृश्यमानः परिम्लानकुसुमकल्पः कल्पत इति ।

अकाण्डे प्रथनं[2] यथा **वेणीसंहारे** द्वितीयेऽङ्के दुर्योधनस्य धीरोद्धतप्रकृतेरपि तथाभूतभीष्मप्रमुखमहावीरलक्षक्षयकारिणि समरसंरम्भे प्रवृत्ते शृङ्गारवर्णने ।

**अनुभावापर्यवसायिन**[3] इति । शृङ्गारी चेद्युवा, संभवन्ति तथाविधा अनुभावाः । शान्तश्चेत्, न संभवन्ति । तं प्रति परपशरूपत्वात्तथाविधानां[4] विभावानामिति शृङ्गारित्वनिश्चयाभावे सत्स्वपि तथाविधेषु विभावेषु लीलादयोऽनुभावाः क्लेशेन व्यज्यन्त इति ।

**पुनः पुनः परामृश्यमान** इति। तथा हि—विभावानुभावसामग्रीपरिघटितशरीरस्यापि रसयितृरसनयोग्यस्य रसस्य पुनः पुनरान्दोलनं मालतीकुसुमपरिमर्दनवदननुगुणमेव । धाराप्राप्ते हि रसे तदाविष्टानां तत्परवशानामुक्तिरल्पीयस्येव । तथा च तस्यां दशायां महाकवीनामेको द्वित्रा वा श्लोका निर्यान्ति । अत एव **तापसवत्सराजे** धाराप्राप्तः करुणरसः सर्वाल्पो द्वितीयोऽङ्कः कविना निबद्धः ।

1. I. क्लेशेन प्रतिपाद्यः 2. P. L. अकाण्डप्रथनम्
3. A. B. अनुभावाः पर्यवसायिन 4 N. प्रतिपन्नरूप०

अकाण्डे छेदो यथा वत्सराजस्य **रत्नावल्यां** चतुर्थेऽङ्के रत्नावलीनामधेयमप्यगृह्णतो विजयवर्मवृत्तान्ताकर्णने । यथा वा **वीरचरिते** द्वितीयेऽङ्के राघवभार्गवयोर्द्धाराधिरूढे वीररसे 'कङ्कणमोचनाय गच्छामि' इति राघवस्योक्तौ ।

अङ्गस्याप्रधानस्यातिविस्तरेण वर्णनं यथा **हयग्रीववधे** हयग्रीवस्य । यथा वा विप्रलम्भश्रृङ्गारे नायकस्य कस्यचिद्वर्णयितुमनुक्रान्ते **कवेर्यमकाद्यलङ्कार**निबन्धनरसिकतया महाप्रबन्धेन समुद्रादेः । तथा हि **हरिविजये**—ईर्ष्याकुपितसत्यभामानुनयनप्रवृत्तस्य[1] हरेः पारिजातहरणव्यापारेणोपक्रान्तविप्रलम्भस्य वर्णनप्रस्तावे गलितकनिबन्धनरसिकतया कविना समुद्रवर्णनमन्तरा गडुस्थानीयं विस्तृतम् । तथा **कादम्बर्यां** 'रूपविलास' [का. पृ. १३. नि.सा.] इत्यादिना महाविप्रलम्भबीजेऽप्युपक्षिप्ते तदनुपयोगिनीष्वटवीशबरेशाश्रममुनिनगरीनृपादिवर्णनास्वतिप्रसङ्गाभिनिवेशः । तथा **हर्षचरिते** 'जयति ज्वलद्' [ह. च. श्लो. २१. पृ. ६. नि. सा.] इत्यादिना **हर्षो**त्कर्षवद्विजयबीजे **बाणा**न्वयवर्णनम्, तत्रापि चानन्वितप्राय एव सारस्वतोत्पत्तिपर्यन्तो महान् ग्रन्थसन्दर्भः। **शिशुपालवधादौ** चादितः कृतप्रतिद्वन्द्वि[2]विजयबीजोपक्षेपावगाढव्यातिमद्वीररसानुबन्धेऽपि [ स. १, २ ] तदसङ्गतश्रृङ्गाराङ्गभूततत्तदृतूपवनविहारपुष्पावचायमज्जनादिवर्णनास्वत्यासक्तिः [ स. ३–११ ]। तदित्थमप्रस्तुतवस्तुविस्तृतिः प्रस्तुतरसप्रतीतिव्यवधानकारिण्यपि महाकविलक्ष्येषु भूयसा दृश्यत इति तत्त्वं त एव विदन्ति ।

अङ्गिनः प्रधानस्याननुसन्धानं यथा **रत्नावल्यां** चतुर्थेऽङ्के बाभ्रव्यागमनेन सागरिकाया विस्मृतिः । अनुसन्धिर्हि सर्वस्वं सहृदयतायाः,

1. P. L. °अनुनाथन    2. °प्रतिबन्धि°

यथा **तापसवत्सराजे** षट्स्वप्यङ्केषु वासवदत्ताविषयः प्रेमबन्धः कथा-वशादाशङ्क्यमानविच्छेदोऽप्यनुसंहितः ।

अनङ्गस्य रसानुपकारकस्य वर्णनं यथा **कर्पूरमञ्जर्यां** नायिकया स्वात्मना च वसन्तवर्णनमनादृत्य बन्दिवर्णितस्य तस्य[1] राज्ञा प्रशंसनम् ।

[ प्र. जवनिकान्तरम् ]

५

---

**षट्स्वप्यङ्केष्विति** । तथा हि—प्रथमे तावदङ्के—

तद्वक्त्रेन्दुविलोकनेन दिवसो नीतः प्रदोषस्तथा[2]
तद्गोष्ठ्यैव निशापि मन्मथकृतोत्साहैस्तदङ्गार्पणैः ।
तां सम्प्रत्यपि मार्गदत्तनयनां द्रष्टुं प्रवृत्तस्य मे
बद्धोत्कण्ठमिदं मनः किमथवा प्रेमासमाप्तोत्सवम् ॥ १९२ ॥

१०

[ ता. व. अं. १. ]

इत्यनेन । द्वितीये—

दृष्टिर्नामृतवर्षिणी स्मितमधुप्रस्यन्दि वक्त्रं न किम्
नार्द्रं हृदयं न चन्दनरसस्पर्शानि चाङ्गानि वा ।
कस्मिँल्लब्धपदेन ते कृतमिदं क्रूरेण दग्धाग्निना[3]
नूनं वज्रमयोऽन्य एव दहनस्तस्येदमाचेष्टितम् ॥१९३॥

१५

[ ता. व. अं. २ ]

इत्यादिना । तृतीये—

सर्वत्र ज्वलितेषु वेश्मसु भयादालीजने विद्रुते
श्वासोत्कम्पविहस्तया प्रतिपदं देव्या पतन्त्या तथा ।
हा नाथेति मुहुः प्रलापपरया दग्धं वराक्या तया
शान्तेनापि वयं तु तेन दहनेनाद्यापि दह्यामहे ॥१९४॥

२०

[ ता. व. अं. ३. ]

इत्यादिना । चतुर्थे—

देवीस्वीकृतमानसस्य नियतं स्वप्रायमानस्य मे
तद्गोत्रग्रहणादियं सुवदना यायात्कथं न व्यथाम् ।
इत्थं यन्त्रणया कथं कथमपि क्षीणा निशा[4] जाग्रतो[5]
दाक्षिण्योपहतेन सा प्रियतमा स्वप्नेऽपि नासादिता ॥१९५॥

२५

[ ता. व. अं. ४. ]

---

1. I. वसन्तस्य  2. C. प्रदोषं  3. C. कृता°
4. C. कथा  5. C. जाग्रतोः

प्रकृतिव्यत्यय इति । प्रकृतिर्दिव्या मानुषी दिव्यमानुषी पाता-

---

इत्यादिना[1] । पञ्चमे समागमप्रत्याशया विप्रलम्भेऽङ्कुरिते—

तथाभूते तस्मिन् मुनिवचसि जातागसि मयि
प्रयत्नान्तर्गूढां रुषमुपगता मे प्रियतमा ।
प्रसीदेति प्रोक्ता न खलु कुपितेत्युक्तिविधुरम्     ५
समुद्भिन्ना पीतैर्[2]नयनसलिलैः स्थास्यति पुरः ॥ १९६ ॥
[ ता. व. अं. ५. ]

इत्यादिना । षष्ठे च—

त्वत्सम्प्राप्तिविलोभितेन सचिवैः प्राणा मया धारिता-
स्तन्मत्वाऽत्यजतः शरीरकमिदं नैवास्ति निःस्नेहता ।     १०
आसन्नोऽवसरस्तवानुगमने जाता धृतिः किं त्वयम्
खेदो यच्च तवानुगं न हृदयं तस्मिन् क्षणे दारुणे ॥ १९७ ॥
[ ता. व. अं. ६. ]

इत्यादिना च वासवदत्ताविषयो जीवितसर्वस्वाभिमानात्मा प्रेमबन्धस्तत्तद्वि-भावौचित्यात्करुणविप्रलम्भादिभूमिकां गृह्णन् विच्छिन्नविच्छन्नोऽपि समस्तेतिवृत्त-     १५
व्यापितया दर्शितः । राज्यप्रत्यापत्त्या हि सचिवनीतिमहिमोपनतया तदङ्गभूत-पद्मावतीलाभानुगतयानुप्राण्यमानरूपा वासवदत्ताधिगतिरेव तत्र फलम् । निर्वहणे हि—

दृष्टा यूयं निर्जिता विद्विषश्च प्राप्ता देवी भूतधात्री च भूयः ।
सम्बन्धोऽभूद्दर्शकेनापि सार्धं किं तद् दुःखं यत्नतः शान्तमद्य ॥१९८॥     २०
[ ता. व. ]

इति देवीलाभप्राधान्यं निर्वाहितम् ॥

**दिव्येति** । दिव्यः स्वभाव इत्यर्थः । एवं मानुष्यादिष्वपि व्याख्येयम् । तत्र दिव्या यथा—

स्मृत्वा यन्निजवारवासगतया वीणासमं तुम्बुरो-     २५
रुद्गीतं नलकूबरस्य विरहादुत्कण्ठलं रम्भया ।
तेनैरावणकर्णचापलमुषा शक्रोऽपि निद्रां जहद्-
भूयः कारित एव हासिनि शचीवक्त्रे दृशां संभ्रमम् ॥१९९॥
[ ]

---

1. C. drops इत्यादिना     2. C. प्रीतै

लीया मर्त्यपातालीया दिव्यपातालीया दिव्यमर्त्यपातालीया चेति सप्तधा।

मानुषी यथा—

वधूः श्वश्रूस्थाने व्यवहरति पुत्रः पितृपदे
पदे रिक्ते रिक्ते[1] विनिहितपदार्थान्तरमिति ।
५ नदीस्रोतोन्यायादकलितविवेकक्रमघनं
न च प्रत्यावृत्तिः प्रवहति जगत्पूर्णमथवा ॥ २०० ॥
[ ]

दिव्यमानुषी तु चतुर्धा[2] । दिव्यस्य मर्त्यागमने मर्त्यस्य च स्वर्गमने इत्येको भेदः । दिव्यस्य मर्त्यभावे मर्त्यस्य च दिव्यभाव इति द्वितीयः ।
१० दिव्येतिवृत्तपरिकल्पनया तृतीयः प्रभावाविर्भूतदिव्यरूपतया चतुर्थः ।

तत्र दिव्यस्य मर्त्यागमनं यथा—

श्रियः पतिः श्रीमति शासितुं जगज्जगन्निवासो वसुदेवसद्मनि ।
वसन्ददर्शावतरन्तमम्बराद्धिरण्यगर्भाङ्गभुवं मुनिं हरिः ॥ २०१ ॥
[ शि. व. स. १. श्लो. १. ]

१५ मर्त्यस्य स्वर्गमनं यथा—

पाण्डोर्नन्दननन्दनं वनमिदं संकल्पजैः सीधुभिः
क्लृप्तापानककेलिकल्पतरुषु द्वन्द्वैः सुधालेहिनाम् ।
अप्यत्रेन्दुशिलालवालवलयं सन्तानकानां त[3]ले
ज्योत्स्नासंगलदच्छनिर्झरजलैर्यत्नं विना पूर्यते ॥ २०२ ॥
[ ]

२० दिव्यस्य मर्त्यभावो यथा—

इति[4] विकसति तस्मिन्नन्ववाये यदूनां
समजनि वसुदेवो देवकी यत्कलत्रम् ।
किमपरमथ तस्मात्षोडशस्त्रीसहस्र-
२५ प्रणिहितपरिरम्भः पद्मनाभो बभूव ॥ २०३ ॥
[ ]

1. C. drops one रिक्ते 2. A. drops तु चतु
3. C. drops कानां त 4. C. drops इति

---

मर्त्यस्य दिव्यभावो यथा—

आकाशयानतटकोटिकृतैकपादास्तद्धेमदण्डयुगलान्यवलम्ब्य हस्तैः ।
कौतूहलात्तव तरङ्गविघट्टितानि पश्यन्ति देवि मनुजाः स्वकलेवराणि ॥२०४॥

[                    ]

दिव्येतिवृत्तपरिकल्पना यथा—                                        ५

ज्योत्स्नापूरप्रसरविशदे सैकतेऽस्मिन् सरय्वा
वादद्यूतं चिरतरमभूत्सिद्धयूनोः कयोश्चित् ।
एको ब्रूते प्रथमनिहतं कैटभं कंसमन्यः
स त्वं तत्त्वं कथय भवता को हतस्तत्र पूर्वम् ॥ २०५ ॥

प्रभावाविर्भूतदिव्यभावो यथा—                                        १०

'मा गाः पातालमुर्विं स्फुरसि किमपरं पाटयमानः कुदैत्य-
त्रैलोक्यं पादपीतप्रथिम न हि बले पूरयस्यूनमङ्घ्रेः ।
इत्युत्स्वप्नायमाने भुवनभृति शिशावङ्कसुप्ते यशोदा
पायाच्चक्राङ्कपादप्रणतिपुलकितस्मेरगण्डस्थला वः ॥ २०६ ॥

पातालीया यथा—                                        १५

'कर्कोटः कोटिकृत्वः प्रणमति पुरतस्तक्षके देहि चक्षुः
सज्जः सेवाञ्जलिस्ते कपिलकुलिकयोः स्तौति च स्वस्तिकस्त्वाम् ।
पद्मः सद्मैष भक्तेरवलगति पुनः काम्बलोऽयं बलोऽयं
सोत्सर्पः सर्पराज व्रजतु निजगृहं प्रेष्यतां शङ्खपालः ॥ २०७ ॥

मर्त्यपातालीया यथा—                                        २०

आर्द्राविले व्रज न वेत्स्यपकर्णकर्ण
द्विः संदधाति न शरं हरशिष्यशिष्यः ।
तत्साम्प्रतं समिति पश्य कुतूहलेन
मर्त्यैः शरैरपि किरीटिकिरीटमाथम् ॥ २०८ ॥

[                    ]                                        २५

इहापि दिव्यमानुषवन्मिश्रभेदानुगमः ।

दिव्यपातालीया यथा—

स पातु वो यस्य शिखाश्मकर्णिकं स्वदेहनालं फणपत्रसंचयम्
विभाति जिह्वायुगलोलकेसरं पिनाकिनः कर्णभुजङ्गपङ्कजम् ॥ २०९ ॥

[                    ]

वीररौद्रशृङ्गारशान्तरसप्रधाना धीरोदात्तधीरोद्धतधीरललितधीरप्रशान्ता उत्तमाधममध्यमा च ।

तत्र रतिहासशोकाद्भुतानि मानुषोत्तमप्रकृतिवद्दिव्यादिष्वपि ।

**दिव्यमर्त्यपातालीया** यथा—

५ आस्तीकोऽस्ति मुनिः स्म विस्मयकृतः पारीक्षितीयान्मखात्
त्राता तक्षकलक्ष्मणः फणभृतां वंशस्य शक्रस्य च ।
उद्वेल्लन्मलयाद्रिचन्दनलतास्वान्दोलनप्रक्रमे
यस्याद्यापि सविभ्रमं फणिवधूवृन्दैर्यशो गीयते ॥ २१० ॥

**धीरोदात्तेति**[1] । धर्मयुद्धवीरप्रधानो धीरोदात्तः । धीरोद्धतादिषु त्रिष्वपि
१० यथाक्रमं रौद्रशृङ्गारशान्तलक्षणनियतरसप्राधान्येऽपि अवश्यंभावित्वादुत्साहस्य वीररसप्राधान्यमपि प्रतिपत्तव्यम् । ततो वीररौद्रप्रधानो धीरोद्धतः । वीरशृङ्गारप्रधानो धीरललितः । दानधर्मवीरशान्तप्रधानो धीरप्रशान्त इति ।

ननु यद्युत्साहादिभाववर्णने कथञ्चिद्दिव्यमानुषाद्यौचित्यपरीक्षा क्रियते तत्क्रियताम् । रत्यादौ तु किं तया प्रयोजनम् । रतिर्हि भारतवर्षोचितेनैव व्यवहारेण
१५ दिव्यानामपि वर्णनीयेति स्थितिः । तथा चाहुः—

(55) कस्माद्भारतमिष्टं वर्षेष्वन्येषु देशविहितेषु ।
हृद्या सर्वा भूमिः शुभगन्धा काञ्चनी यस्मात् ॥
उपवनगमनक्रीडाविहारनारीरतिप्रमोदाः स्युः ।
तेषु हि वर्षेषु सदा न तत्र दुःखं न वा शोकः ॥

२० इत्याशङ्कयाह—**मानुषोत्तमप्रकृतिवदिति** । न वयं दिव्यमौचित्यं शृङ्गारविषयमन्यत् किञ्चिद्ब्रूमः । किं तर्हि, भारतवर्षविषये यथोत्तमनायकेषु राजादिषु शृङ्गारोपनिबन्धस्तथा दिव्याश्रयोऽपि शोभते । न च राजादिषु प्रसिद्धग्राम्यसंभोगोपवर्णनं प्रसिद्धं नाटकादौ तथैव दिव्येषु तत्परिहर्तव्यम् । नाटकादेरभिनेयत्वादभिनयस्य संभोगशृङ्गारविषयस्यासभ्यत्वात् तत्र परिहार इति चेत् ।
२५ ननु यद्यभिनयस्यैवं विषयस्यासभ्यता तत्काव्यस्यैवं विषयस्य सा केन वार्यते । तस्मादभिनेयार्थेऽनभिनेयार्थे च काव्ये यदुत्तमप्रकृते राजादेरुत्तमस्त्रीभिः सह ग्राम्यसंभोगवर्णनं तदसभ्यं तथैव दिव्यादिविषयम् । न च संभोगस्य सुरतलक्षण एवैकः प्रकारो यावत्, अन्येऽपि परस्परप्रेमदर्शनादयः प्रभेदाः संभवन्ति । त एव चोत्तमप्रकृतिविषये वर्णयितुमुचिताः । एवं हासादिष्वप्यौचित्यं योज्यमिति ।

1 A. B. omit धीरोदात्त

किन्तु रतिः संभोगशृङ्गाररूपोत्तमदेवताविषया न वर्णनीया। तद्वर्णनं हि पित्रोः संभोगवर्णनमिवात्यन्तमनुचितम्। यत्तु **कुमारसंभवे** हरगौरीसंभोगवर्णनं तत्कविशक्तितिरस्कृतत्वाद् भूम्ना न दोषत्वेन प्रतिभासते।

क्रोधोऽपि भ्रुकुटयादिविकारवर्जितः सद्यः फलदो निबन्द्धव्यः। यथा— ५

क्रोधं प्रभो संहर संहरेति यावद्गिरः खे मरुतां चरन्ति।
तावत् स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार ॥ २०० ॥
[ कु. सं. स. ३. श्लो. ७२ ]

स्वःपातालगमनसमुद्रलङ्घनादावुत्साहस्तु[1] मानुषेभ्योऽन्येषु। मानुषेषु

दिव्यादिषु रतेः संभोगविप्रलम्भोभयरूपाया वर्णनीयत्वेन सामान्येनाभिधाने उत्तमदेवताविषयत्वेनापि तथा प्रसक्तौ विशेषमाह–**किं त्विति**। संभोगः परस्परावलोकनप्रणयकलहसंगीतकादिः। स चासौ शृङ्गारश्च, तद्रूपा। १०

**अनुचितमिति**। आस्वादयितृणां हि यत्र चमत्काराविघातस्तदेव रससर्वस्वम्, आस्वादायत्तत्वात्। उत्तमदेवतासंभोगपरामर्शे च पितृसंभोग इव लज्जातन्द्रादिना कश्चमत्कारावकाश इत्यर्थः। १५

**शक्तितिरस्कृतत्वादिति**। संभोगोऽपि ह्यसौ प्रतिभानवता कविना तथा वर्णितो यथा तत्रैव विश्रान्तं हृदयं पौर्वापर्यपरामर्शं कर्तुं न ददाति। यथा निर्व्याजपराक्रमस्य पुरुषस्य विषयेऽपि युध्यमानस्य तावत्तस्मिन्नवसरे साधुवादो वितीर्यते, न तु पौर्वापर्यपरामर्शः। तथात्रापीति भावः। यदाह **ध्वनिकारः**— २०

(56) अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः।
यस्त्वशक्तिकृतस्तस्य स झगित्यवभासते ॥ इति।
[ ध्व. उ. ३. पृ. १३७ ]

**अन्येष्विति**। दिव्यादिषु। तथा च केवलमनुष्यस्य राजादेर्वर्णने सप्तार्णवलङ्घनादिलक्षणा व्यापारा उपनिबध्यमाना वर्णनामहिम्ना सौष्ठवभृतोऽपि नीरसा एव नियमेन भवन्ति। २५

1. L. पातालगमन

तु यावदवदानं प्रसिद्धमुचितं वा तावदेव वर्णनीयम् । अधिकं तु निबध्यमानमसत्यप्रतिभासेन[1] नायकवद्वर्तितव्यं, न प्रतिनायकवदित्युपदेशे न पर्यवस्येत् । एवमुक्तानां प्रकृतीनामन्यथावर्णनं व्यत्ययः ।

तथा तत्रभवन् भगवन्निति उत्तमेन वाच्यम्, नाधमेन । मुनिप्रभृतौ न राजादौ । भट्टारकेति न राजादौ । परमेश्वरेति न मुनिप्रभृतौ । प्रकृतिव्यत्ययापत्तेः । यदाह—

(15) तत्र भवन् भगवन्निति नार्हत्यधमो गरीयसो वक्तुम् ।
भट्टारकेति च पुनर्नैवैतानुत्तमप्रकृतिः ॥
तत्रभवन् भगवन्निति नैवार्हत्युत्तमोऽपि राजानं ।
वक्तुं नापि कथञ्चिन्मुनिं च परमेश्वरेशेति ॥

[ रु. का. अ. ६. १९–२० ]

---

ननु नागलोकगमनादयः सातवाहनप्रभृतीनां श्रूयन्ते । तदलोकसामान्यप्रभावातिशयवर्णने किमनौचित्यं सर्वोर्वीभरक्षमाणां भूभुजामित्याशङ्क्याह—**मानुषेष्विति** । न वयं ब्रूमो यत्प्रभावातिशयवर्णनं[2] न समुचितं राज्ञाम्, किं तु केवलमनुष्याश्रयेण योत्पाद्यवस्तुकथा क्रियते तस्यां दिव्यादिकमौचित्यं न योजनीयम् । दिव्यमानुष्यादौ तु तद्योजनमविरुद्धमेव । यथा पाण्डवादिकथायाम्[3] । सातवाहनादिषु तु येषु यावदवदानं श्रूयते तावदेवोपनिबन्धव्यमित्यर्थः ।

**अवदानमिति** । सातिशयं कर्म ।

**अधिकं त्विति** । अयमर्थः—यत्र विनेयानां[4] प्रतीतिखण्डना न जायते तादृग्वर्णनीयम् । तत्र केवलमानुषस्यैकपदे सप्तार्णवलङ्घनमसंभाव्यमानतया कृतमिति हृदये स्फुरदुपदेश्यस्य चतुर्वर्गोपायस्याप्यलीकतां बुद्धौ निवेशयति । समादेस्तु चरितं तथाविधमपि पूर्वप्रसिद्धपरम्परोपचितसंप्रत्ययोपारूढं[5] नासत्यतया चकास्ति । अत एव तस्यापि यदा प्रभावान्तरमुत्प्रेक्ष्यते तदा तादृशमेव न त्वसंभावनास्पदं वर्णनीयमिति ।

---

1. I. बध्यमानम्  2. A. B. °र्णनमनुचितं  3. N. पाण्डवकथायां
4. C, च नेया°  5. A. B. रूढमासत्यतया

एवं देशकालवयोजात्यादीनां वेषव्यवहारादि समुचितमेवोपनिबन्द्धव्यम् ।

---

**देशकालवयोजात्यादीनामिति** । तत्र जगज्जगदेकदेशाश्च देशः । द्यावापृथिव्यात्मकमेकं जगदित्येके यथा—

हलमगु बलस्यैकोऽनड्वान्हरस्य न लाङ्गलं
क्रमपरिमिता भूमिर्विष्णोर्न गौर्न च लाङ्गलम् । 5
प्रभवति कृषिर्नाद्याप्येषां द्वितीयगवं विना
जगति सकले नैदग्दष्टं दरिद्रकुटुम्बकम् ॥ २११ ॥

[ ]

दिवस्पृथिव्यौ द्वे जगतीत्यपरे । यथा—

रुणद्धि रोदसी चास्य यावत्कीर्तिरनश्वरी । 10
तावत्किलायमध्यास्ते सुकृती वैबुधं पदम् ॥ २१२ ॥

[ भामहालङ्कार. परि. १. श्लो. ७ ]

स्वर्गमर्त्यपातालभेदात्[1] त्रीणि जगन्तीत्यपरे । यथा—

त्वमेव देव पातालमाशानां त्वं निबन्धनम् ।
त्वं चामरमरुद्भूमिरेको लोकत्रयात्मकः ॥ २१३ ॥ 15

[ ]

तान्येव भूर्भुवः स्वः—इत्यन्ये । यथा—

नमस्त्रिभुवनाभोगधृतिखेदभरादिव ।
नागनाथाङ्कपर्यङ्कशायिने शार्ङ्गधन्विने ॥ २१४ ॥

[ ] २०

महर्जनस्तपः सत्यमित्येतैः सह सप्तेत्यपरे । यथा—

संस्तम्भिनी पृथुनितम्बतरैर्धरित्र्याः
संवाहिनी जलमुचां चलकेतुहस्तैः ।
हर्षस्य सप्तभुवनप्रथितोरुकीर्तेः
प्रासादपङ्क्तिरियमुच्छिखरा विभाति ॥ २१५ ॥ २५

[ ]

तानि सप्तभिर्वायुस्कन्धैः सह चतुर्दशेति केचित् । यथा—

---

1 C. मृत्यु

निरवधि च निराश्रयं च यस्य स्थितमनुवर्तितकौतुकप्रपञ्चम् ।
प्रथम इह भवान् स कूर्ममूर्तिर्जयति चतुर्दशलोकवल्लिकन्दः ॥ २१६ ॥

तानि सप्तभिः पातालैः सहैकविंशतिरिति केचित् । यथा—

हरहासहरावासहरहारनिभप्रभाः[1] ।
५ कीर्तयस्तव लिम्पन्तु भुवनान्येकविंशतिम् ॥ २१७ ॥

[ ]

सामान्यविवक्षा एकयति, विशेषविवक्षा त्वनेकयतीति सर्वमुपपन्नम् । तत्र भूर्लोकः पृथ्वी, तत्र च सप्त महाद्वीपाः ।

(57) जम्बूद्वीपः सर्वमध्ये ततश्च प्लक्षो नाम्ना शाल्मलोऽतः कुशोऽतः[2] ।
१० क्रौञ्चः शाकः पुष्करश्चेत्यथैषां बाह्याऽबाह्या संस्थितिर्मण्डलीभिः ॥
लावणो रसमयः सुरोदकः सार्पिषो दधिजलः पयःपयाः ।
स्वादुवारिरुदधिश्च सप्तमस्तान्परीत्य त इमे व्यवस्थिताः ॥

एक एवायं लावणः समुद्र इत्येके । तदाहुः—

द्वीपान्यष्टादशात्र क्षितिरपि नवभिर्विस्तृता स्वाङ्गखण्डै-
१५ रेकोऽम्भोधिर्दिगन्तप्रसृमरसलिलः प्राज्यमेतत्सुराज्यम् ।
कस्मिन्नप्याजिकेलिव्यतिकरविजयोपार्जिते वीरवर्ये
पर्याप्तं मे न दातुस्तदिदमिति धिया वेधसे यश्चुकोप ॥२१८॥

[ ]

त्रय इत्यन्ये । यथा—

२० आकम्पितक्षितिभृता महता निकामं
हेलाभिभूतजलधित्रितयेन यस्य ।
वीर्येण संहतिभिदा विहितोन्नतेन
कल्पान्तकालविसृतः पवनोऽनुचक्रे ॥ २१९ ॥

[ ]

२५ चत्वार इत्यपरे । यथा—

चतुःसमुद्रवेलोर्मिरचितैकावलीलतम् ।
मेरुमप्यद्रिमुल्लङ्घ्य यस्य क्वापि गतं यशः ॥ २२० ॥

[ ]

1 A. °हासहास°    2. A. B. कुसो

सप्तेत्यन्ये । यथा—

अगस्त्यचुलकोत्क्षिप्तसप्तवारिधिवारिणि ।
मुहूर्तं केशवेनापि तरता पूतरायितम् ॥ २२१ ॥
[　　　　　　　]

कविप्रसिद्ध्या वा विमृष्टपरमार्थं सर्वमुपपन्नम् ।　　५

मध्ये जम्बूद्वीपमाद्यो गिरीणां मेरुर्नाम्ना काञ्चनः शैलराजः ।
यो मूर्तानामौषधीनां निधानं यश्चावासः सर्ववृन्दारकाणाम् ॥२२२॥
[　　　　　　　]

तमेनमवधीकृत्य ब्रह्मणा पुण्यकर्मणा ।
तिर्यगूर्ध्वमधस्ताच्च विश्वस्य रचना कृता ॥ २२३ ॥　　१०

मेरोश्चतुर्दिशमिलावृतं वर्षम् । तच्चोत्तरेण त्रयो वर्षगिरयः । नीलः श्वेतः शृङ्गवाँश्च । रम्यकं हिरण्मयमुत्तराः कुरव इति च क्रमेण त्रीणि तेषां वर्षाणि । दक्षिणेनापि त्रय एव । निषधो हेमकूटो हिमवाँश्च । हरिवर्षं किंपुरुषं भारतमिति त्रीणि वर्षाणि । तत्रेदं भारतं वर्षमन्त्यम् । अस्य च नव भेदाः— इन्द्रद्वीपः कसेरुमाँस्ताम्रपर्णो गभस्तिमान् नगद्वीपः सौम्यो गन्धर्वो वरुणः　　१५ कुमारीद्वीपश्च । पञ्च शतानि जलं, पञ्च स्थलमिति विभागेन प्रत्येकं योजनसहस्रावधयो दक्षिणात्समुद्राद्धिमवन्तं यावत् परस्परमगम्यास्ते । तान्येतानि यो जयति स सम्राडित्युच्यते । कुमारीपुरात्प्रभृति बिन्दुसरोवधि योजनानां दशशती चक्रवर्तिक्षेत्रम् । तां विजयमानश्चक्रवर्ती भवति । चक्रवर्तिचिह्नानि तु—

(58) चक्रं रथो मणिर्भार्या निधिरश्वो गजस्तथा ।　　२०
प्रोक्तानि सप्त रत्नानि सर्वेषां चक्रवर्तिनाम् ॥
[　　　　　　　]

कुमारीद्वीपे च—

(59) विन्ध्यश्च पारियात्रश्च शुक्तिमानृक्षपर्वतः ।
महेन्द्रसह्यमलयाः सप्तैते कुलपर्वताः ॥　　२५
[　　　　　　　]

तत्र विन्ध्यादयः प्रतीतस्वरूपाः । मलयविशेषास्तु चत्वारः । तेषु प्रथमो यथा—

आमूलयष्टेः फणिवेष्टितानां सचन्दनानां जननन्दनानाम् ।
कक्कोलकैलामरिचैर्वृतानां जातीतरूणां च स जन्मभूमिः ॥२२४॥　　३०
[　　　　　　　]

द्वितीयः—

यस्योत्तमां मौक्तिककामधेनुरुपत्यकामर्चेति ताम्रपर्णी ।
रत्नेश्वरो रत्नमहानिधानं कुम्भोद्भवस्तं मलयं पुनाति ॥ २२५ ॥
[ ]

५ तत्र द्रुमा विद्रुमनामधेया वंशेषु मुक्ताफलजन्म तत्र ।
मदोत्कटैः केसरिकण्ठनादैः स्फुटन्ति तस्मिन् घनसारवृक्षाः ॥२२६॥
[ ]

तृतीयः—

विलासभूमिः सकलामराणां पदं नृणां गौर्मुनिपुङ्गवस्य ।
१० सदा फलैः पुष्पलतावितानैराश्चर्यमूलं मलयः स तत्र ॥ २२७ ॥
[ ]

चतुर्थः—

सा तत्र चामीकररत्नचित्रैः प्रासादमालावलभीविटङ्कैः ।
द्वारार्गलाबद्धसुरेश्वराङ्का लङ्केति या रावणराजधानी ॥ २२८ ॥
[ ]

१५ प्रवर्तते कोकिलनादहेतुः पुष्पप्रसूः पञ्चमजन्मदायी ।
तेभ्यश्चतुर्भ्योऽपि वसन्तमित्रमुदङ्मुखो दक्षिणमातरिश्वा ॥२२९॥
[ ]

पूर्वापरयोः समुद्रयोर्हिमवद्विन्ध्ययोश्चान्तरमार्यावर्तः । तस्मिंश्चातुर्वर्ण्यं चातु-
२० राश्रम्यं च । तन्मूलश्च सदाचारः । तत्रत्यो[1] व्यवहारः प्रायेण कवीनाम् ।
तत्र वाराणस्याः पुरतः[2] पूर्वदेशः । यत्राङ्गकलिङ्गकोसलतोसलोत्कलमगधमुद्गरक-
विदेहनेपालपुण्ड्रप्राग्ज्योतिषताम्रलिप्तकमलदमल्लवर्तकसुह्मब्रह्मोत्तरप्रभृतयो[3] जनपदाः ।
बृहद्गृहलोहितगिरिचकोरदर्दुरनेपालकामरूपादयः[4] पर्वताः । शोणलोहितौ नदौ[5] ।
गङ्गाकरतोयाकपिमाद्याश्च नद्यः । लवलीग्रन्थिपर्णिकागुरुद्राक्षाकस्तूरिकादीनामुत्पादः ।
२५ माहिष्मत्याः पुरतो[6] दक्षिणापथः । यत्र महाराष्ट्रमाहिष्मकाश्मकवैदर्भकुन्तलक्रथ-[7][8]
कैशिकसूर्पारककाञ्चिकेरलकावेरमुरलवानवासकसिंहलचौडदण्डकपाण्ड्यपल्लवगाङ्गना-[9][10][11][12][13][14]

1. A. B. तत्र यो 2. C. परत: 3. C. °कमलज° 4. A. B. लोहितारि° C. N. लोहितगिर°. I have emended the readings 5. C. °त्यौ नद्यौ. 6. C. पतो ( for परतो ) 7. A. B. °शमवैदर्भ. 8. C. कुन्तल° 9. A. कौशिक. 10. C किरलि° 11. A. B. कावेल° 12. B. °लवासकंसिहल° 13. C. चोष 14. A. B. दण्डयपल्लव.

सिक्यकोङ्कणकोल्लगिरिवेल्लरप्रभृतयो[1] जनपदाः । विन्ध्यदक्षिणपादमहेन्द्रमलयमेकल-[2]पालमञ्जरसह्यश्रीपर्वतादयः पर्वताः । नर्मदातापीपयोष्णीगोदावरीकावेरीभैमरथी[3][4]वेणीकृष्णवेणीवञ्जुरातुङ्गभद्राताम्रपर्ण्युत्पलावतीरावणगङ्गाद्या[5][6] नद्यः । तदुत्पत्तिर्मल-योत्पत्त्या व्याख्याता ।

देवसभायाः परतः पश्चाद्देशः । तत्र देवसभसुराष्ट्रदशेरकत्रवणभृगुकच्छ- ५
कच्छीयानर्तार्बुदब्राह्मणवाहयवनप्रभृतयो जनपदाः । गोवर्धनगिरिनगरदेवसभ-[7]माल्यशिखरार्बुदादयः पर्वताः । सरस्वतीश्वभ्रवतीवार्तघ्नीमहीहिडिम्बाद्या नद्यः । करीरपीलुगुग्गुलुखर्जूरकरभादीनामुत्पादः ।

पृथूदकात्परत उत्तरापथः—यत्र शककेकयवोक्काणहूणवनायुजकम्बोजवाह्लीक-[8]बह्लवलम्पाककुलूतकीरतङ्गणतुषारतुरुष्कबर्बरहरहूरहुहुकसहुडहंसमार्गरमठकरकण्ठप्रभृ- १०
तयो जनपदाः । हिमालयजालन्धरकलिन्द्रेन्द्रकीलचन्द्राचलादयः पर्वताः । गङ्गा-सिन्धुसरस्वतीशतद्रुचन्द्रभागायमुनैरावतीवितस्ताविपाशाकुहूदेविकाद्या नद्यः । सरलदेवदारुद्राक्षाकुङ्कुमचमराजिनसौवीरस्रोतोञ्जनसैन्धववैडूर्यतुरगाणामुत्पादः । तेषां मध्ये मध्यदेश इति कविव्यवहार इति । यदाहुः—

(59) हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि । १५
प्रत्यगेव प्रयागाच्च मध्यदेशः स कीर्तितः ॥

[ म. स्मृ. अ. २ श्लो. २१ ]

तत्र ये देशाः पर्वताः सरितो द्रव्याणामुत्पादश्च तत्प्रसिद्धिसिद्धमिति न निर्दिष्टम् ।

(60) द्वीपान्तराणां ये देशाः पर्वताः सरितस्तथा । २०
नातिप्रयोज्याः कविभिरिति गाढं न चिन्तिताः ॥

विनशनप्रयागयोर्गङ्गायमुनयोश्चान्तरमन्तर्वेदी । तदपेक्षया दिशो विभजेतेति केचित् । वयं तु ब्रूमः—तथाऽत्रापि महोदयमूलमवधीकृत्य दिशो विभजेत । प्राच्यवाचीप्रतीच्युदीची च चतस्रो दिश इत्येके । यथा—

1 A. °कौल° B. कोल्ल° C. °कोल्लारप्रभृतयो 2 B. पादहेन्द्र. N. माहेन्द्र· 3 B. omit कावेरी 4. A. B. °रवी 5. C. omits कृष्णवेणी 6. A. B. °पर्ण्यपला° N. °र्णीपला° 7. C. °माल° 8. C omits हूण

चतसृष्वपि दिक्षु रणे द्विषतः प्रति येन चित्रचरितेन ।
विहितमपूर्वमदक्षिणमपश्चिममनुत्तरं कर्म ॥ २३० ॥
[ ]

ऐन्द्याग्नेयी याम्या नैर्ऋती वारुणी वायव्या कौबेर्यैशानी चाष्टौ दिश इत्यन्ये । यथा—

एकं[1] ज्योतिर्दृशौ द्वे त्रिजगति गदितान्यब्जजास्यैश्चतुर्भि-
र्भूतानां पञ्चमं यान्यलमृतुषु तथा षट्सु नानाविधानि ।
युष्माकं तानि सप्त त्रिदशमुनिनुतान्यष्टदिग्भाञ्जि भानो-
र्यान्ति प्राह्णे नवत्वं दश दधतु शिवं दीधितीनां शतानि ॥२३१
[ सू. श. श्लो. १३. ]

ब्राह्मी नागीया च द्वे, ताभ्यां सह दशेत्यपरे । यथा—

दशदिक्कूटपर्यन्तसीमसंकटभूमिके ।
विषमा स्थूललक्षस्य ब्रह्माण्डग्रामके स्थितिः ॥ २३२ ॥
[ ]

सर्वमस्तु । विवक्षा परतन्त्रा हि दिशामियत्ता । तत्र चित्रास्वात्यन्तरे प्राची तदनुसारेण[2] प्रतीची । ध्रुवेणोदीची, तदनुसारेणापाची[3] । अन्तरेषु विदिशः । ऊर्ध्वं ब्राह्मी । अधस्तान्नागीयेति । द्विधा च दिग्व्यवहारः कवीनां प्राक् सिद्धो विशिष्टस्थानावधिसाध्यश्च । तत्र प्राक् सिद्धे प्राची—

द्वित्रैर्व्योम्नि पुराणमौक्तिकमणिच्छायैः स्थितं तारकै-
ज्योंत्स्नापानभरालसेन वपुषा सुप्ताश्चकोराङ्गनाः ।
यातोऽस्ताचलचूलमुद्वसमधुच्छत्रच्छविश्चन्द्रमाः
प्राची बालबिडाललोचनरुचां जाता च पात्रं ककुप्, ॥२३३॥
[ वि. शा. भ. अं. १ श्लो. ११ ]

दक्षिणा—

दक्षिणो दक्षिणामाशां यियासन् सोऽधिकं बभौ ।
जिहासन् दक्षिणामाशां भगवानिव भास्करः ॥ २३४ ॥
[ ]

पश्चिमा—

पश्य पश्चिमदिगन्तलम्बिना निर्मितं मितकथे विवस्वता ।
दीर्घया प्रतिमया सरोम्भसस्तापनीयमिव सेतुबन्धनम् ॥२३५॥
[ कु. सं. स. ८. श्लो. ३४. ]

1. A. B. एकज्योति॰ 2. A. B. drop तदनुसारेण प्रतीची
3. A. B. प्राचीप्रतीच्यौ॰

उत्तरा—

अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः ।
पूर्वापरौ तोयनिधी वगाह्य स्थितः पृथिव्या इव मानदण्डः ॥२३६॥
[ कु. सं. स. १ श्लो. १. ]

विशिष्टस्थानावधौ तु दिग्विभागे पूर्वपश्चिमौ—      ५

यादांसि ! हे चरत संगतगोत्रतन्त्रं पूर्वेण चन्दनगिरेरुत पश्चिमेन ।
नो चेन्निरन्तरधराधरसेतुसूतिराकल्पमेष न विरंस्यति वो वियोगः ॥२३७॥
[ बा. रा. अं. ७. श्लो. ४७ ]

दक्षिणोत्तरौ यथा—

काञ्चयाः पुरो दक्षिणदिग्विभागे तथोत्तरस्यां दिशि वारिराशेः ।      १०
कर्णान्तचक्रीकृतपुष्पचापो रत्या समं साधु वसत्यनङ्गः ॥ २३८ ॥
[ ]

उत्तरादावप्युत्तरदिगभिधानमनुत्तरादावप्युत्तरदिगभिधानं च । तयोः प्रथमम्—

तत्रागारं धनपतिगृहानुत्तरेणास्मदीयम्
दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तोरणेन ।      १५
यस्योद्याने कृतकतनयः कान्तया वर्धितो मे
हस्तप्राप्यस्तबकविनतो बालमन्दारवृक्षः ॥ २३९ ॥
[ मे. दू उ. श्लो. १२ ]

द्वितीयम्—

सह्याद्रेरुत्तरे भागे यत्र गोदावरी नदी ।      २०
पृथिव्यामिह कृतस्नायां स प्रदेशो मनोरमः ॥ २४० ॥

एवं दिगन्तरेष्वपि । तत्र देशपर्वतनद्यादीनां दिशां च यः क्रमस्तं तथैव निबध्नीयात् । साधारणं तूभयत्र लोकप्रसिद्धितश्च ।

तद्वद्वर्णनियमः । तत्र प्राच्यानां श्यामो वर्णः—

श्यामेष्वङ्गेषु गौडीनां सूत्रहारैकहारिषु ।      २५
चक्रीकृत्य धनुः पौष्पमनङ्गो वल्गु वल्गति[1] ॥ २४१ ॥

दाक्षिणात्यानां कृष्णो यथा—

इदं भासां भर्तुर्द्रुतकनकगोलप्रतिकृति-[2]
क्रमान्मन्दज्योतिर्गलति नभसो बिम्बवलयम् ।

1. A. C. drops वल्ग 2. A. drops कृति C. प्रतिक्षति

अथैषः प्राचीतः सरति मुरलीगण्डमलीन-
स्तरुच्छायाचक्रैः स्तबकित इव ध्वान्तविसरः ॥३४२॥

[ ]

पाश्चात्यानां पाण्डुर्यथा—

५ शाखास्मेरं मधुकवलनाकेलिलोलेक्षणानां
भृङ्गस्त्रीणां बकुलमुकुलं कुन्तलीभावमेति ।
किं चेदानीं यवनतरुणीपाण्डुगण्डस्थलीभ्यः
कान्तिः स्तोकं रचयति पदं नागवल्लीदलेषु ॥ ३४३ ॥

[ ]

१० उदीच्यानां गौरो यथा—

काश्मीरीगात्रलेखासु लोलल्लावण्यवीचिषु ।
द्रावयित्वेव विन्यस्तं स्वर्णं षोडशवर्णिकम् ॥ २४४ ॥

[ ]

मध्यदेश्यानां कृष्णः श्यामो गौरश्च । कृष्णो यथा—

१५ युधिष्ठिरक्रोधवह्नेः कुरुवंशैकदाहिनः ।
पाञ्चालीं ददृशुः सर्वे कृष्णां धूमशिखामिव ॥ २४५ ॥

[ ]

एवं श्यामोऽपि । न च कविमार्गे कृष्णश्यामयोः पाण्डुगौरयोर्वा[1] महान् विशेष इति । गौरो यथा—

२० तव नवनवनीतपिण्डगौरे[2] प्रतिफलदुत्तरकोसलेन्द्रपुत्रि ।
अवगतमलिके मृगाङ्कबिम्बं मृगमदपत्रनिभेन लाञ्छनेन ॥२४६॥

[ ]

विशेषस्तु पूर्वदेशराजपुत्र्यादीनां गौरः पाण्डुर्वा वर्णः—

कपोले जानक्याः करिकलभदन्तद्युतिमुषि[3]
स्मरस्मेरं[4] गण्डोड्डमरपुलकं वक्त्रकमलम् ।
२५ मुहुः पश्यञ्छृण्वन् रजनिचरसेनाकलकलम्
जटाजूटग्रन्थिं दृढयति रघूणां परिवृढः ॥ २३७ ॥

[ ह. ना. अं. ३. श्लो. ५० ]

---

1. A. B. C. पाण्ड 2. A. drops नवनव C. drops one नव
3. C. मुख 4. A. B. सारस्मेरं C. स्मेरस्मेरं

यथा च—

तासां माधवपत्नीनां सर्वासां चन्द्रवर्चसाम् ।
शब्दविद्येव विद्यानां मध्ये जज्वाल रुक्मिणी ॥ २४८ ॥

[ ]

एवमन्यदपि यथासंभवमभ्यूह्यम् ॥ ५

**कालः** काष्ठादिभेदभिन्नः । तथा च–

(61) काष्ठा निमेषा दश पञ्च चैव त्रिंशच्च काष्ठाः कथिताः कला तु ।
त्रिंशत्कलश्चैव भवेन्मुहूर्तस्तैस्त्रिंशता रात्र्यहनी समेते ॥

ते च चैत्राश्वयुजमासयोर्भवतः । चैत्रात्परं प्रतिमासं मौहूर्तिकी दिवसवृद्धिर्निशाहानिश्च त्रिमास्याः । ततः परं मौहूर्तिकी निशावृद्धिर्दिवसहानिश्च । १० आश्वयुजात्परतः पुनरेतदेव विपरीतम् । राशितो राश्यन्तरसंक्रमणमुष्णभासो मासः । वर्षादि दक्षिणायनम् । शिशिराद्युत्तरायणम् । द्व्ययनः संवत्सर इति सौरं मानम् । पञ्चदशाहोरात्रः पक्षः । वर्धमानसोमशुक्लिमा शुक्लः, वर्धमानसोमकृष्णिमा कृष्ण इति पित्र्यं मासमानम् । अधुना च वेदोदितः कृत्स्नोऽपि क्रियाकल्पः । पित्र्यमेव व्यत्ययितपक्षं चान्द्रमसम् । इदमार्यावर्तवासिनः कवयश्च मानमाश्रिताः । एवं द्वौ पक्षौ मासः । द्वौ मासावृतुः । षण्णामृतूनां परिवर्तः संवत्सरः । स च चैत्रादिरिति **दैवज्ञाः** । श्रावणादिरिति **लोकयात्राविदः** । तत्र नभानभस्यश्च वर्षाः । यथा— १५

गर्भान् बलाकासु निवेशयन्तो वंशाङ्कुरान् स्वैर्निनदैः सृजन्तः ।
रजोऽम्बुदाः प्रावृषि मुद्रयन्तो यात्रोद्यमं भूमिभृतां हरन्ति ॥२४९॥ २०

[ ]

सशल्लकीशालशिलीन्ध्रयूथीप्रसूनदः पुष्पितलाङ्गलीकः ।
दग्धोर्वीरासुन्दरगन्धबन्धुरर्धत्यय्यं वारिमुचामनेहा ॥ २५० ॥

[ ]

वनानि नीलीदलमेचकानि धाराम्बुधौता गिरयः स्फुरन्ति । २५
पूराम्भसा भिन्नतटास्तटिन्यः सान्द्रेन्द्रगोपानि च शाद्वलानि ॥२५१॥

[ ]

चकोरहर्षी यतिचारचौरो वियोगिनीवीक्षितनाथवर्त्मा ।
गृहान्प्रति प्रस्थितपान्थसार्थः कालोऽयमाध्मातनभाः पयोदैः ॥२५२॥

[ ] ३०

या केलियात्रा किल कामिनीभिर्या तुङ्गहर्म्याग्रविलासशय्या ।
चतुःसमं यन्मृगनाभिगर्भं सा वारिदर्तोः प्रथमातिथेयी ॥२५३॥

[ ]

चलच्चटुलचातकः कृतकुरङ्गरागोदयः
सदर्दुररवोद्यमो मदभरप्रगल्भोरगः ।
शिखण्डिकुलताण्डवामुदितमद्गुकङ्काह्वयो
वियोगिषु घनागमः स्मरविषं विषं मुञ्चति ॥ २५४ ॥

[ ]

दलत्कुटजकुड्मलः स्फुटितनीपपुष्पोत्करो
नवप्रसवबान्धवः प्रचितमञ्जरीकार्जुनः ।
कदम्बकलुषाम्बरः कलितकेतकीकोरक-
श्चलन्निचुलसंचयो हरति हन्त घर्मात्ययः ॥ २५५ ॥

[ ]

तत्र पाश्चात्यः पौरस्त्यो वा वायुरिति कविसमयः । यथा—

प्रावृष्यम्भोभृताम्भोदभरनिर्भरमम्बरम्[1] ।
कदम्बकुसुमामोदा वायवो वान्ति वारुणाः ॥ २५६ ॥

[ ]

यथा च—

पौरस्त्यस्तोयदर्तोः पवन इव पतत्पावकस्येव धूमो
विश्वस्येवादिसर्गः प्रणव इव परं पावनं वेदराशेः ।
सन्ध्यानृत्तोत्सवेच्छोरिव मदनरिपोर्नन्दिनान्दीनिनादः
सौरस्याग्रे सुखं वो वितरतु विनतानन्दनः स्यन्दनस्य ॥२५७॥

[ सू. श. श्लो. ५५. ]

इष ऊर्जश्च शरत् । यथा—

प्रोन्मादयन्ती[2] विमदान्मयूरान्प्रगल्भयन्ती कुररद्विरेफान्
शरत्समभ्येति विकास्य पद्मानुन्मीलयन्ती कुमुदोत्पलानि ॥२५८॥
सा भाति पुष्पाणि विशेषयन्ती बन्धूकबाणासनकुङ्कुमेषु ।
शेफालिकासप्तपलाशकाशभाण्डीरसौगन्धिकमालतीषु[3] ॥२५९॥

[ ]

1. A. प्रावृष्याम्भो°. 2. B. °न्मोद°. C °न्मुद°. 3. A. drops from लिका to कारण्डव

सखञ्जरीटा सपय:प्रसादा सा कस्य नो मानसमाच्छिनत्ति ।
कादम्बकारण्डवचक्रवाकससारसक्रौञ्चकुलानुयाता ॥ २६० ॥
[ ]

उपानयन्ती कलहंसयूथमगस्तिदृष्ट्या पुनती पयांसि ।
मुक्तासु शुभ्रं दधती च गर्भं शरद्विचित्रैश्चरितैश्चकास्ति ॥२६१॥ ५
[ ]

क्षितिं खनन्तो वृषभाः खुराग्रै रोधो विषाणैर्द्विरदा रदन्तः ।
शृङ्गं त्यजन्तो रुरवश्च जीर्णं कुर्वन्ति लोकानवलोकनोत्कान् ॥२६२॥
[ ]

अत्रावदातद्युति चन्द्रिकाम्बु नीलावभासं च नभः समन्तात् । १०
सुरेभवीथी दिवि सावतारा जीर्णाभ्रखण्डानि[1] च पाण्डुराणि ॥२६३॥
[ ]

महानवम्यां निखिलास्त्रपूजा नीराजना वाजिभटद्विपानाम्
दीपालिकायां विविधा विलासा यात्रोन्मुखैरत्र नृपैर्विधेया ॥२६४॥
[ ] १५

व्योम तारतरतारकोत्करं[2] स्यन्दनप्रचरणक्षमा मही ।
भास्करः शरदि दीप्तदीधितिर्बुध्यते च सह माधवः सुरैः ॥२६५॥
[ ]

केदार एव कलमाः परिणामनम्राः प्राचीनमामलकमर्घति पाकनीलम् ।
एर्वारुकं स्फुटननिर्गतगर्भगन्धमम्लीभवन्ति च जरत्त्रपुसीफलानि ॥२६६॥ २०
[ ]

गेहाजिरेषु नवशालिकणावपातगन्धानुभावसुभगेषु कृषीवलानाम् ।
आनन्दयन्ति[3] मुसलोल्लसना[4]वधूतपाणिस्खलद्वलयपद्धतयो वधूटयः॥ ॥२६७॥
[ ]

तीक्ष्णं[5] रविस्तपति नीच इवाचिराढ्यः शृङ्गं रुरुस्त्यजति मित्र[6]मिवाकृतज्ञः । २५
तोयं प्रसीदति मुनेरिव धर्मचिन्ता[7] कामी दरिद्र इव शोषमुपैति मेघः॥२६८॥
[ सुभा. श्लो. १८२१ भासस्य ]

1. A. B. जीर्णाब्जख० 2. A. drops तर 3. C. आतक्षयन्ति.
4. A. drops लोल्लस 5. A. B. ताक्ष° C तक्ष्णं. 6. A. drops मित्र.
7 N. धर्मचित्तं

नद्यो वहन्ति कुटिलक्रमयुक्तशुक्तिरेखाङ्कबालपुलिनोदरसुप्तकूर्माः ।
अस्यां तरङ्गितनुतोयपलायमानमीनानुसारिबकदत्तकरालफालाः ॥२६९॥ [1]

[ ]

अपङ्किलतटावटः शफरफाण्टफालोज्ज्वलः
५ पतत्कुररकातरभ्रमददभ्रमीनार्भकः ।
लुठत्कमठसैकतश्चलबकोटवाचाटितः
सरित्सलिलसंचयः शरदि मेदुरः सीदति ॥ २७० ॥

[ ]

वायुश्चात्रानियतदिक्कः । यथा—
१० उषःसु बवुराकृष्टजडावश्यायशीकराः ।
शेफालीकलिकाकोशकषायामोदिनोऽनिलाः ॥ २७१ ॥

[ ]

सहाः सहस्यश्च हेमन्तः । यथा—
द्वित्रमुचुकुन्दकलिकस्त्रिचतुरमुकुलः क्रमेण लवलीषु ।
१५ पञ्चषफलिनीकुसुमो जयति हिमर्तुर्नवावतारः ॥ २७२ ॥

[ ]

पुन्नागरोध्रप्रसवावतंसाः वामभ्रुवः कञ्चुककुञ्चिताङ्गाः ।
वक्त्रोल्लसत्कुङ्कुमसिक्थकाढ्याः सगन्धतैलाः कबरीर्वहन्ति ॥२७३॥

[ ]

२० यथा यथा पुष्यति शीतकालस्तुषारचूर्णोत्करकीर्णवातः ।
तथा तथा यौवनशालिनीनां कवोष्णतामत्र कुचा लभन्ते ॥२७४॥

[ ]

वराहवध्राणि नवौदनानि दधीनि संनद्धरसानि चात्र ।
सुकोमलाः सर्षपकन्दलीश्च भुक्त्वा जनो निन्दति वैद्यविद्याम् ॥२७५॥

२५ [ ]

अत्रोपचारः सलिलैः कवोष्णैर्यत्किञ्चिदत्र स्वदतेऽन्नपानम् ।
सुदुर्भगामत्र निपीड्य शेते स्वस्त्यस्तु नित्यं तुहिनर्तवेऽस्मै ॥२७६॥ [2]

[ ]

1. C. दन्त 2. N. तु हिमर्तवे

विमुक्तबर्हा विमदा मयूराः प्ररूढगोधूमयवा च सीमा ।
व्याघ्रीप्रसूतिः सलिलं सबाष्पं हेमन्तलिङ्गानि जयन्त्यमूनि ॥२७७॥
[ ]

सशमीधान्यपाकानि क्षेत्राण्यत्र हरन्ति च ।
त्रिशङ्कुतिलका रात्र्यः पच्यन्ते लवणानि च ॥ २७८ ॥ ५
[ ]

उद्यानानां मूकपुंस्कोकिलत्वं भृङ्गस्त्रीणां मौनमुद्रा[1] मुखेषु ।
मन्दोद्योगा पत्त्रिणां व्योमयात्रा हेमन्ते स्यात्सर्पदर्पक्षयश्च ॥२७९॥
[ ]

कर्कन्धूनां नागरङ्गीफलानां पाकोद्रेकः खाण्डवोऽप्याविरस्ति । १०
कृष्णेक्षूणां पुण्ड्रकाणां च गर्भे माधुर्यश्रीर्जायते काप्यपूर्वा ॥२८०॥
येषां मध्येमन्दिरं तल्पसम्पत् पार्श्वे दाराः स्फारतारुण्यताराः ।
लीलावह्निर्निह्नुतोद्दामधूमस्ते हेमन्तं ग्रीष्मशेषं विदन्ति[2] ॥२८१॥

वायुरत्रोदीच्यः पाश्चात्यो वा । यथा—

लम्पाकीनां किरन्तश्चिकुरविरचनां रुल्लकोल्लासयन्त- १५
श्चुम्बन्तश्चन्द्रभागां विचितसुमनसः कुङ्कुमान्कम्पयन्तः ।
एते कस्तूरिकैणप्रणयसुरभयो वल्लभा बाह्लवीनां
कौलूतीकेलिकाराः परिचयितहिमं वायवो वान्त्युदीच्याः ॥२८२॥
[ बा. रा. अं. ५ श्लो. ३५ ]

यथा च— २०

भञ्जन् भूर्जद्रुमालीस्तुहिनगिरितटेषूद्गतत्वक्कराला-
रेवाम्भः स्थूलवीचीचयचकितचलच्चातकं व्याधुनानः ।
पाश्चात्यो वाति वेगाद् द्रुततुहिनशिलाशीकरासारवर्षं
मातङ्गक्षुण्णसान्द्रस्रुतसरलसरत्सारसारी[3] समीरः ॥ २८३ ॥
[ ] २५

तपस्तपस्यश्च शिशिरः । स च हेमन्तधर्म एव । विशेषस्तु—

रात्रिर्विचित्रसुरतोचितयामदीर्घा चण्डो मरुद् वहति कुङ्कुमपङ्कसाध्यः ।
तल्पस्थितिर्द्विगुणतूलपटा किमन्यदर्घन्ति चात्र विततागुरुधूपधूमाः[4] ॥२८४॥
[ ]

1. A. drops मुद्रा 2. C. वदन्ति 3. A. drops सरत्सार
4. A. drops from कुङ्कुम to °स्थिति

आश्लेषिणः पृथुरतक्लमपीतशीतमायामिनीं घनमुदो रजनीं युवानः ।
ऊर्वोर्मुहुर्वलनबन्धनसन्धिलोलपादान्तसंवलिततूलपटाः स्वपन्ति ॥२८५॥
[ ]

पानेऽम्भसोः सुरसनीरसयोर्न[1] भाति स्पर्शक्रियासु तुहिनानलयोर्न चात्र ।
५ नो दुर्भगासुभगयोः परिरम्भणे वा नासेवने च शशिभास्करयोर्विशेषः ॥२८६॥
[ ]

पुष्पक्रिया मरुबके जलकेलिनिन्दा कुन्दान्यशेषकुसुमेषु धुरि स्थितानि ।
सौभाग्यमेणतिलकाद्व्रजतेऽर्कबिम्बं काले तुषारिणि दहन्ति च चन्दनानि ॥२८७॥
[ ]

१० सिद्धार्थयष्टिषु यथोत्तरहीयमानसन्तानभिन्नघनसूचि[2]परम्परासु ।
द्वित्रावशेषकुसुमासु जनिक्रमेण पाकक्रमः कपिशिमानमुपादधाति ॥२८८॥
[ ]

उदीच्यचण्डानिलताडितासु निलीनमीनासु जलस्य मूले ।
नालावशेषाब्जलतास्विदानीं विलासवापीषु न याति दृष्टिः ॥२८९॥
१५ [ ]

माद्यन्मतङ्गः पृषतैकतोषी पुष्यद्वराहो धृतिमल्लुलायः ।
दरिद्रनिन्द्यः सधनैकनन्द्यः स एष कालः शिशिरः करालः ॥२९०॥
[ ]

अभिनववधूरोषस्वादुः करीषतनूनपा-
२० दसरलजनाश्लेषक्रूरस्तुषारसमीरणः ।
गलितविभवस्याज्ञेवाद्य द्युतिर्मसृणा रवे-
र्विरहिवनितावक्त्रौपम्यं बिभर्ति निशाकरः ॥२९१॥
[ औ. वि. च. पृ. १२३ मालवरुद्रस्य; सु. हारावली भासस्य ]

स्त्रियः प्रकृतिपित्तलाः क्वथितकुङ्कुमालेपनै-
२५ र्नितम्बफलकस्तनस्थलभुजोरुमूलादिभिः ।
इहाभिनवयौवनाः सकलरात्रिसंश्लेषितै-
र्हरन्ति शिशिरज्वरा रतिमतीव पृथ्वीमपि ॥ २९२ ॥
[ ]

---

1. drops नीरस 2 A. B. शूचि, C. सूरि.

मधुर्माधवश्च वसन्तः । यथा—

चैत्रे मदर्धिः शुकसारिकाणां हारीतदात्यूहमधुव्रतानाम् ।
पुंस्कोकिलानां सहकारबन्धुर्मदस्य कालः पुनरेष एव ॥२९३॥
[ ]

मनोऽधिकं चात्र विलासलास्ये प्रेङ्खासु दोलासु च सुन्दरीणाम् । ५
गीते च गौरीचरितावतंसे पूजाप्रपञ्चे च मनोभवस्य ॥२९४॥
[ ]

पुंस्कोकिलः कूजति पञ्चमेन बलाद्विलासा युवतेः स्फुरन्ति ।
स्मरो वसन्तेऽत्र नवैः प्रसूनैः स्वचापयष्टेर्घटनां करोति ॥२९५॥
[ ] १०

पिनद्धमाहारजनांशुकानां[1] सीमन्तसिन्दूरजुषां वसन्ते ।
स्मरीकृते प्रेयसि भक्तिभाजां विशेषवेषः स्वदते वधूनाम् ॥२९६॥
[ ]

अयं प्रसूनोद्धुरकर्णिकारः पुष्पप्रपञ्चाञ्चितकाञ्चनारः ।
विजृम्भणाकोविदकोविदारः[2] कालो विकासोद्धुरसिन्दुवारः[3] ॥२९७॥ १५
[ ]

रोहितकाम्रातककिङ्कराता मधूकमोचाः सह माधवीभिः ।
जयन्ति शोभांजनकश्च शाखी सशेखरः पुष्पभरैर्वसन्तः ॥२९८॥
[ ]

यो माधवीमुकुलदृष्टिषु वेणिबन्धो २०
यः कोकिलाकलरुते कथने च लाभः ।
पूजाविधिर्दमनकेन च यः स्मरस्य
तस्मिन् मधुः स भगवान् गुरुरङ्गनानाम् ॥ २९९ ॥
[ ]

नालिङ्गितः कुरबकस्तिलको न दृष्टो २५
नो ताडितश्च चरणैः सुदृशामशोकः ।
सिक्तो न वक्त्रमधुना बकुलश्च चैत्रे
चित्रं तथापि भवति प्रसवावकीर्णः ॥ ३०० ॥
[ ]

चैत्रे चित्रौ रक्तनीलावशोकौ स्वर्णाशोकस्तत्तृतीयश्च पीतः ।
जैत्रं तन्त्रं तत्प्रसूनान्तरेभ्यश्चेतोयोनेर्भूर्भुवः स्वस्त्रयेऽपि ॥३०१॥
[ ]

1. N. रजतांशुकानां. 2. A. drops कोविद 3. N. सोद्धतसिन्धुवारः

गूवाकानां नालिकेरीद्रुमाणां हिन्तालानां पाटलीकिंशुकानाम् ।
खर्जूरीणां ताडताडीद्रुमाणां पुष्पापीडन्यासहेतुर्वसन्तः ॥३०२॥
[ ]

वायुश्चात्र दक्षिणः । यथा—

चुम्बन्नैङ्कावनालीर्मुहुरलकलता लासयन् केरलीना-
मन्ध्रीधम्मिल्लबन्धान् सपदि शिथिलयन् वेल्लयन्नागवल्लीः ।
उद्दामं दाक्षिणात्यो मलितमलयजः सारथिर्मीनकेतोः
प्राप्तः सीमन्तिनीनां मधुसमयसुहृन्मानचौरः समीरः ॥३०३॥
[ ]

शुक्रः शुचिश्च ग्रीष्मः । यथा—

विकासकारी नवमालिकानां दलच्छिरीषप्रसवाभिरामः[1] ।
पुष्पप्रदः काञ्चनकेतकीनां ग्रीष्मोऽयमुल्लासितधातुकीकः ॥३०४॥
[ ]

खर्जूरजम्बूपनसाम्रमोचप्रियालपूगीफलनालिकेरैः ।
द्वन्द्वानि खेदालसतामपास्य रतानुसन्धानमिहाद्रियन्ते ॥३०५॥
[ ]

स्रोतांस्यनम्भांसि सकूपकानि प्रपाः कठोरऽहनि पान्थपूर्णाः ।
शुचौ समभ्यर्चितसक्तुधाने प्रगे[2] च सायं च वहन्ति मार्गाः ॥३०६॥
[ ]

यत्कायमानेषु दिनार्धनिद्रा यत्स्नानकेलिर्दिवसावसाने ।
यद्रात्रिशेषे सुरतावतारः स मुष्टियोगो घनघर्ममाथी ॥३०७॥
[ ]

या चन्द्रिका चन्दनपङ्कहृद्या या जालमार्गानिलवीचिमाला ।
या तालवृन्तैरुदबिन्दुवृष्टिर्जलाञ्जलिं सा शुचये ददाति ॥३०८॥
[ ]

कर्पूरचूर्णः सहकारभङ्गस्ताम्बूलमार्द्रक्रमुकोपक्लृसम् ।
हाराश्च तारास्तनुवस्त्रमेतन्महारहस्यं[3] शिशिरक्रियायाः ॥३०९॥
[ ]

मुक्तालताश्चन्दनपङ्कदिग्धा मृणालहारानुसृता जलार्द्राः ।
स्रजश्च मौलौ स्मितचम्पकानां ग्रीष्मेऽपि सोऽयं शिशिरावतारः ॥३१०॥

1. A. B. °शिरीषप्रमदा 2. C. प्रागेव. 3. A. drops हस्यं शिशिर

अत्र हि—

पच्यन्त इव भूतानि ताप्यन्त इव पांसवः ।
क्वथ्यन्त इव तोयानि ध्मायन्त इव चाद्रयः ॥३११॥

एण्यः स्थलीषु मृगतृष्णिकया ह्रियन्ते
स्रोतस्तनुत्वजनिता जलवेणिबन्धाः ।
ताम्यत्तिमीनि च सरांसि जलस्य शोषाद्
बद्धारघट्टघटिकावलयाश्च[1] कूपाः ॥ ३१२ ॥ ५

[ ]

करभाः शरभाः सरासभाः मदमायान्ति भजन्ति विक्रियाम् ।
करवीरकरीरपुष्पिणीः स्थलभूमीरधिरुह्य चासते ॥ ३१३ ॥ १०

[ ]

सहकाररसान्विता रसाला जलभक्तं फलपानकानि मन्थाः ।
मृगलावरसाः सृतं च दुग्धं स्मरसंजीवनमौषधं निदाघे ॥३१४॥

[ ]

जडचन्दनचारवस्तरुण्यः सजलार्द्रा सहतारहारमालाः । १५
कदलीदलतल्पकल्पनस्थाः स्मरमाहूय निवेशयन्ति पार्श्वे ॥३१५॥

[ ]

ग्रीष्मे चीरीनादवन्तो वनान्ताः पङ्काभ्यक्ताः सैरिभाः सेभकोलाः ।
लोलज्जिह्वाः सर्वसारङ्गवर्गा मूलस्रस्तैः पत्रिणश्चांशदेशैः ॥३१६॥
हर्म्यं रम्यं चन्द्रिकाधौतपृष्ठं कान्तोच्छिष्टा वारुणी वारिमिश्रा । २०
मालाः कण्ठे पाटला मल्लिकानां सद्यो ग्रीष्मं हन्त हेमन्तयन्ति ॥३१७॥
वायुश्चात्र नैर्ऋतोऽनियतदिक्को वा । यथा—
सोऽयं करैस्तपति वह्निमयैरिवार्कः साङ्गारविस्तारभरेव धरा समग्रा ।
वायुः कुकूलमिव वर्षति नैर्ऋतश्च कार्शानवैरिव शरैर्मदनश्च हन्ति ॥३१८॥

यथा च— २५

वात्याचक्रकचुम्बिताम्बरभुवः स्थूला रजोदण्डकाः
संग्रथ्नन्ति भविष्यदभ्रपटलस्थूणावितर्कं नभः ।
किं चान्यन्मृगतृष्णिकाम्बुविसरैः पात्राणि वीतार्णसां
सिन्धूनामिह सूचयन्ति दिवसेष्वागामिनीं सम्पदम् ॥३१९॥

[ ]

1. A. B. C. वलयश्च K. M. वलयाश्च

चतुरवस्थश्च ऋतुः । सन्धिः शैशवं प्रौढिरनुवृत्तिश्च । ऋतुद्वयमध्यं सन्धिः । स शिशिरवसन्तयोर्यथा—

च्युतसुमनसः कुन्दाः पुष्पोद्गमेष्वलसा द्रुमा
मनसि च गिरं ग्रथ्नन्तीमे किरन्ति न कोकिलाः ।
५ अथ च सवितुः शीतोल्लासं लुनन्ति मरीचयो
न च जरठतामालम्बन्ते क्लमोदयदायिनीम् ॥ ३२० ॥
[ औ. वि. च. पृ. १४६. मालवकुवलयस्य ]

वसन्तस्य शैशवं यथा—

गर्भग्रन्थिषु वीरुधां सुमनसो मध्येऽङ्कुरं पल्लवाः
१० वाञ्छामात्रपरिग्रहः पिकवधूकण्ठोदरे पञ्चमः ।
किं च त्रीणि जगन्ति जिष्णु दिवसैर्द्वित्रैर्मनोजन्मनो
देवस्यापि चिरोज्झितं यदि भवेदभ्यासवश्यं धनुः ॥ ३२१ ॥

प्रौढिर्यथा—

साम्यं सम्प्रति सेवते विचकिलं षाण्मासिकैर्मौक्तिकैः
१५ कान्ति कर्षति काञ्चनारकुसुमं माञ्जिष्ठधौतात् पटात् ।
हूणीनां कुरुते मधूकमुकुलं लावण्यलुण्टाकतां
लाटीनामिनिभं चकास्ति च पतद् वृन्ताग्रतः केसरम् ॥३२२॥
[ वि. शा. भ. अं. १ श्लो. २५ ]

(62) अतिक्रान्तर्तुलिङ्गं यत्कुसुमाद्यनुवर्तते ।
लिङ्गानुवृत्तिं तामाहुः सा ज्ञेया काव्यलोकतः ॥
२० [ ]

वर्षासु ग्रीष्मलिङ्गाब्जविकासानुवृत्तिः । यथा—

खं वस्ते कलविङ्ककण्ठमलिनं कादम्बिनीकम्बलं
चर्चां पारयतीव दर्दुरकुलं कोलाहलैरुन्मदम् ।
२५ गन्धं चुम्बति सिक्तलाजसदृशं वर्षेण दग्धा स्थली
दुर्लक्ष्योऽपि विभाव्यते कमलिनीहासेन भासां पतिः ॥३२३॥

किं च—

(63) ग्रैष्मिकसमयविकासी कथितो धूलीकदम्ब इति लोके ।
जलधरसमयप्राप्तौ स एव धाराकदम्बः स्यात् ॥
[ ]

यथा—

धूलीकदम्बपरिधूसरदिङ्मुखस्य रक्तच्छटासुरशरासनमण्डनस्य[1] ।
दीप्तायुधाशनिमुचो ननु नीलकण्ठ नोत्कण्ठसे समरवारिधरागमस्य ॥३२४॥
[　　　　]

जलसमयजायमानां जातिं यां कर्दमेन जनयन्ति ।　　५
सा शरदि महोत्सविनी गन्धान्वितषट्पदा[2] भवन्ति ॥ ३२५[×] ॥
[　　　　]

यथा—

स्थूलावश्यायबिन्दुद्युतिदलितबृहत्कोरकग्रन्थिभाजो
जात्या जालं लतानां जरठपरिमलप्लावितानां जजृम्भे ।　　१०
नानाहंसोपधानं सपदि जलनिधेश्वोत्ससर्पापरस्य
ज्योत्स्नाशुक्लोपधानं शयनमिव शशी नागभोगाङ्कमम्भः ॥३२६॥
[　　　　]

स्तोकानुवृत्तिं केतक्या अपि केचिदिच्छन्ति । यथा—
असूच्यत शरत्कालः केतकीधूलिधूसरैः ।　　१५
पद्मातामैर्नवायात चरणैरिव वासरैः ॥ ३२७ ॥
[　　　　]

(64) शरद्भवानामनुवृत्तिरत्र बाणासनानां सकुरण्टकानाम् ।
हेमन्तवक्त्रे यदि दृश्यतेऽपि न दृश्यते बन्धविधिः कवीनाम् ॥
[　　　　]　　२०

हेमन्तशिशिरयोरैक्ये सर्वलिङ्गानुवृत्तिरेव । उक्तं च—(65) द्वादशमासः संवत्सरः, पञ्चर्तवो हेमन्तशिशिरयोः समासेन ।

(66) मरुबकदमनकपुन्नागपुष्पलिङ्गानुवृत्तिभिः सुरभिः ।
रचनीयश्चित्रश्रीः किञ्चित्कुन्दानुवृत्त्या च ॥
[　　　　]　　२५

यथा—

गेहे वाहीकयूनां वहति दमनको मञ्जरीकर्णपूरान्
उन्मादः पामरीणां मरुति मरुबकामोदिनि व्यक्तिमेति ।

---

1. A. B. °हासशरासन°　2. A. B. गन्धान्वित × The readings of K. M. are correct: °कार्दमीति निगदन्ति । and °पदा भवति ॥

सद्यो भङ्गानुसारस्रुतसुरभिशिराशीकरः साहकारः[1]
सर्पन्नम्भः शरावे रचयति च रसो रेचकीचक्रकाणि ॥३२८॥
[ ]

यथा वा—

कुन्दे मन्दस्तमाले मुकुलिनि विकलः कातरः किंकिराते
रक्ताशोके सशोकश्चिरमतिविकचे चम्पके कुञ्चिताक्षः ।
पान्थः खेदालसोऽपि श्रवणकटुरटच्चक्रमभ्येति धुन्वन्
सोत्कण्ठः षट्पदानां नवमधुपटलीलम्पटं कर्पटेन ॥ ३२९ ॥
[ ]

एवमन्याप्यनुवृत्तिः ।

(67) विचकिल[2]केसरपाटलचम्पकपुष्पानुवृत्तयो ग्रीष्मे ।
तत्र च तुहिनर्तुभवं मरुबकमपि केचिदिच्छन्ति ॥

यथा—

अभिनवकुशसूचिस्पर्धि कर्णे शिरीषं
मरुबकपरिवारं पाटलादामकण्ठे ।
स तु सरसजलार्द्रोन्मीलितः सुन्दरीणां
दिनपरिणतिजन्मा कोऽपि वेषश्चकास्ति ॥ ३३० ॥

एवमन्यदपि कविप्रसिद्ध्याभ्यूह्यम् ।

(68) शोभास्रग्गन्धरसैः फलार्चनाभ्यां च पुष्पमुपयोगि ।
षोढा दर्शितमेतत्तत्सप्तममनुपयोगि तथा ॥
यत्प्राग्विमासे कुसुमं निबद्धं तदुत्तरे बालफलं विधेयम् ।
तदग्रिमे प्रौढिधरं च कार्यं तदग्रिमे पाकपरिष्कृतं च ॥
द्रुमोद्भवानां विधिरेष दृष्टो वल्लीफलानां न महाननेहा[3] ।
तेषां द्विमासावधिरेव कार्यः पुष्पे फले पाकविधौ च कालः ॥
अन्तर्व्याजं बहिर्व्याजं बाह्यान्तर्व्याजमेव च ।
सर्वव्याजं बहुव्याजं निर्व्याजं च तथा फलम् ॥
लकुचाद्यन्तर्व्याजं तथा बहिर्व्याजमत्र मोचादि ।
आम्राद्युभयव्याजं सर्वव्याजं च ककुभादि ॥
पनसादिबहुव्याजं नीलकपित्थादि भवति निर्व्याजम् ।
सकलफलानां षोढा ज्ञातव्यः कविभिरिति भेदः ॥
[ ]

1. N. गन्धा° 2. A. B. विचिकिल 3. A. B. महाननेहाः

यदुक्तम्--

(16) अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् ।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा ।। इति
[ ध्वन्यालोक उ. ३. ]

भक्त्या शब्दार्थयोर्दोषा इत्युक्तम् । तत्र च शब्दस्य पदवाक्यरूपत्वात्प्रथमं द्वौ पददोषावाह— ५

**८८) निरर्थकासाधुत्वे पदस्य ॥४॥**

दोष इति वर्तते । कृतसमासयोर्भावप्रत्ययः । तेन निरर्थकत्वमसाधुत्वं च पदस्य दोषौ । एवमुत्तरत्रापि योज्यम् । तत्र चादीनां पूरणार्थत्वे निरर्थकत्वं यथा— १०

मुह्यन्मुहुर्मुहुरहं चपलाकुलाक्षः
कृत्वा स्खलन्ति भवतोऽभिमुखं पदानि ।

---

तदेवं देशकालौ व्याख्यातौ ॥

**वयः** शैशवादिकम् ।

**जातिः** स्त्रीपुंसादिका ब्राह्मणत्वादिका वा । आदिग्रहणाद्विद्यावित्तकुलपात्रादयो लभ्यन्ते । १५

**वेषः** कृत्रिमं रूपम् ।

**व्यवहारश्चेष्टा** । आदिग्रहणादाकारवचनादयो ज्ञेयाः । वेषव्यवहारादीति देशादिभिः प्रत्येकमभिसम्बध्यते । तेन देशे वेषस्य व्यवहारस्याकारस्य वचनस्य वा, औचित्येन निबन्धः करणीय इत्यर्थः । एवं कालादौ योज्यम् । २०
यथा **कान्यकुब्जाद्यार्यदेश**[1] उद्धतो वेषो दारुणो व्यवहारो भयंकर आकारः परुषं च[2] वचनमनुचितम् । म्लेच्छेषु त्वेतदेवोचितम् । तथा नागरेषु यदुचितं तदेव ग्राम्येष्वनुचितमिति । यथा—

परिभ्रमन्मूर्धजषट्पदाकुलैः स्मितोदयादर्शितदन्तकेसरैः ।
मुखैश्चलत्कुण्डलरश्मिरञ्जितैर्नवातपामृष्टसरोजचारुभिः ॥३३१॥ २५
[ कि. स. ४. श्लो. १४ ]

गोपीनां हि ग्राम्यत्वात्कनककुण्डलान्यनुचितानीति । एवं कालादावप्युन्नेयम् ।

---

1. A. B. C. कन्यकुब्ज　　2. C. drops च

स्वामिन् भवच्चरणयोः शरणं प्रपन्नः
संसारदारुणदरेण हि कांदिशीकः ॥२०१॥
[ ]

पदैकदेशः पदमेव तन्निरर्थकत्वं यथा—

५ आदावञ्जनपुञ्जलिप्तवपुषां श्वासानिलोल्लासित-[1]
प्रोत्सर्पद्विरहानलेन च ततः सन्तापितानां दृशाम् ।
सम्प्रत्येव निषेकमश्रुपयसा देवस्य चेतोभुवो
भल्लीनामिव पानकर्म कुरुते कामं कुरङ्गेक्षणा ॥२०२॥
[ ]

१० अत्र दृशामिति बहुवचनमनर्थकम् । कुरङ्गेक्षणाया एकस्या एवोपादनात् ।

न च—

अलसवलितैः प्रेमाद्रार्द्रैर्मुहुर्मुकुलीकृतैः
क्षणमभिमुखैर्लज्जालोलैर्निमेषपराङ्मुखैः ।
१५ हृदयनिहितं भावाकूतं वमद्भिरिवेक्षणैः
कथय सुकृती कोऽयं मुग्धे त्वयाद्य विलोक्यते ॥२०३॥
[ अ. श. श्लो. ४. ]

इत्यादिवद् व्यापारभेदाद् बहुत्वम्, व्यापाराणामनुपात्तत्वात् । न च व्यापारेऽत्र दृक्शब्दो वर्तते ।

२० यमकादौ निरर्थकत्वं न दोष इति केचित् । यथा—

योषितामतितरां नखलूनं गात्रमुज्ज्वलतया न खलूनम् ।
बभौ मुखेनाप्रतिमेन काचन श्रियाधिका तां प्रति मेनका च न ॥२०४॥
[ शि. व. स. १०. श्लो. ९० ]

---

1. I. श्वासानलो

शब्दशास्त्रविरोधोऽसाधुत्वम् । यथा—
उन्मज्जन्मकर इवामरापगाया वेगेन प्रतिमुखमेत्य बाणनद्याः ।
गाण्डीवी कनकशिलानिभं भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्षः।२०५।
[ कि. स. १७. श्लो. ६३ ]

अत्र हन्तेर्नाकर्मकत्वम्, न स्वाङ्गकर्मकत्वमित्यात्मनेपदाप्राप्तेः ५
'आजघ्ने' पदमसाधु ।

'न दोषोऽनुकरणे' इति वक्ष्यमाणत्वात् 'पश्यैष च गवित्याह' इत्यत्र न दोषः ।

अथ त्रयोदशवाक्यदोषानाह—

**८९) विसन्धिन्यूनाधिकोक्तास्थानस्थपदपतत्प्रकर्ष-समाप्तपुनरात्ताविसर्गहतवृत्तसंकीर्णगर्भितभग्नप्रक्रमानन्वितत्वानि वाक्यस्य ॥५॥** १०

दोष इति वर्तते । तत्र सन्धिः स्वराणां समवायः संहिताकार्येण द्रवद्रव्याणामिवैकीभावः, कवाटवत्स्वराणां व्यञ्जनानां च प्रत्यासत्तिमात्ररूपो वा । तस्य विश्लेषाद[1]श्लीलत्वात्कष्टत्वाच्च वैरूप्यं विसन्धित्वम् । १५
विश्लेषाद्यथा—

कमले इव लोचने इमे अनुबध्नाति विलासपद्धतिः ॥ २०६ ॥
लोलालकानुविद्धानि आननानि चकासति ॥२०७॥
[ ]

संहितां न करोमीति स्वेच्छा सकृदपि दोषः । प्रकृतिस्थत्वविधाने त्वसकृत् । ( 17 ) 'संहितैकपदवत्पादे[2]ष्वर्धान्तवर्जम्' इति हि काव्यसमयः । २०

अश्लीलत्वात्, यथा—
विरेचकमिदं नृत्यमाचार्याभासयोजितम् ॥ २०८ ॥
[ ] १५

**विरेचकमिति** । विगतं ग्रीवादीनां रेचकं भ्रमणं यत्र । असम्यगाचार्येण योजितमिति प्रकृतोऽर्थः । विरेचकं प्रवर्तकमिति च ।

1. P. विश्लेषोद°  2. I. पादेऽर्धान्त

अत्र ‘विरेचकम्’ इति जुगुप्सा । ‘याभ’ इति व्रीडा ।

तथा—

चकाशे पनसप्रायैः पुरी षण्डमहाद्रुमैः ॥ २०९ ॥

[ ]

५ अत्र ‘शेप’ इति ‘पुरीषम्’ इति ‘महाद्रुम’ इति च व्रीडा-जुगुप्सामङ्गलार्थस्मारकत्वादश्लीलाः ।

कष्टत्वात्, यथा—

मञ्जर्युद्गमगर्भास्ते गुर्वाभोगा द्रुमा बभुः ॥२१०॥

वक्त्राद्यौचित्ये चेति वक्ष्यमाणत्वाद्दुर्वचकादौ न दोषः । यदाहुः-

१० (18) शुकस्त्रीबालमूर्खाणां मुखसंस्कारसिद्धये ।

प्रहासासु च गोष्ठीषु वाच्या दुर्वचकादयः ॥

अवश्यवाच्यस्यानभिधाने न्यूनपदत्वं यथा—‘तथाभूतां दृष्ट्वा’ इति । अत्रास्माभिरिति खिन्न इत्यस्मात्पूर्वमित्थमिति च नोक्तमिति न्यूनत्वम् ।

---

**अवश्यवाच्यस्येति** । अवश्यंभावेनाभिधेयस्याविनाभावेनौचित्येन

१५ वा प्रतीयमानस्यानभिधानेऽपि न दोषः[1] । यथा—

कियन्मात्रं जलं विप्र जानुदघ्नं नराधिप ।

तथापीयमवस्था ते न सर्वत्र भवादृशाः ॥ ३३२ ॥

[ भो. प्र. श्लो. १८५ ]

यत्र ह्यन्यत्क्रियापदं नास्ति तत्रास्तिर्भवन्तीपरः प्रथमपुरुषे प्रयुज्यत इति

२० न्यायादस्तिर्लभ्यते । यथा च—

मा भवन्तमनलः पवनो वा वारणो मदकलः परशुर्वा ।

वज्रमिन्द्रकरविप्रसृतं वा स्वस्ति तेऽस्तु लतया सह वृक्ष ॥३३३॥

[ ]

---

× विरे, याभ, मैः, म, जुगुप्सा. are indistinct in P. The copyist has written the lines विरेचक etc on the margin.

1. A. drops from यमान to दृति, that is about twenty lines.

तथा—

त्वयि निबद्धरतेः प्रियवादिनः प्रणयभङ्गपराङ्मुखचेतसः ।

कमपराधलवं[1] मम पश्यसि त्यजसि मानिनि दासजनं यतः ।२११।

[ वि. अं. ४. श्लो. २९ ]

अत्रापराधस्य लवमपीत्यप्यर्थो[2] वाच्यः । ५

तथा—

नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः

सुरधनुरिदं दूराकृष्टं न नाम[3] शरासनम् ।

---

अत्रौचित्याद्धाक्षीदित्यादिक्रिया गम्यन्ते । तथा—

मा धाक्षीन्मा भाङ्क्षीन्मा छैत्सीज्जातुचिद्भत भवन्तम् । १०

सुकृतैरध्वन्यानां मार्गतरो स्वस्ति तेऽस्तु सह लतया ॥३३४॥

[ ]

अत्रानल इत्यादीनि कर्तृपदान्यौचित्यात्प्रतीयन्ते ।

एवं चानभिहितवाच्यत्वं पृथग्दोषत्वेन न वाच्यम् । धर्मिधर्मोभयात्मनो वस्तुनः प्रतिपत्तये पुनः स एव शब्दस्तत्पर्यायः सर्वनाम वावश्यं वाच्यमपि नोक्तं यत्र तत्रापि न्यूनत्वमिति केचिद्वदन्ति । यथा— १५

द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।३३५। इति ।

[ कु. सं. स. ५. श्लो. ७१ ]

अत्र हि कपालिशब्दो धर्मिधर्मोभयार्थवृत्तिः[4] संज्ञिमात्रं वा प्रत्याययेत् कपालसम्बन्धकृतं वा गर्हितत्वमुभयमपि वेति त्रयः पक्षाः । तत्र प्रथमपक्षे विशेषप्रतिपत्तये कपालिग्रहणमपरमपि कर्तव्यम्, येनास्य गर्हितत्वं प्रतीयते । द्वितीयपक्षे तस्याश्रयप्रतिपत्तये तेनैव तत्पर्यायेण सर्वनाम्ना वा विशेष्यमवश्यमुपादेयं भवति, येन तस्य विवक्षितार्थसिद्धावार्थो हेतुभावोऽवकल्प्येत । तत्र तेनैवोपादाने यथा— २०

सततमनङ्गोऽनङ्गो[5] न वेत्ति परदेहदाहदुःखमहो ।

यमदयं दहति मामनलशरो ध्रुवमसौ न कुसुमशरः ॥३३६॥ इति । २५

[ ]

---

1 I. किम॰   2. I. मपीत्यर्थो.   3. I. दूराकृष्टं न तस्य

4. A. B. ॰धर्मोनयार्थे॰   5. C. सतत

अयमपि पटुर्धारासारो न बाणपरम्परा
कनकनिकषस्निग्धा विद्युत्प्रिया न ममोर्वशी ॥२१२॥
[ वि. अं. ४. श्लो. १. ]

---

पर्यायेण यथा—
५ कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये ॥ ३३७॥
[ कु. सं. स. ३. श्लो. १० ]

अत्र हि हरस्येति पर्यायशब्देनोपात्तस्यार्थस्य पिनाकपाणित्वं धैर्यच्युतेरश-[1]क्यकरणीयतायामार्थो हेतुः । अन्यथा हरग्रहणस्य पौनरुक्त्यं स्यादिति । यथा च—
एकः शङ्कामहिवररिपोरत्यजद्वैनतेयात् ॥३३८॥ इति ।
१० सर्वनाम्ना यथा—
दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः ॥ ३३९ ॥
[ वि. शा. भ. अं. १ श्लो. २ ]

अत्रापि ता इति सर्वनामोपात्तस्यार्थस्य वामलोचनात्वं मनसिजदाहजीवन-योरन्योन्यविरुद्धयोरप्यभिन्नहेतुकत्वोपपत्तावार्थो हेतुः । इतरथा वामलोचना-
१५ त्वस्य पुनरुपादानप्रसङ्गः । अत एव तृतीयः पक्षो न संभवत्येव । एकस्यैव शब्दस्यावृत्तिमन्तरेणानेकार्थप्रतिपादनसामर्थ्या[2]संभवात् । न चासावनिबन्धना शक्या कल्पयितुम् । न चैषामेकमप्यत्रोक्तमिति न्यूनपदत्वमिति । वयं तु ब्रूमः न हि शब्दस्याभिधैव वृत्तिरिष्यते येनैकस्मिन्नेवार्थे उपक्षीणत्वात्तस्याः शब्दान्तर-
२० मर्थान्तरार्थं प्रयुज्येत तदावृत्तिनिबन्धनं वा किञ्चित्परिकल्प्येत । किं तु वृत्त्य-न्तरमपि सहृ[3]दयैकसंवेद्यं व्यक्तिस्वभावमस्त्येव । एवं च वृत्त्यन्तरोपकल्पनाया-मेकस्मादेव शब्दाद्वाच्येन सहैव व्यङ्ग्यस्यापि प्रतीतिरनिवारितप्रसरैव । तथा हि—परमेश्वरवाचकसहस्रसंभवेऽपि 'कपालिनः' इति तद्वाचकतया प्रयुक्तं बीभत्सरसा-लम्बनविभावतां सूचयज्जुगुप्सास्पदत्वं ध्वनति । सम्प्रति द्वयं चेत्यतीव रम-
२५ णीयम् । यत्किल पूर्वमेका सैव दुर्व्यसनदूषितत्वेन शोचनीया जाता । सम्प्रति पुनस्त्वया तस्यास्तथाविधदुरध्यवसाय[4]साहायकमिवारब्धमित्युपहस्यते । प्रार्थनाशब्दो-ऽप्यतितरां रमणीयः । यस्मात्काकतालीययोगेन तत्समागमः कदाचिन्न वाच्यता-वहः । प्रार्थना पुनरत्रात्यन्तकौलीनकलङ्ककारिणी । सा च त्वं चेति द्वयोरप्य-नुभूयमानपरस्परस्पर्धिलावण्यातिशयप्रतिपादनपरत्वेनोपात्तम् । कलावतः कान्ति-
३० मतीति च मतुप्प्रत्ययेन द्वयोरपि प्रशस्यता प्रतीयते ।

---

1. B. C. यथा वा    2. B. drops सं
3. A. B. drop हृदयैकसं    4. B. drops साहायक

अत्र भ्रान्तौ निवृत्तायां तद्विषयभूतानां[1] नवजलधरसुरधनुर्धारासा-[2]
राणामिव विद्युतोऽपीदमापरामर्शो वाच्यः ।

यथा वा उपमायाम्—

संहयचक्काअजआ[3] वियसिअकमला मुणालसंछण्णा ।

वावी बहुव्वरोअण[4]विलित्तथणया सुहावेइ[5] ॥२१३॥

[ ]

अत्र कमलमृणालप्रतिकृत्योर्मुखबाह्वोः केनापि पदेनानुपादाना-
न्न्यूनपदत्वम् ।

क्वचिद्गुणः, यथा—

गाढालिङ्गनवामनीकृतकुचप्रोद्भूतरोमोद्गमा

सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा ।

मा मा मानद माति मामलमिति क्षामाक्षरोल्लापिनी

सुप्ता किन्नु मृता नु किं मनसि मे लीना विलीना नु किम् ॥२१४॥

[ अ. श. श्लो. ४० ]

क्वचिन्न गुणो न दोषः, यथा–'तिष्ठेत्कोपवशात्' इति । अत्र
पिहितेत्यतोऽन्तरं 'नैतत् यतः' इत्येतैर्न्यूनैः पदैर्विशेषबुद्धेरकरणान्न
गुणः । उत्तराप्रतिपत्तिः पूर्वां प्रतिपत्तिं बाधत इति न दोषः ।

अधिकपदत्वं यथा—

स्फटिकाकृतिनिर्मलः प्रकामं प्रतिसंक्रान्तनिशातशास्त्रतत्त्वः ।

अनिरुद्धसमन्वितोक्तियुक्तिः प्रतिमल्लास्तमयोदयः स कोऽपि ॥२१५॥

[ ]

1. I. °भूतयोः, 2. I. धारासारयोः, 3. I. °क्कायजुया 4. I. रोयण
5. L. reads the verse as follows: सहयविक्काअविआविअसिअकम-
लमुणालसंछण्णा । वावी बहुव्व रोयणविलित्तथयरा सुहवइणा ॥

अत्र 'आकृति'शब्दोऽधिकः ।

तथा–ताडीजङ्घो निजघ्ने कृततदुपकृतिर्यत्कृते गौतमेन ॥२१६॥

[ ]

अत्र 'तत्'शब्दः ।

५ तथा—

दलत्कन्दलभाग्भूमिः सनवाम्बुदमम्बरम्[1] ।

वाप्यः फुल्लाम्बुजयुजो जाता दृष्टिविषं मम ॥ २१७ ॥

[ ]

अत्र भजिः सहशब्दो युजिश्चाधिकः ।

१० तथा–'बिसकिसलयच्छेदपाथेयवन्तः' ।२१८। इति ।

[ मे. दू. श्लो. १९ ]

त्वगुत्तरासङ्गवतीमधीतिनीम् ।२१९। [कु. सं. स. ५. श्लो. १६]

इति च मत्वर्थीयस्याधिक्यम् । बहुव्रीहिसमासाश्रयेणैव तदर्थावगतिसिद्धेः । यदाहुः– (' कर्मधारयमत्वर्थीयाभ्यां बहुव्रीहिर्लघुत्वात्प्रक्रमस्य ' ) । तथा—

१५

वासो जाम्बवपल्लवानि जघने गुञ्जास्रजो भूषणम् ।२२०। इति

[ ]

तदीयमातङ्गघटाविघट्टितैः ॥२२१॥ इति ।

[ ]

२० येनाकुम्भनिमग्नवन्यकरिणां यूथैः पयः पीयते ॥२२२॥

इत्यत्र तद्धितप्रत्ययस्याधिक्यम् । षष्ठीसमासाश्रयेणैव तदर्थावगतेः । यत्र त्वर्थान्तरे तद्धितस्योत्पत्तिर्न तत्र समासात्तत्प्रतीतिरिति[2] न तस्याधिक्यम् । यथा—

1. L. °मन्दरम् 2. I. समासात् प्रतीति°

अथ भूतानि वार्तघ्नशरेभ्यस्तत्र तत्रसुः ॥२२३॥ इति। [ ]
अत्र हि अपत्यार्थे तद्धितो नेदमर्थे इति।

तथा—

किं पुनरीदृशे दुर्जाते जाते[1] जातामर्षनिर्भरे च मनसि नास्त्येवावकाशः शोकक्रियाकरणस्य ॥२२४॥ [ ] ५

इत्यत्र क्रियाकरणयोः। यथा वा उपमायां—

अहिणवमणहरविरइअवलयविहूसा विहाइ नववहुआ[2]।
कुंदलयव्व समुप्फुल्लगुच्छपरिलिंत[3]भमरगणा ॥२२५॥
[ ] १०

अत्रोपमेयस्य नीलरत्नादेरनिर्देशे भ्रमरगणपदमभिरिच्यत इत्यधिकपदत्वम्।

तथा—

अलिभिरञ्जनबिन्दुमनोहरैः कुसुमभक्तिनिपातिभिरङ्कितम्[4]।
न खलु शोभयति स्म वनस्थलीं न तिलकस्तिलकः प्रमदामिव ॥२२६। १५
[ र. वं. स. ९. श्लो. ४१ ]

अत्र तिलकप्रमदयोरेकतरस्य समासोक्तित एवाक्षेपादन्यतरस्याधिकत्वम्[5]। यथा वा रूपके—

शोकानलधूमसम्भारसम्भूताम्भोदभरितमिव वर्षति नयनवारिधाराविसरं शरीरम् ॥२२७॥ २०
[ ]

अत्र शोकस्य केनचित्साधर्म्येणानलत्वेन रूपणमस्तु, धूमस्य पुनर्न किञ्चिद्रूप्यमस्तीति—अधिकपदत्वम्।

1. I. drops जाते 2. I. वहुया 3. N. परिच्छित्त
4. कुसुमपंक्ति° 5. I. °कपदत्वम्

तथा

निर्मोकमुक्तिमिव गगनोरगस्य लीलाललाटिकामिव त्रिविष्टपविटस्य ॥२२८॥ [ ]

अत्र रूपकेणैव साम्यस्य प्रतिपाद्यमानत्वादिव[1] शब्दस्याधिक्यम् । यथा वा समासोक्तौ—

स्पृशति तिग्मरुचौ ककुभः करैर्दयितयेव विजृम्भिततापया ।
अतनुमानपरिग्रहया स्थितं रुचिरया चिरयापि दिनश्रिया ।२२९।
[ हरविजय स. ३. श्लो. ३७ ]

अत्र तिग्मरुचेः ककुभां च यथासदृशविशेषणवशेन व्यक्तिशेषपरिग्रहेण[2] च नायकतया व्यक्तिस्तथा ग्रीष्मदिवसश्रियोऽपि प्रतिनायिकात्वेन भविष्यतीति दयितयेत्यधिकम् । यथा वान्योक्तौ—

आहूतेषु विहंगमेषु मशको नायान्पुरो वार्यते
मध्ये वा धुरि वा लसँस्तृणमणिर्धत्ते मणीनां धुरम् ।
खद्योतोऽपि न कम्पते प्रचलितुं मध्येऽपि तेजस्विनाम्
धिक् सामान्यमचेतनं प्रभुमिवानामृष्टतत्त्वान्तरम् ॥२३०॥
[ भल्लट. श. श्लो. ६९. ]

अत्राचेतसः प्रभोरप्रस्तुतविशिष्टसामान्यद्वारेणाभिव्यक्तेः प्रभुमिवेत्यधिकम् । तथा—

द्रविणमापदि भूषणमुत्सवे शरणमात्मभये निशि दीपकः ।
बहुविधार्थ्युपकारभरक्षमो भवति कोऽपि भवानिव सन्मणिः॥२३१॥
[ भल्लट. श. श्लो. ४. ]

अत्र भवदर्थस्यान्योक्तिबलेनैवाक्षेपात् 'भवानिव' इत्यधिकम् । क्वचिद्गुणो यथा—

यद्वञ्चनाहितमतिर्बहुचाटुगर्भं
कार्योन्मुखः खलजनः कृतकं ब्रवीति ।

---

1. P. त्वादिव inditsint 2. I. विशेषलिङ्गपरिग्रहेण

तत्साधवो न न विदन्ति विदन्ति किन्तु
कर्तुं वृथा प्रणयमस्य न पारयन्ति ॥२३२॥
[ सुभाषितावली. श्लो. २७१ भगवत्तरारोग्यस्य ]

अत्र विदन्तीति द्वितीयमन्ययोगव्यवच्छेदपरम् ।

उक्तपदत्वं द्विःप्रयोगः[1] । (19) नैकं पदं द्विः प्रयोज्यं प्रायेणेति हि ५
समयः [ का. लं. सू. अधि ५ अ. १. सू. १ ] । यथा—

अधिकरतलतल्पं कल्पितस्वापलीला
परिमलननिमीलत्पाण्डिमा गण्डपाली ।
सुतनु कथय कस्य व्यञ्जयत्यञ्जसैव
स्मरनरपतिलीलायौवराज्याभिषेकम् ॥ २३३ ॥ १०
[ ]

अत्र लीलेति ।

क्वचिद्गुणो यथा लाटानुप्रासे—

जयति क्षुण्णतिमिरस्तिमिरान्धैकवल्लभः ।
वल्लभीकृतपूर्वाशः पूर्वाशातिलको रविः ॥ २३४ ॥ १५
[ ]

क्वचिच्छब्दशक्तिमूले ध्वनौ यथा—

ताला जायन्ति गुणा जाला ते सहिअएहिं घिप्पंति ।
रविकिरणाणुग्गहियाइं हुंति कमलाइं कमलाइं ॥ २३५ ॥
[ वि. बा. ली. ] २०

**क्वचिद्गुण इति** । लाटानुप्रासव्यङ्ग्यविहितानुवाद्यत्वेषु ।
**तिमिरान्धेति** । तिमिरान्धाः घूकवर्जाः पक्षिणः
**तालेति** तदा । **जालेति** यदा ।

1. L. द्विप्रयोगः

विहितस्यानुवाद्यत्वे यथा—

जितेन्द्रियत्वं विनयस्य साधनं[1] गुणप्रकर्षो विनयादवाप्यते ।

गुणप्रकर्षेण जनोऽनुरज्यते जनानुरागाच्च[2] भवन्ति सम्पदः ॥ २३६ ॥

[ सुभाषितावली २९१७ भारवेः ]

५ अस्थानस्थपदत्वं[3] यथा—

प्रियेण संग्रथ्य विपक्षसंनिधौ निवेशितां वक्षसि पीवरस्तने ।

स्रजं न काचिद् विजहौ जलाविलां वसन्ति हि प्रेम्णि गुणा न वस्तुनि।२३७

[ कि. स. ८. श्लो. ३७ ]

अत्र 'स्रजं काचिन्न जहौ' इति वाच्यम् । तथा—

१० द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।

कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ।२३८

[ कु. सं. स. ५. श्लो. ७१ ]

अत्र त्वंशब्दादनन्तरश्चकारो युक्तः । तथा[4]—

शक्तिर्निस्त्रिंशजेयं तव भुजयुगले नाथ दोषाकरश्रीः

१५ वक्त्रे पार्श्वे तथैषा[5] प्रतिवसति महाकुट्टिनी खड्गयष्टिः ।

---

(69) 'डेर्डाहिडालाइया काले' [ ] इति यत्तद्भ्यां डेर्डालादेशः ।

**त्वंशब्दादिति** । समुच्चयद्योतको हि चकारः । समुच्चीयमानार्थादनन्तरमेव प्रयोक्तव्य इति हि क्रमः । एवं पुनःशब्दोऽपि व्यतिरिच्यमानार्थानन्तर्येणैव प्रयोगमर्हति । अन्यत्र तु प्रयुज्यमानोऽस्थानस्थपदत्वं प्रयोजयति ।

२० यथा—

उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः ॥३४०॥

[ ]

---

1. I. कारणम्. 2. I. जनानुरागप्रभवा हि. 3. L. अस्थानस्थनत्वं पदत्वं
4. P. drops तथा. 5. P. तथैका

आज्ञेयं सर्वगा ते विलसति च पुनः किं मया वृद्धया ते
प्रोच्येवेत्थं प्रकोपाच्छशिकरसितया यस्य कीर्त्या प्रयातम् ॥२३९॥
[ सुभाषितावली श्लो. २५९६ ]

अत्र 'इत्थं प्रोच्येवइति न्याय्यम् । तथा—

लग्नं रागावृताङ्ग्या सुदृढमिह[1] ययैवासि यष्ट्यारिकण्ठे　५
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती ।
तत्सक्तोऽयं न किञ्चिद् गणयति विदितं तेऽस्तु तेनास्ति दत्ता
भृत्येभ्यः श्रीनियोगाद्गदितुमिव गतेत्यम्बुधिं यस्य कीर्तिः ।२४०।
[ सुभाषितावली २५९५ हर्षदत्तस्य ]

अत्र ' इति श्रीनियोगाद् ' इति वाच्यम् । तथा—　१०

तीर्थे तदीये गजसेतुबन्धात्प्रतीपगामुत्तरतोऽस्य गङ्गाम् ।२४१।
[ र. वं. स. १६. श्लो. १३ ]

इत्यत्र परामर्शनीयमर्थमनुक्त्वैव यस्तस्य तदा परामर्शः सोऽस्थान-
स्थपदत्वं दोषः । तथा—

---

अत्र हि पुनःशब्दस्तेनेत्यनन्तरं प्रयोज्यः ।　१५

**श्रीनियोगाद्वितीति** । तथा चोक्तम्—

(70) उक्तिस्वरूपावच्छेदफलो यत्रेतिरिष्यते ।
न तत्र तस्मात्प्राक्किञ्चिदुक्तेरन्यत्पदं वदेत् ॥
उपाधिभावात् स्वां शक्तिं स पूर्वत्रा दधाति हि ।
न च स्वरूपावच्छेदः पदस्यान्यस्य सम्मतः ॥　२०
इति नैवेतरेषामप्यव्ययानां गतिः समा ।
ज्ञेयेत्थमेवमादीनां तज्जातीयार्थयोगिनाम् ॥
यतस्ते चादय इव श्रूयन्ते यदन्तरम् ।
तदर्थमेवावच्छिद्युरासमञ्जस्यमन्यथा ॥ इति ।
[　　]　२५

एवं चाक्रमत्वं पृथग्दोषत्वेन न वाच्यम् । अस्थानस्थपदत्व एवान्तर्भावात् ।

**तदेति** । तच्छब्दस्य हि प्रक्रान्तोऽर्थो विषय इष्टो न प्रक्रंस्यमानः[2]

---

1. I. सततमिह　2. A. B. प्रक्रम्यमानः

कष्टा वैधव्यथा नित्यं कष्टश्च वहनक्लमः[1] ।
श्रवणानामलङ्कारः कपोलस्य तु कुण्डलम् ॥ २४२ ॥
[ ]

अत्र श्रवणानामिति पदं पूर्वार्धे निवेशयितुमुचितम् । (20) 'नार्धे
५ किञ्चिदसमाप्तं वाक्यम्' इति हि कविसमयः [ का. लं. सू. अधि. ५.
अ. १. सू. ६ ] । यथा वोत्प्रेक्षायाम्—

पत्तनिअंबप्फंसा ण्हाणुत्तिण्णाए सामलंगीए ।
विहुरा रुअंति[2] जलबिंदुएहिं बंधस्स व भएण ॥ २४३ ॥
[ गा. स. ६-५५. स. श. ५९६ ]

१० अत्र रोदनं बन्धनभयं चेत्युभयमुत्प्रेक्षितं तत्र प्राधान्यात् । रोद-
नाभिधायिन एव पदादनन्तरमुत्प्रेक्षावाचि पदं प्रयोक्तव्यमिति यदन्यत्र
प्रयुक्तं तदस्थानस्थपदम् । प्रधाने[3] ह्युत्प्रेक्षिते तदितरदर्थादुत्प्रेक्षितमेव
भवति । यदाह—

---

स्मृतिपरामर्शरूपत्वात् । स्मृतेश्चानुभूत एवार्थो विषयो नानुभविष्यमाणः ।
१५ अत्र च प्रतीतिमात्रमनुभवोऽभिमतो नेन्द्रियविषयभावः । न च गङ्गार्थः प्रतीत-
पूर्वो यः परामृश्येत । न चात्र प्रमादजः पादयोः पौर्वापर्यविपर्यय इति शक्यते
वक्तुम् । तत्रापि प्रतीपगमनहेतोः शाब्दस्य[4] तदीयतीर्थाभिधानव्यवधाने सत्य-
न्यस्यास्थानस्थपदत्वदोषस्याविर्भावापत्तेः तेन पादयोर्विपर्ययः, शाब्दस्य च
हेतोर्गङ्गाविशेषणमुखेनार्थत्वमित्युभयविपर्ययोऽत्र श्रेयान् ।

२० **निवेशयितुमुचितमिति** । तेनार्धान्तरैकवाचकत्वं पृथग्दोषत्वेन न
वाच्यमित्यर्थः ।

**तदितरदिति** । तस्मात्प्रधानादितरदप्रधानम् । यथा—

ज्योतीरसाश्मभवनाजिरदुग्धसिन्धुरत्युम्मिषत्प्रचुरतुङ्गमरीचिवीचिः ।
वातायनस्थितवधूवदनेन्दुबिम्बसंदर्शनादनिशमुल्लसतीव यस्याम् ॥२४१॥
[ ]

२५ अत्र प्रधाने उल्लसने उत्प्रेक्षितेऽप्रधानमिन्दुसंदर्शनमुत्प्रेक्षितमेव ।

---

1. I. कष्टौ नित्यश्च 2. I. रुवन्ति 3. I. प्राधान्ये
4. A. B. शब्दस्य

(21) एकत्रोत्प्रेक्षितत्वेन यत्रार्था बहवो मताः ।
तत्रेवादिः प्रयोक्तव्यः प्रधानादेव नान्यथा ॥ इति

पतत्प्रकर्षत्वं यथा—

कः कः कुत्र न घुर्घुरायितघुरीघोरो घुरेत्सूकरः
कः कः कं कमलाकरं विकमलं कर्तुं करी नोद्यतः ।    ५
के के कानि वनान्यरण्यमहिषा नोन्मूलयेयुर्यतः
सिंहीस्नेहविलासबद्धवसतिः पञ्चाननो वर्तते[1] ॥ २४४ ॥

[ ]

अत्र क्रमात्क्रममनुप्रासो घनयितव्यः ।

पतन्निबद्धः क्वचिद्गुणः, यथा—    १०

प्रागप्राप्तनिशुम्भशाम्भवधनुर्द्वैधाविधाविर्भवत्-
क्रोधप्रेरितभीमभार्गवभुजस्तम्भापविद्धः क्षणम् ।
उज्ज्वालः परशुर्भवत्वशिथिलत्वत्कण्ठपीठातिथि-
र्येनानेन जगत्सु खण्डपरशुर्देवो हरः ख्याप्यते ॥२४५॥

[ म. च. अं. २. श्लो. ३३ ]    १५

अत्र क्रोधाभावे पतत्प्रकर्षत्वं नास्ति ।

समाप्तपुनरात्तत्वं यथा—

ज्योत्स्नां लिम्पति चन्दनेन स पुमान् सिञ्चत्यसौ मालती-
मालां गन्धजलैर्मधूनि कुरुते स्वादून्यसौ फाणितैः ।
यस्तस्य प्रथितान् गुणान् प्रथयति श्रीवीरचूडामणे-    २०
स्तारत्वं स च शाणया मृगयते मुक्ताफलानामपि ॥२४६॥

[ ]

अत्र चूडामणेरिति समाप्ते वाक्ये तारत्वमित्यादि पुच्छप्रायं पुन-
रुपात्तं न चमत्करोति ।

1. I. विद्यते

क्वचिन्न गुणो न दोषः । यत्र न विशेषणमात्रदानार्थं पुनर्ग्रह-णमपि तु वाक्यार्थान्तरमेव क्रियते, यथा 'प्रागप्राप्ते' इति ।

रोर्लोपे उत्वादिना उपहतौ च विसर्गस्याभावोऽविसर्गत्वम् । यथा—

वीरो[1] विनीतो निपुणो वराकारो नृपोऽत्र सः ।
यस्य भृत्या बलोत्सिक्ता भक्ता बुद्धिप्रभान्विताः ॥ २४७ ॥
[ ]

हतं लक्षणच्युतं। यतिभ्रष्टं वा लक्षणानुसरणेऽप्यश्रव्यम्, अप्राप्त-[2]गुरुभावान्तलघु रसाननुगुणं च वृत्तं यत्र तद्भावो हतवृत्तत्वम् । यथा—

अयि पश्यसि सौधमाश्रितामविरलसुमनोमालभारिणीम् ।२४८।

अत्र वैतालीययुग्मपादे लघ्वक्षराणां षण्णां नैरन्तर्यं निषिद्धमिति लक्षणच्युतम् ।

एतासां राजति सुमनसां दाम कण्ठावलम्बि ॥ २४९ ॥
कुरङ्गाक्षीणां गण्डतलफलके स्वेदविसरः ॥ २५० ॥
[ ]

इत्यनयोश्चतुर्थे षष्टे च यतिर्न कृता—इति यतिभ्रष्टम् । एतदपवा-दस्तु छन्दोनुशासने[3]ऽस्माभिर्निरूपित इति[4] नेह प्रतन्यते ।
[ छ. शा. अ. १. सू. १५ वृत्तौ ]

अमृतममृतं कः सन्देहो मधून्यपि नान्यथा ।
मधुरमथ किं चूतस्यापि प्रसन्नरसं फलम् ।
सकृदपि पुनर्मध्यस्थः सन् रसान्तरविज्जनो
वदतु यदिहान्यत्स्वादु स्यात्प्रियादशनच्छदात् ॥ २५१ ॥
[ ]

अत्र 'यदिहान्यत्स्वादु' इत्यश्रव्यम् ।

अन्यास्ता गुणरत्नरोहणभुवः कन्या मृदन्यैव सा
संभाराः खलु तेऽन्य एव विधिना यैरेष सृष्टो युवा ।

1. I. धीरो 2. I. प्राप्तगुरु° 3. I. स्वछन्दो°
4. L. drops from °योश्चतुर्थे to नेह

श्रीमत्कान्तिजुषां द्विषां करतलात्स्त्रीणां नितम्बस्थलाद्
दृष्टे यत्र पतन्ति मूढमनसामस्त्राणि वस्त्राणि च ॥ २५२ ॥

अत्र 'वस्त्राण्यपि' इति पाठे लघुरपि गुरुत्वं भजते ।

हा नृप हा बुध हा कविबन्धो विप्रसहस्रसमाश्रय देव ।
मुग्धविदग्धसभान्तररत्न क्वासि गतः क्व वयं च तवैते ॥२५३॥  ५

[ ]

हास्यरसव्यञ्जकमेतद्वृत्तं करुणरसाननुगुणम् ।

वाक्यान्तरपदानां वाक्यान्तरपदैर्व्यामिश्रत्वं संकीर्णत्वम् । यथा—

कायं खाग्गइ[1] छुहिओ कूरं घल्लेइ निब्भरं[2] रुट्ठो[3] ।
सुणयं[4] गेण्हइ कंठे हक्केइ अ नत्तिअं[5] थेरो ॥ २५४ ॥  १०

अत्र काकं क्षिपति कूरं खादति कण्ठे नप्तारं गृह्णाति श्वानं भेषयतीति वक्तुमुचितम् । एकवाक्यतायां क्लिष्टमिति क्लिष्टाद्भेदः ।

क्वचिदुक्तिप्रत्युक्तौ गुणो यथा—

बाले, नाथ, विमुञ्च मानिनि रुषं, रोषान्मया किं कृतम्,
खेदोऽस्मासु, न मेऽपराध्यति भवान् सर्वेऽपराधा मयि ।  १५
तत्किं रोदिषि गद्गदेन वचसा, कस्याग्रतो रुद्यते,
नन्वेतन्मम, का तवास्मि, दयिता, नास्मीत्यतो रुद्यते ॥२५५॥

[ अ. श. श्लो. ५७ ]

वाक्यमध्ये वाक्यान्तरानुप्रवेशो[6] गर्भितत्वं यथा—

परापकारनिरतैर्दुर्जनैः सह संगतिः ।  २०
वदामि भवतस्तत्त्वं न विधेया कदाचन ॥ २५६ ॥

[ ]

1. I. खाइइ 2. I. कूरं घत्तेइ निज्झरं 3. L. N. रुद्धो
4. I. °गिन्हइ L. सुणइ गिण्हइ 5. I. निअत्तयं 6. I. °रप्रवेशो

अत्र तृतीयः पादो वाक्यान्तरमध्ये प्रविष्टः[1] ।

क्वचिद् गुणो यथा—

दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धा सा च वदन्त एव हि वयं रोमाञ्चिताः पश्यत ।
५ विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमो
यस्मादाविरभूत्कथाद्भुतमिदं यत्रैव चास्तं गतम् ॥ २५७ ॥
[ औ. चि. च. पृ. १३८ भट्टप्रभाकरस्य ]

अत्र वीराद्भुतरसवशात् 'वदन्त एव' इत्यादि वाक्यान्तरं मध्ये प्रविष्टं गुणाय ।

१० प्रस्तुतभङ्गो भग्नप्रक्रमत्वं यथा—

एवमुक्तो मन्त्रिमुख्यैः पार्थिवः प्रत्यभाषत ॥ २५८ ॥

अत्र 'उक्तः' इति प्रक्रान्ते 'प्रत्यभाषत' इति प्रकृतेर्भग्नप्रक्रमत्वम् । 'प्रत्यवोचत[2]' इति युक्तम् । यथा वा–

---

**प्रस्तुतभङ्ग[3] इति** । स[4] हि यथा । प्रक्रममेकरसप्रसृतां प्रतिपत्तृ[5]प्रतीतिं १५ रुन्धान इव परिस्खलनखेददायी रसभङ्गाय पर्यवस्यतीत्यर्थः ।

**प्रत्यवोचतेति तु युक्तमिति** । एवंविधस्य प्रक्रमाभेदाख्यस्य शब्दौचित्यस्य विध्यनुवादभावप्रकारत्वोपगमात् । यथा 'ताला जायन्ति' इति । यथा वा—

एमे अ जणो तिस्सा देइ कवोलोवमाइ ससिबिम्बम् ।
परमत्थविआरे उण चन्दो चन्दो च्चिअ वराओ ॥३४२॥ [ ]

२० अत्र ह्युत्कर्षापकर्षविवक्षया परिकल्पितभेदेऽप्येकस्मिन्नर्थे विधेयानुवाद्यविषयेणैकेनैवाभिधानेन विध्यनुवादभावो भणित इति प्रक्रमाभेदप्रकार एवायमिति मन्तव्यम् । केवलं पर्यायप्रक्रमभेदनिवृत्तये चन्दणमिति[6] पाठः परिणमयितव्यः । न चैवमुक्तपदत्वदोषप्रसङ्गः । यथान्ये मन्यन्ते—

---

1. I. °विष्टं 2. I. यथा प्रत्य
3. B. °भाग A. °भग 4. C. drops स हि
5. A. B. drop प्र 6. A. C. चन्द्रमणमिति C. चन्द्रमिण°

ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम् ।
सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ॥ २५९ ॥
[ कुं. सं. स. ६ श्लो. ९४. ]

अत्र 'अनेन विसृष्टाः' इति वाच्यम् ।

धैर्येण विश्वास्यतया महर्षेस्तीव्रादरातिप्रभवाच्च मन्योः । ५
वीर्यं च विद्वत्सु सुते मघोनः स तेषु न स्थानमवाप शोकः॥ २६०॥
[ किरात. स. ३ श्लो. ३४ ]

अत्र स्यादेः प्रत्ययस्य । 'तीव्रेण विद्वेषिभुवागसा च ' इति तु युक्तम् । यथा[1] वा—

बभूव भस्मैव सिताङ्गरागः कपालमेवामलशेखरश्रीः । १०
उपान्तभागेषु च रोचनाङ्को[2] गजाजिनस्यैव दुकूलभावः॥२६१॥
[ कु. सं. स. ७ श्लो. ३२ ]

अत्र गजेन्द्रचर्मैव दुकूलमस्येति[3] युक्तम् ।

सस्नुः पयः पपुरनेनिजुरम्बराणि
जक्षुर्बिसं धृतविकासिबिसप्रसूनाः । १५
सैन्याः श्रियामनुपभोगनिरर्थकत्व-
दोषप्रवादममृजन् वननिम्नगानाम् ॥२६२॥
[ शि. व. स. ५. श्लो. २८ ]

---

(71) 'नैकं पदं द्विः प्रयोज्यं प्रायेण' इति [ का. लं. सू. अधि ५. अ. १. सू. १ ] । उद्देश्यप्रतिनिर्देश्यव्यतिरिक्तो हि विषय उक्तपदत्वस्य, २० अयथोद्देशं प्रतिनिर्देशस्तु भग्नप्रक्रमत्वस्येति भिन्नविषयत्वात् ।

**सस्नुरिति** । अत्र स्नानादौ यः कालविशेषः प्रक्रान्तः, स नेजनादावुपेक्षित इति कालस्याप्यत्र प्रक्रमभेद इति केचिदाहुः । वयं तु ब्रूमः—काल-

---

1. I. drops यथा वा 2. I. °ङ्कः सिंहाजिनस्यैव
3 I. मृगेन्द्रचर्मैव

अत्र त्यादेः । 'विकचमस्य दधुः प्रसूनम्' इति तु युक्तम् ।

यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसंख्यामतिवर्तितुं वा ।

निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः ॥२६३॥

[ कि. स. ३. श्लो. ४० ]

५ अत्र कृतः । 'सुखमीहितुं वा' इति तु युक्तम् ।[1]

उदन्वच्छिन्ना भूः स च निधिरपां योजनशतं

सदा पान्थः पूषा गगनपरिमाणं कलयति ।

इति प्रायो भावाः स्फुरदवधिमुद्रामुकुलिताः

सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते ॥ २६४ ॥

[ बा. रा. अं. १. श्लो. ८ ]

१०

---

विशेषस्य विवक्षामात्रभावितयानवस्थितत्वा[2]दोषोऽयमनुद्भावनीय एव । यदाहुः- (72) 'परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शनविषये दर्शनयोग्यत्वात्परोक्षस्याविवक्षायां लङ् भवत्येव । अजयज्जर्तो हूणान् इति । सतोऽपि वाविवक्षा भवति । यथा—अनुदरा कन्या इति ।' [ ]

१५ **सुखमीहितुं वेति तु युक्तमिति** । एवं च तुल्यकक्षत्वेन विकल्पार्थवृत्तेर्वाशब्दस्य न विषयोऽयमित्यपि परिहृतं भवति । यथा च—

रुदता कुत एव सा पुनर्भवता नानुमृतेरवाप्यते ।

परलोकजुषां स्वकर्मभिर्गतयो भिन्नपथा हि देहिनाम् ॥३४३॥

[ र. वं. स. ८ श्लो. ८५ ]

२० अत्र हि 'कुत एव तु सानुरोदनात्' इति युक्तः पाठः । इह तु न दोषः—

पृथ्वि स्थिरीभव भुजङ्गम धारयैनां

त्वं कूर्मराज तदिदं द्वितयं दधीथाः ।

दिक्कुञ्जराः कुरुत तत्त्रितये दिधीर्षां

२५ देवः करोति हरकार्मुकमाततज्यम् ॥ ३४४ ॥

[ ]

अत्र हि पृथ्व्यादिविषयः प्रैषलक्षणोऽर्थः कविना वक्तुं प्रक्रान्तः, तस्य

---

1. I. च इति 2. A. °त्रभवियाकालवितियान° C. °यानासवस्थित°

अत्र पर्यायस्य। 'मिता भूः पत्यापां स च पतिरपां[1] योजनशतम्' इति तु युक्तम् ।

विपदोऽभिभवन्त्यविक्रमं रहयत्यापदुपेतमायतिः ।
लघुता नियता निरायतेरगरीयान्न पदं नृपश्रियः ॥२६५॥
[ कि. स. २. १४ श्लो. १४. ]   ५

अत्रौपसर्गस्य पर्यायस्य च । 'तदभिभवः कुरुते निरायतिं, लघुतां भजते निरायतिः, लघुताभाग् न पदम्' इति[+] युक्तम् ।

उत्फुल्लकमलकेसरपरागगौरद्युति मम हि गौरि ।
अभिवाञ्छितं प्रसिध्यतु भगवति युष्मत्प्रसादेन ॥ २६६ ॥
[ नागानन्द अं. १. श्लो. १३ ]   १०

अत्रैकवचनेन भगवतीं संबोध्य प्रसादसंबन्धेन यस्तस्यां बहुत्वनिर्देशः स वचनस्य ।

---

प्रत्ययभेदेऽपि निर्व्यूढत्वात्प्रैषार्थानां च पदानामुद्देश्यप्रतिनिर्देश्यभावेनोपादानं[2] न कृतमिति नैतादृशः[3] प्रत्ययप्रक्रमभेददोषस्य विषयोऽवगन्तव्यः ।

'**मिता भूः पत्यापाम्**–' इत्यादि । एवं च च्छिदिक्रियाकर्तुरुदन्वतो   १५
वक्ष्यमाणनयेन विधेयतया प्राधान्यात्समासानुपपत्तिदोषोऽपि परिहृतो भवति । यथा च—

वरं कृतध्वस्तगुणादत्यन्तमगुणः पुमान् ।
प्रकृत्या ह्यमणिः श्रेयान्नालंकारच्युतोपलः[4] ॥ ३४५ ॥
[ ]   २०

एवम्—

खमिव जलं जलमिव खं हंस इव शशी शशाङ्क इव हंसः ।
कुमुदाकारास्तारास्ताराकाराणि कुमुदानि ॥ ३४६ ॥
[ ]

इत्यादौ द्रष्टव्यम् ।   २५

---

+ N. S. has. नृपश्रियः   1. I. पतिरपां

2. A. प्रतिनिदेश्य C. प्रतिनिर्दिश्य.   3. C. नैवेदृश

4. A. B. श्रेयानम्नंकारभ्च्युतोपलः N. °लंकारच्युतोपलः

कृतवानसि विप्रियं न मे प्रतिकूलं न च ते मया कृतम् ।
किमकारणमेव दर्शनं विलपन्त्यै रतये न दीयते ॥ २६७ ॥
[ कु. स. स ४. श्लो. ७ ]

अत्र कारकस्य । 'न च तेऽहं कृतवत्यसंमतम्' इति तु युक्तम् ।

५ यथा च--

चारुता वपुरभूषयदासां तामनूननवयौवनयोगः ।
तं पुनर्मकरकेतनलक्ष्मीस्तां मदो दयितसंगमभूषः ॥२६८॥
[ शि. व. स. १० श्लो. ३३ ]

अत्र शृङ्खलाक्रमेण कर्तुः कर्मभावः कर्त्रन्तरं च यथा प्रक्रान्तं[1]
१० तथा न निर्व्यूढम् । 'तमपि वल्लभसङ्गः' इति तु युक्तम् ।

तव कुसुमशरत्वं शीतरश्मित्वमिन्दो-
र्द्वयमिदमयथार्थं दृश्यते मद्विधेषु ।
विसृजति हिमगर्भैर्वह्निमिन्दुर्मयूखै-
स्त्वमपि कुसुमबाणान् वज्रसारीकरोषि ॥२६९॥
१५ [ अ. शा. अं. ३. श्लो. ३ ]

अत्र क्रमस्य । यथा वा--

अकलिततपस्तेजोवीर्यप्रथिम्नि यशोनिधा-
ववितथमदाध्माते रोषान्मुनावभिधावति ।
अभिनवधनुर्विद्यादर्पक्षमाय च कर्मणे
२० स्फुरति रभसात्पाणिः पादोपसंग्रहणाय च ॥२७०॥
[ म. च. अं. २ श्लो. ३० ]

---

**अकलितेति** । अत्र 'पादोपसंग्रहणाय' इति पूर्वं वाच्यम् । एवमन्येऽपि भेदा अभ्यूह्याः ।

ननु कर्तृप्रक्रमभेदोऽपीह[2] कस्मान्नोपदर्शितः । असंभवादिति ब्रूमः । यस्तु

---

1. I. यथोप्रक्रान्तं  2. A. B. प्रक्रमाभेदो

यथा॰वा व्यतिरेकालङ्कारे

तरङ्गय दृशोऽङ्गणे पततु चित्रमैन्दीवरं
स्फुटीकुरु रदच्छदं व्रजतु विद्रुमः श्वेतताम् ।

---

क्वचित्कविभिः प्रयुज्यमानो दृश्यते स कर्तृव्यत्यासो नाम गुण एव, न दोषः। तत्रैव चायं प्रक्रमभेदभ्रमो भवताम् । तत्र युष्मदर्थस्य यथा—'यथाह सप्तमो वैकुण्ठावतारः' इति । अत्र हि यथा त्वमिति युष्मदर्थस्य कर्तृत्वं प्रकृतमपहाय चारुत्वाय ततोऽन्यत्रारोप्यैवमुक्तम् । दाशरथिं रामं प्रति हि कस्यचित्समक्षमियमुक्तिः । अस्मदर्थस्य यथा— ५

नाभिवादनप्रसाद्यो[1] रेणुकापुत्रः । गरीयान् हि गुरुधनुर्भङ्गापराधः ॥३४७॥
[ ] १०

इति ।

अत्रापि हि नाभिवादनप्रसाद्योऽस्मीति वक्तव्ये पूर्ववच्चारुत्वायैवमुक्तम् । एषा हि भार्गवस्यात्मानमुद्दिश्योक्तिः । यथा वा—

अयं जनः प्रष्टुमनास्तपोधने न चेद्रहस्यं प्रतिगोप्तुमर्हसि ॥३४८॥
[ कु. सं. स. ५ श्लो. ४० ] १५

इति । अत्रापि 'अहं प्रष्टुमनाः' इति वक्तव्ये अस्मदर्थस्य कर्तृत्वमन्यत्रारोप्यैवमुक्तम् । द्विविधो ह्यन्यशब्दार्थः । तत्र चेतनेऽन्यत्रारोपो निदर्शित एव । अचेतने तु यथा 'चापाचार्य'—इति । अत्र हि 'त्वं रेणुकाकण्ठबाधां कृतवान् इति त्वया बद्धस्पर्धोऽहं लज्जे' इति वक्तव्ये चारुत्वाय युष्मदस्मदर्थयोः[2] कर्तृत्वमुभयोः परशुचन्द्रहासयोर्जडयोरारोप्यैवमुक्तम् । यथा च— २०

हे लङ्केश्वर दीयतां जनकजा रामः स्वयं याचते
कोऽयं ते मतिविभ्रमः स्मर नयं नाद्यापि किञ्चिद्गतम् ।
नैवं चेत्खरदूषणत्रिशिरसां कण्ठासृजा पङ्किलः
पत्त्री नैष सहिष्यते मम धनुर्ज्याबन्धबन्धूकृतः ॥ ३४९ ॥
[ ] २५

अत्राप्यहं न सहिष्ये—इति वक्तव्ये पूर्ववदस्मदर्थस्य कर्तृत्वमचेतने पत्त्रिणि समारोप्यैवमुक्तम् । इति ।

---

1. A. B. प्रासाद्यो    2 A drops स्मदर्थ

क्षणं वपुरपावृणु स्पृशतु काञ्चनं कालिका-
मुदञ्चय मनाङ्मुखं भवतु च द्विचन्द्रं नभः ॥२७१॥

[ बा. रा. अं. ३. श्लो. २५ ]

अत्रोपमानानामिन्दीवरादीनां निन्दया नयनादीनामुपमेयानामतिशयो वक्तुं प्रक्रान्तो 'भवतु च द्विचन्द्रं नभः' इति सादृश्यमात्राभिधानेन न [3]निर्व्यूढ इति भग्नप्रक्रमत्वम् । 'भवतु तद् द्विचन्द्रं नभः' इति तु युक्तम् । तथा—

तद्वक्त्रं यदि मुद्रिता शशिकथा तच्चेत्स्मितं का सुधा
सा चेत्कान्तिरतन्त्रमेव कनकं ताश्चेद्गिरो धिङ्मधु ।
सा दृष्टिर्यदि हारितं कुवलयैः किं वा बहु ब्रूमहे
यत्सत्यं पुनरुक्तवस्तुविरसः सर्गक्रमो वेधसः ॥२७२॥

[ बा. रा. अं. २. श्लो. १७; वि. शा भं. अं. १. श्लो.१४ ]

अत्रोपमानादुपमेयस्यातिरेकलक्षणं वस्तु वक्तुमिष्टं, तस्यार्थान्तरन्यासेन वस्तुसर्गपौनरुक्त्यस्य सादृश्यपर्यवसानाद्भग्नप्रक्रमत्वम् ।

वक्त्राद्यौचित्ये न दोषः—

व्रजतः क्व तात वजसीति परिचयगतार्थमस्फुटं धैर्यम् ।
अभिनदुदितं शिशुना जननीनिभर्त्सनविवृद्धमन्युना [2] ॥२७३॥

[ शि. व. स. १५. श्लो. ८७ ]

अत्र शिशुना वजति[3]रेव प्र[4]युक्तो न [5]च व्रजतिस्तत्रैव परिचयगतार्थास्फुटत्वधैर्यभेदित्वसंभवात् । केवलं शक्तिवैकल्याद्रेफोऽनेन नोच्चारितः ।

पदार्थानां परस्परमसम्बन्धोऽनन्वितत्वम्, यथा—

1. I. L, drop न 2. I. °नवृद्धमन्युना 3. I. L. व्रजतिरेव,
4. L प्रयुक्ते 5. I. drops च

दृढतरनिबद्धमुष्टेः कोशनिषण्णस्य सहजमलिनस्य ।
कृपणस्य कृपाणस्य च केवलमाकारतो भेदः ॥२७४॥
[　　　　　　]

अत्र यद्याकारः सन्निवेशलक्षणो विवक्षितस्तदा स परस्परपरिहारस्थितिमतोरर्थयोः सिद्ध एवेत्यनुपादेयः । अक्षरविशेषलक्षणस्तु शब्दनियतत्वादर्थयोर्न संभवत्येवेत्यनन्वितत्वम् । यथा वा—　५

निर्घातोग्रैः कुञ्जलीनाञ्जिघांसुर्ज्यानिर्घोषैः क्षोभयामास सिंहान् ।
नूनं तेषामभ्यसूयापरोऽसौ वीर्योदग्रे राजशब्दे मृगाणाम् ॥२७५॥
[ र. वं. स. ३ श्लो. ६४ ]

अत्र सिंहानां न तावद्राजशब्दः संभवति तेषां तद्वाच्यत्वाभावात् तत्सम्बन्धाभावाच्च तत्पर्यायस्य मृगराजशब्दस्यास्तीति चेत्? न तस्य प्रकान्तत्वाभावात् । मृगाणामित्यत्र मृगराजानामित्यनुक्तेश्च किं च मृगेषु राजत्वं भवति सिंहानां, न तु शब्दे इति वीर्योदग्रत्वं तद्विशेषणमनुपपन्नमेव तस्यार्थनिष्ठत्वेनोपपत्तेः । तेन सिंहानां मृगाणां वीर्योदग्रत्वस्य च न राजशब्देनान्वयः संगच्छते । तेन राजभाव इति वा[1] मृगेष्विति वा पाठः श्रेयान् । यथा वा—　१०　१५

येषां तास्त्रिदशेभदानसरितः पीताः प्रतापोष्मभि-
र्लीलापानभुवश्च नन्दनतरुच्छायासु यैः कल्पिताः ।
येषां हुंकृतयः कृतामरपतिक्षोभाः क्षपाचारिणां
किं तैस्त्वत्परितोषकारि विहितं किंचित्प्रवादोचितम् ॥२७६॥　२०
[　　　　　　]

'अङ्गाङ्गिनोरेव हि यत्तदर्थयोः संबन्धो न त्वङ्गानां यदर्थानामन्योन्यम्' इति नियमेन बहुभिर्यदर्थैरेक एवार्थो निर्दिश्यत इति

**अर्थयोरिति** । कृपणकृपाणशब्दवाच्ययोः ।
**न त्वङ्गानामिति** । प्रधानानुयायित्वेन समत्वादित्यर्थः ।　२५

1. I. drops वा

यैरित्यत्र विशेष्यस्याप्रतीतिः । 'क्षपाचारिभिः' इति तु पाठे युज्यते समन्वयः । यथा वा उपमायाम्—

वापीव विमलं व्योम हंसीव धवलः[1] शशी ।
शशिलेखेव हंसोऽयं हंसालिरिव ते यशः ॥२७७॥

[ ]

तथा—

सरांसीवामलं व्योम काशा इव सितः शशी ।
शशीव धवला हंसा हंसीव विशदा दिशः ॥२७८॥

[ ]

अत्रोपमानोपमेययोः साधारणधर्माभिधायिपदं लिङ्गवचनाभ्यां वैसदृश्यादुपमानेन न सम्बध्यत इत्यनन्वितम् । यदि च लिङ्गवचसोर्विपरिणामादुपमानेनापि संबन्धः क्रियते तदाभ्यासलक्षणो वाक्यभेदः स्यात् । एवं चाव्यवधानेन प्रकृतोऽर्थो न प्रतीयेत । विपरिणामश्च

**युज्यत इति** । यदि क्षपाचारिणामित्यस्य स्थाने क्षपाचारिभिरिति पठ्यते तदा त्रयोऽपि यच्छब्दार्थाः समशीर्षिकया धावित्वा अङ्गीभूतेन तैः क्षपाचारिभिरित्यनेन प्रतिस्वमाञ्जस्येनैव सम्बन्धमनुभवन्तीत्यर्थः । यथा वा—

तेनावरोधप्रमदासखेन विगाहमानेन सरिद्वरां ताम् ।
आकाशगङ्गारतिरप्सरोभिर्वृतो मरुत्वाननुयातलीलः ॥३५०॥

[ र. वं. स. १६ श्लो. ७१ ]

अत्रानुयाति क्रियापेक्षो राजमरुत्वतोः कर्तृकर्मभावोऽभिधातुमभिमतः कवेः । न चासौ तत्संबन्धस्तयोः साक्षादुक्तः, सजललीलासंबन्धमुखेन राजसंबन्धस्योक्तत्वात् । अतोऽत्र साक्षात्तत्सम्बन्धो वाच्यः । तदर्थमन्यक्रियान्तरं वा । येन कर्तृकर्मभावस्तयोर्घटनामियात्[2][3] । न चोभयोरेकमप्युक्तमित्यनन्वितत्वम् । तेन वरमयमत्र पाठः—'आकाशगङ्गारतिरप्सरोभिर्वृतोऽनुयातो मघवा विलासैः' । इति ।

**अभ्यासलक्षण** इति । पौनःपुन्यरूपः ।
**वाक्यभेद** इति । द्वे वाक्ये स्यातामित्यर्थः ।

1. I. विमलः 2. A. B. °र्मस्यभावस्त° N. कर्तृकर्मत्वभावस्त°
3. A. B. C. घटामि°

शास्त्रीयो न्यायः काव्येषु न युक्तः। यत्र तु नानात्वेऽपि लिङ्गवचसोः साधारणधर्माभिधायिपदं स्वरूपभेदं नापद्यते न तत्रैतद् दूषणम्। यथा–

वाक्प्रपञ्चैकसारेण निर्विशेषाल्पवृत्तिना ।
स्वामिनेव नटत्वेन निर्विण्णाः सर्वथा वयम् ॥२७९॥

[ ] ५

चन्द्रमिव सुन्दरं मुखं पश्यति ॥२८०॥ [ ]

तद्वेषोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरताभृतः ।
दधते स्म परां शोभां तदीया विभ्रमा इव ॥ २८१ ॥ इति

[ ]

यत्रापि गम्यमानं साधारणधर्माभिधायिपदं तत्रापि न दोषः। १०
यथा—चन्द्र इव मुखं, कमलमिव पाणिः, बिम्बफलमिवाधर इत्यादि।

कालपुरुषविध्यादिभेदेऽपि न तथा प्रतीतिरस्खलितरूपा भवतीत्यसावप्यनन्वितस्यैव विषयः। यथा–

अतिथिं नाम काकुत्स्थात्पुत्रमाप कुमुद्वती ।
पश्चिमाद्यामिनीयामात्प्रसादमिव चेतना ॥२८२॥ १५

[ र. वं. स. १७. श्लो. १ ]

अत्र चेतना प्रसादमाप्नोति, न पुनरापेति कालभेदः।

प्रत्यग्रमज्जनविशेषविविक्तमूर्तिः
कौसुम्भरागरुचिरः स्फुरदंशुकान्ता ।
विभ्राजसे मकरकेतनमर्चयन्ती २०
बालप्रवालविटपप्रभवा लतेव ॥२८३॥

[ र. अं. १. श्लो. २० ]

---

**असदृश** इति। टगन्तत्वादेकवचनान्तम्। क्विबन्तत्वाद्बहुवचनान्तं च। मधुरतया भृतो धृतः। तां च बिभ्रति।

**दधते इति**। 'दधि धारणे' इत्यस्य दधातेश्चात्मनेपदैकवचनबहुवचनाभ्याम्।

अत्र लता विभ्राजते, न तु विभ्राजस इति पुरुषभेदः ।

गङ्गेव प्रवहतु ते सदैव कीर्तिः ॥ २८४ ॥

[ ]

इत्यादौ च गङ्गा प्रवहति, न तु प्रवहतु इत्यप्रवृत्तप्रवर्तना-
५ त्मनो विधेः । एवंविधस्य चान्यस्यार्थस्योपमानगतस्यासंभवाद्
विध्यादिभेदः ।

अथाष्टावुभयदोषानाह—

**९०) अप्रयुक्ताश्लीलासमर्थानुचितार्थश्रुतिकटुक्लिष्टावि-
मृष्टविधेयांशविरुद्धबुद्धिकृत्त्वान्युभयोः ॥ ६ ॥**

१० उभयोरिति । पदस्य वाक्यस्य चेत्यर्थः । दोष[1] इति वर्तते ।

कविभिरनादृतत्वादप्रयुक्तत्वम् । तच्च लोकमात्रप्रसिद्धत्वाच्छास्त्र-
मात्रप्रसिद्धत्वाच्च । आद्यं यथा—

कष्टं कथं रोदिति थूत्कृतेयम् ।२८५। [ ]

देश्यं चैतत्प्रायमेव । यदाह—

१५ (22) प्रकृतिप्रत्ययमूला व्युत्पत्तिर्यस्य नास्ति देश्यस्य ।
तन्मडहादि कथञ्चिन्न रूढिरिति संस्कृते रचयेत् ॥

---

**लोकमात्रप्रसिद्धत्वादिति** । एतेन ग्राम्यत्वमप्रयुक्तत्वान्न भिद्यत
इत्याह । **शास्त्रमात्रप्रसिद्धत्वादिति** । शास्त्राणि योगशास्त्रधातुपाठाभि-
धानकोशादीनि । तेनाप्रतीतासमर्थनिहतार्थत्वानि न पृथग्लक्षणीयानि, अप्रयु-
२० क्तत्व एवान्तर्भावादिति ।

**एतत्प्रायमेवेति** । लोकमात्रप्रसिद्धिप्रायम् । केवलं नियतदेशविषय-
त्वेन प्रसिद्धिरिति प्रायग्रहणम् ।

**मडहादीति** । मडहलडहहोरणकन्दोट्टएल्लहुक्ककुसुमालवाणबालादिकं
यथाक्रमं सूक्ष्मश्रेष्ठवस्त्रोत्पलदरिद्राञ्जलिचौरशक्रादिवाचकम् ।

२५ **रूढिरितीति** । रूढिभ्रान्त्या कश्चिद्विश्वदेशप्रसिद्धया 'अस्यार्थस्य शब्दो-
ऽयं सर्वत्र वाचकः' इति मन्यमानः प्रयुञ्जीत । व्युत्पत्तिर्यस्य नास्तीति वच-

---

1. I. दोषा

क्वचिद्गुणो यथा—

देव स्वस्ति वयं द्विजास्तत इतः स्नानेन निष्कल्मषाः

कालिन्दीसुरसिन्धुसङ्गपयसि स्नातुं समीहामहे ।

तथाचेमहि सप्तविष्टपशुचीभावैकतानव्रतं

संयच्छस्व यशः सितासितपयो भेदाद्विवेकोऽस्तु नः ॥२८६॥

अत्रासुग्घस्यापि मुग्धस्येव ब्राह्मणस्य वक्तृत्वे स्वस्तीति गुणः ।

वाक्यस्य यथा—

ताम्बूलभृतगल्लोऽयं भल्लं जल्पति मानुषः ।

करोति खादनं पानं सदैव तु यथा तथा ॥२८७॥ [ ]

क्वचिद्गुणः, यथा—

फुल्लुकरं[1] कलमकूरसमं वहन्ति

जे सिन्दुवारविडवा मह वल्लहा ते ।

जे गालिदस्स महिसीदहिणो सरिच्छा

ते किंपि[2] मुद्धवियइल्लपसूणपुञ्जा ॥२८८॥ [क. मं. जवनिका. १, श्लो. १९ ]

अत्र कलमभक्तमहिषीदधिशब्दानां लौकिकत्वेऽपि विदूषकोक्तौ गुणत्वम् ।

शास्त्रमात्रप्रसिद्धिः, यथा—

यथायं दारुणाचारः सर्वदैवं विभाव्यते ।

तथा मन्ये दैवतोऽस्य पिशाचो राक्षसोऽथवा ॥२८९॥ [ ]

अत्र दैवतशब्दः पुल्लिङ्गे लिङ्गानुशासन एव प्रसिद्धः । यथा वा—

सम्यग्ज्ञानमहाज्योतिर्दलिताशयताजुषः ।

विधीयमानमप्येतन्न भवेत् कर्मबन्धकम् ॥२९०॥ [ ]

---

मान्च सव्युत्पत्तिकं देश्यं कदाचित्प्रयोज्यमेवेत्युक्तं भवति—यथा दूर्वायां छिन्नोद्भवशब्दः, ताले भूमिपिशाचः, शर्वे महानटः, वृक्षे परशुभक्तः, चन्द्रामृतयोः समुद्रनवनीतम्, जले मेघक्षीरमित्यादि ।

---

1. P. & L. फुल्लुक्करं   2. N. किं वि

अत्राशयशब्दो वासनापर्यायो योगशास्त्र एव प्रसिद्धः । यथा च–

तीर्थान्तरेषु स्नानेन समुपार्जितसत्कृतः ।
सुरस्रोतस्विनीमेष हन्ति संप्रति सादरम् ॥२९१॥

अत्र हन्तीति गमनार्थं धातुपाठ एव प्रसिद्धम् । यथा वा–

५ 'सहस्रगोरिवानीकं दुःसहं भवतः परैः' ॥ २९२ ॥
[ ]

अत्र गोशब्दस्याक्षिवाचित्वमभिधानकोश एव प्रसिद्धम् । क्वचिद् गुणः, यथा–

सर्वकार्यशरीरेषु मुक्त्वाङ्गस्कन्धपञ्चकम् ।
१० सौगतानामिवात्माऽन्यो नास्ति मन्त्रो महीभृताम् ॥२९३॥
[ शि. व. स. २. श्लो. २८ ]

अत्राङ्गस्कन्धपञ्चकमित्यस्य तद्विद्यसंवादादौ गुणत्वम् । श्लेषे तु न गुणो न दोषः । यथा—

येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो
१५ यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गां च योऽधारयत् ।

---

**अङ्गेति** । कर्मणामारम्भोपायः, द्रव्यपुरुषसम्पत्, देशकालविभागः, विनिपातप्रतीकारः, कार्यसिद्धिश्चेति पञ्चाङ्गानि ।

**स्कन्धेति** ।

(71) विज्ञानं वेदना संज्ञा संस्कारो रूपमेव च ।
२० भिक्षूणां शाक्यसिंहेन स्कन्धाः पञ्च प्रकीर्तिताः ॥

**येन ध्वस्तेति** । माधवपक्षे–येन ध्वस्तं बालक्रीडायाम् । अनः शकटम् । अभवेन असंसारेण । बलिं जितवान् । यः कायः स पूर्वममृतहरणे स्त्रीत्वं नीतः । उद्वृत्तं भुजंगं कालियाख्यं पीडितवान् । खे शब्दब्रह्मणि लयः समाप्तिर्यस्य । अगं गोवर्धनगिरिं गां च योऽधारयत् । शशिनं मथ्नाति यो राहुस्तस्य शिरोहरः । अन्धकानां वृष्णीनां क्षयं निवासं करोति यः स माधवः २५ कृष्णः । उमाधवपक्षे तु–बलिजित्कायो विष्णुदेहस्त्रिपुरवधेऽस्त्रीकृतः शरतां नीतः । भुजङ्गाः सर्पाः शशियुक्तं शिरो यस्य तथाभूतो हरः । यदि वा शशियुक्तं शिर आहुर्नाम च हर इति । अन्धकाख्यो दैत्यः ।

यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामामराः
पायात् स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः ॥ २९४ ॥
[ सुभा. श्लो. ४४ ]

अत्र माधवपक्षे शशिमच्छब्दः क्षयशब्दश्चाप्रयुक्तः । वाक्यस्य यथा— ५

तस्याधिमात्रोपायस्य तीव्रसंवेगताजुषः ।
दृढभूमिः प्रियप्राप्तौ यत्नः स फलितः सखे ॥२९५॥
[ ]

अत्राधिमात्रोपायादयः शब्दा योगशास्त्रप्रसिद्धाः । क्वचिद्गुणः, यथा—

अस्माकमद्य हेमन्ते देवाल्पत्वेन वाससः । १०
अकितीव यजादीनां दुर्लभं संप्रसारणम् ॥ २९६ ॥

अत्र प्रतिपाद्यप्रतिपादकयोस्तज्ज्ञतायां गुणः ।

व्रीडाजुगुप्सामङ्गलव्यञ्जकत्वेनाश्लीलत्वं त्रेधा । तत्र पदस्य यथा—

साधनं सुमहद्यस्य यन्नान्यस्य विलोक्यते
तस्य धीशालिनः कोऽन्यः सहेतारालितां भ्रुवम् ॥२९७॥ १५
[ ]

---

**तस्याधिमात्रोपायस्येति** । (72) "तथा हि नव योगिनो भवन्ति । मृदूपायो मध्योपायोऽधिमात्रोपाय इति । तत्र मृदूपायस्त्रिविधः–मृदुसंवेगः, मध्यसंवेगः, तीव्रसंवेग इति । एवमितरावपि । तत्राधिमात्रोपायानां "तीव्रसंवेगानामासन्नः ॥ [ यो द. पा. १ सू. २१ ] ॥ समाधिलाभः समाधिफलं च भवति ॥" [ यो. द. व्या. भा. पा. १ सू. २०-२१ ] २० संपिपादयिषया चित्तवृत्तिनिरोधसाधनानुष्ठानं योऽभ्यासः "स दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः" ॥ [ यो. द. पा. १. सू. १४ ] ॥ दीर्घकालेनासेवितो निश्छिद्रासेवितस्तपसा ब्रह्मचर्येण विद्यया श्रद्धया संपादितः सत्कारवान् दृढभूमिः । व्युत्थानसंस्कारेण द्रागित्येवानभिभूतविषय इत्यर्थः । २५
[ यो. द. व्या. भा. पा. १ सू. १४ ]

अवाचकत्वादित्यनेनावाचकत्वप्रसिद्धिदुष्टत्वयोः कल्पितार्थत्वादित्यनेन नेयार्थत्वस्य, संदिग्धत्वादित्यनेन संदिग्धत्वस्यासमर्थत्वदोषेऽन्तर्भावमाह ।

लीलातामरसाहतोऽन्यवनितानिःशङ्कदष्टाधरः
कश्चित्केसरदूषितेक्षण इव व्यामील्य नेत्रे स्थितः ।
मुग्धा कुड्मलिताननेन ददता वायुं स्थिता तस्य सा
भ्रान्त्या धूर्ततयाथवा नतिमृते तेनानिशं चुम्बिता ॥२९८॥

५ [ अ. श. श्लो. ७२ ]

मृदुपवनविभिन्नो मत्प्रियाया विनाशाद्
घनरुचिरकलापो निःसपत्नोऽस्य जातः ।
रतिविलुलितबन्धे केशपाशे सुकेश्याः
सति कुसुमसनाथे कं हरेदेष बर्ही ॥२९९॥

१० [ वि. अं. ४. श्लो. १० ]

एषु साधनवायुविनाशशब्दा व्रीडादिव्यञ्जकाः ।

वाक्यस्य, यथा—

भूपतेरूपसर्पन्ती कम्पना वामलोचना ।
तत्तत्प्रहणनोत्साहवती मोहनमादधौ ॥३००॥ [ ]

१५ कम्पना सेना वामं शत्रुं प्रति विरुद्धं वल्गु वा । अत्रोपसर्पण-प्रहणनमोहनशब्दाः व्रीडादायित्वादश्लीलाः ।

तेऽन्यैर्वान्तं समश्नन्ति परोत्सर्गं च भुञ्जते ।
इतरार्थग्रहे येषां कवीनां स्यात्प्रवर्तनम् ॥ ३०१ ॥

[ ]

२० अत्र वान्तोत्सर्गप्रवर्तनशब्दा जुगुप्सादायिनः ।

पितृवसतिमहं व्रजामि तां सह परिवारजनेन यत्र मे ।
भवति सपदि पावकान्वये हृदयमशेषितशोकशल्यकम् ।३०२।

[ ]

पावकेन पवित्रेणाग्निना च । अत्र पितुर्गृहमित्यादौ विवक्षिते
२५ श्मशानादिप्रतीतावमङ्गलार्थत्वम् ।

क्वचिद् गुणः, यथा सुरतारम्भगोष्ठ्यां[1]–

(23) द्व्यर्थैः पदैः पिशुनयेच्च रहस्यस्तु [ ] इति।

कामशास्त्रस्थितौ[2]–

करिहस्तेन संबाधे प्रविश्यान्तर्विलोलिते ।
उपसर्पन् ध्वजः पुंसः साधनान्तर्विराजते ॥२०३॥ ५

(24) तर्जन्यनामिके श्लिष्टे मध्या पृष्ठस्थिता तयोः। करिहस्तः+ ॥

संबाधः संघट्टो वराङ्गं च ध्वजः पताकावच्चिह्नं पुंव्यञ्जनं च । साधनं सैन्यं स्त्रीव्यञ्जनं च । शमकथासु यथा—

उत्तानोच्छूनमण्डूकपाटितोदरसंनिभे ।
क्लेदिनि स्त्रीव्रणे सक्तिरकृमेः कस्य जायते ॥२०४॥ १०

निर्वाणवैरदहनाः प्रशमादरीणां
नन्दन्तु पाण्डुतनयाः सह माधवेन ।
रक्तप्रसाधितभुवः कृतविग्रहाश्च[3]
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥२०५॥

[ वे. सं. अं. १. श्लो. ७ ] १५

अत्र भाव्यमङ्गलसूचनम् । रक्ता सानुरागा, प्रसाधिता अर्जिता भूर्यैः । रक्तेन मण्डिता भूश्च यैः । विग्रहो वैरं शरीरं च । स्वस्थाः कुशलिनः स्वर्गस्थाश्च ।

अवाचकत्वात्कल्पितार्थत्वात्संदिग्धत्वाच्च विवक्षितमर्थं वक्तुमशक्तिरसमर्थत्वम् । पदस्य, यथा– २०

हा धिक् सा किल तामसी शशिमुखी दृष्टा मया यत्र सा

---

1. I. drops °रम्भ 2. I. स्थितिः 3. क्षत°

+ करिहस्त इति प्रोक्तः कामशास्त्रविशारदैः । इति परिभाषितेन इत्युदाहरणचन्द्रिकायां पाठदर्शनादत्र कियान् पाठस्त्रुटितः प्रतीयते । N.

तद्विच्छेदरुजान्धकारितमिदं दग्धं दिनं कल्पितम् ।
किं कुर्मः कुशले सदैव विधुरो धाता न चेत्तत्कथं
तादृग्यामवतीमयो भवति मे नो जीवलोकोऽधुना ॥१०६॥
[ ]

५ अत्र दिनमिति प्रकाशमयमित्यत्रार्थेऽवाचकम् । यथा वा—
जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः ।
भर्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापी-
संभूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः ॥२०७॥

१० अत्र दधदित्यत्रार्थे विदधदित्यवाचकम् । यथा वा[1]—
चापाचार्यस्त्रिपुरविजयी कार्तिकेयो विजेयः ।
शस्त्रव्यस्तः सदनमुदधिर्भूरि यं हन्तकारः ।
अस्त्येवैतत्किमु कृतवता रेणुकाकण्ठबाधां
बद्धस्पर्धस्तव परशुना लज्जते चन्द्रहासः ॥२०८॥
[ बा. रा. अं. २ श्लो. ३७ ]

१५ अत्र विजित इत्यत्रार्थे विजेय इत्यवाचकः । यथा च—
महाप्रलयमारुतक्षुभितपुष्करावर्तक-
प्रचण्डघनगर्जितप्रतिरुतानुकारी मुहुः ।
रवः श्रवणभैरवः स्थगितरोदसीकन्दरः

२० कुतोऽद्य समरोदधेरयमभूतपूर्वः पुरः ॥२०९॥
[ वे. सं. अं. ३ श्लो. ४. ]

अत्र रवो मण्डूकादिषु प्रसिद्धो न तूक्तविशेषणे सिंहनादे इत्यवाचकः । तथा च—

**मण्डूकादिषु प्रसिद्ध इति** । मण्डूकादीनां शब्दो रवोऽभिधीयत इत्यर्थः । यथा च—

1. I. drops वा

यमिन्द्रशब्दार्थनिषूदनं हरेर्हिरण्यपूर्वं कशिपुं प्रचक्षते ॥ ३५१ ॥

[　　　　]

अत्र हिरण्यकशिपुमिति वक्तव्ये हिरण्यपूर्वं कशिपुमित्यवाचकम्। यतोऽत्र हिरण्यशब्दः कशिपुशब्दश्चाभिधेयप्रधानौ वा स्याताम्, स्वरूपमात्रप्रधानौ वा। तत्र न तावदभिधेयप्रधानावनभ्युपगमात्, अर्थस्यासमन्वयात्[1]। नापि स्वरूपमात्रप्रधानौ, न ह्येवमसुरविशेषस्य हिरण्यकशिपोरभिधानुकारः प्रख्यानक्रियाकर्मभावेनाभिहितो भवति। द्विविधो हि शब्दानुकारः। शाब्दत्वार्थत्वभेदात्[2]। तत्रेतिना व्यवच्छेदे शाब्दः प्रसिद्ध एव। अर्थादवच्छेदावगतावार्थः। यथा—

महदपि परदुःखं शीतलं सम्यगाहुः ॥ ३५२ ॥

[　　　　]

इह चायमार्थोऽनुकार इतिनानवच्छेदात्। केवलं यत्तस्याभिधानमनुकार्यं तन्नानुकृतम्। यच्चानुकृतं तत्तस्याभिधानमेव न भवति। लोके हि हिरण्यकशिपुरिति तस्याख्या न हिरण्यपूर्वः कशिपुरित्यतः तस्यावाचकत्वम्। यथा वा—

क्षुण्णं यदन्तःकरणेन वृक्षाः फलन्ति कल्पोपपदास्तदेव ॥ ३५३ ॥

[　　　　]

इत्यत्र हि कल्पवृक्षा इति वक्तव्ये कल्पोपपदा वृक्षा इत्यवाचकम्। यतो विशेषणमिदमभिधानस्वरूपविषयमेवावकल्पते[3]। नाभिधेयविषयम्, सोपपदत्वनिरुपपदत्वयोरभिधानधर्मत्वात्। न च तेन विशेषितेन किञ्चित्प्रयोजनम्। अभिधानमात्रादनभिमतार्थसिद्धेः। अभिधेयविषयत्वे च तत्सिद्धिर्भवेत्, किं तु न तत्र यथोक्तविशेषणसंबन्धः संगच्छते। यत्र च संगच्छते न ततोऽभिमतार्थसिद्धिरिति अवाचकत्वादसमर्थमेवेति। तस्माद्वरमयमत्र पाठः[4] 'क्षुण्णं यदन्तःकरणेन नाम तदेव कल्पद्रुमकाः फलन्ति।' अस्मिंश्च पाठे क्षुण्णस्यार्थस्य कल्पद्रुमाणां चावज्ञावगतौ गुणान्तरलाभः। एवम्—

दशपूर्वरथं यमाख्यया दशकण्ठारिगुरुं प्रचक्षते ॥ ३५४ ॥

[र. वं. सं. ८. श्लो. २९]

इत्यादावपि द्रष्टव्यम्।

1. N. °स्यासमुच्चयात्

2. A. शाब्दत्वार्थत्वे भेदात्　3. A. विशेषेण

4. A. B. C. N. have श्रेष्ठः–It seems to have come in the text out of marginal notes.

(25) मञ्जीरादिषु रणितप्रायान्[1] पक्षिषु च कूजितप्रभृतीन् ।
मणितप्रायान्[2] सुरते मेघादिषु गर्जितप्रायान्[3] ॥
दृष्ट्वा प्रयुज्यमानानेवंप्रायाँस्तथा प्रयुञ्जीत ।
अन्यत्रैतेऽनुचिताः शब्दार्थत्वे समानेऽपि ।

५ [ रु. का. लं. ६. २५–२६ ]

क्वचिद्गुणः, यथा—

आशु लङ्घितवतीष्टकराग्रे नीविमर्धमुकुलीकृतदृष्ट्या ।
रक्तवैणिकहताधरतन्त्री[4]मण्डलक्वणितचारु चुकूजे ॥३१०॥

[ शि. व. स. १०. श्लो. ६४ ]

१० अत्र कूजितस्य पक्षिषु प्रसिद्धत्वेऽपि कामशास्त्रे प्रसिद्धत्वाद्गुणः । यथा वा उपमायाम्—

पतिते पतङ्गमृगराजि निजप्रतिबिम्बरोषित इवाम्बुनिधौ ।
अथ नागयूथमलिनानि जगत् परितस्तमांसि परितस्तरिरे ।३११।

[ शि. व. स. ९. श्लो. १८ ]

१५ अत्र नागयूथेन धर्मिणा साम्यं तमसो वक्तुमभिमतं कवेर्न तद्धर्मेण मलिनत्वमात्रेण, मृगपतौ पतिते तस्यैव निष्प्रतिपक्षतया स्वेच्छाविहारोपपत्तेः । न तद्वन्मलिनानां तमसां पतङ्गस्य मृगपतिरूपणा-

**मञ्जीरादीति** । आदिग्रहणं रशनाघण्टाभ्रमराद्यर्थम् । प्रायग्रहणं सदृशार्थवृत्ति क्वणिशिञ्जिगुञ्जीत्याद्यर्थम् । प्रभृतिग्रहणं वाश्यत्याद्यर्थम् । पुनरादिग्रहणं सिंहमृगाद्यर्थम् । प्रायग्रहणमपि ध्वनत्याद्यर्थम् ।

२० **एवं प्रायानिति** । ये शास्त्रे सामान्येन पठ्यन्ते, अथ च विशेष एव दृश्यन्ते तानित्यर्थः । तद्यथा—हेषतिरश्वेषु, भणतिः पुरुषेषु, कणतिः पीडितेषु, वातिर्वायौ, न त्वन्यत्र । न हि भवति पुरुषो वातीति । एवमन्यदपि बोद्धव्यम् ।

1. I. रणितप्रायं 2. I. स्तनितमणितादि 3. I. प्रभृति
4. I. तनु N. तनू

वैयर्थ्यप्रसङ्गात् । न च तत्साम्यं सुन्दरहारिसदृशसुभगसन्निभादिशब्दा इव मलिनादिशब्दाः शक्नुवन्ति वक्तुमित्यवाचकत्वम् ।

यथा वा उत्प्रेक्षायाम्—

उदयौ दीर्घिकागर्भाद् मुकुलं मेचकोत्पलम् ।
नारीलोचनचातुर्यशङ्का संकुचितं यथा ॥३१२॥ [　　]　　५

अत्र ध्रुवेवादिशब्दवद्यथाशब्दः संभावनं प्रतिपादयितुं नोत्सहत इत्यवाचकः । यथा वार्थान्तरन्यासे—

किमपेक्ष्य फलं पयोधरान् ध्वनतः प्रार्थयते मृगाधिपः ।
प्रकृतिः खलु सा महीयसः सहते नान्यसमुन्नतिं यया ॥३१३॥
[　　]　　१०

अत्र महीयस[1] इत्येकवचनं न सामान्यरूपमर्थं व्यक्तमभिधातुं क्षमत इत्यवाचकत्वम् । बहुवचनस्यैव वीप्सासमानफलस्य स्फुटत्वेन तदभिव्यक्तिक्षमत्वात् । यथा—

यावदर्थपदां वाचमेवादाय माधवः ।
विरराम महीयांसः प्रकृत्या मितभाषिणः ॥३१४॥　　१५
[ शि. व. स. २. श्लो. १२ ]

सर्वादिशब्दोपादाने त्वेकवचनस्यापि न दोषः, यथा—

छायामपास्य महतीमपि वर्तमाना-
मागामिनीं जगृहिरे जनतास्तरूणाम् ।
सर्वो हि[2] नोपनतमप्यपचीयमानं　　२०
वर्द्धिष्णुमाश्रयमनागतमभ्युपैति ॥ ३१५ ॥
[ शि. व. स. ५. श्लो. १४. ]

वाक्यस्य, यथा—

1. I. सामान्यमर्थरूपम्　　2. I. ऽपि

विभजन्ते न ये भूपमालभन्ते न ते श्रियम् ।
आवहन्ति न ते दुःखं प्रस्मरन्ति न ये प्रियाम् ॥३१६॥ [ ]

अत्र विभजतिर्विभागार्थः सेवने, आलभतिर्विनाशार्थो लाभे, आवहतिः करोत्यर्थो धारणे[1], प्रस्मरतिर्विस्मरणार्थः स्मरणेऽवाचकः ।

५ कल्पितार्थत्वादसमर्थत्वम्[2] । पदस्य, यथा—

किमुच्यतेऽस्य भूपाल मौलिमालाशिरोमणेः[3] ।
सुदुर्लभं वचोबाणैस्तेजो यस्य विभाव्यते ॥३१७॥ [ ]

अत्र वचःशब्देन गीःशब्दो लक्षित इति[4] कल्पितार्थत्वम् । अत्र न केवलं पूर्वपदं यावदुत्तरपदमपि पर्यायपरिवर्तनं न क्षमते । जल-
१० ध्यादौ तूत्तरपदमेव । वडवानलादौ तु पूर्वपदमेव । यदाह—

(26) निरूढा लक्षणाः काश्चित्काश्चिन्नैव त्वशक्तितः ।
क्रियन्ते सांप्रतं काश्चित् काश्चिन्नैव त्वशक्तितः ॥ इति[5] ॥

वाक्यस्य यथा—

सपदि पङ्क्तिविहंगमनामभृत्तनयसंवलितं बलशालिना ।
१५ विपुलपर्वतवर्षि शितैः शरैः प्लवगसैन्यमुलूकजिता जितम् ।३१८।
[ ]

पङ्क्तिरिति दशसंख्या लक्ष्यते, विहंगमोऽत्र चक्रस्तन्नामभृतो रथा दश रथा यस्य तत्तनयौ रामलक्ष्मणौ । उलूकजिता इन्द्रजिता । कौशिकशब्देन इन्द्रोलूकयोरभिधानमिति कौशिकशब्दवाच्यत्वेनेन्द्र उलूक
२० उक्तः ।

---

1. L. ऽवधारणे 2. I. °दसमर्थ° 3. I. मालामहामणेः
4. L. drops from कल्पितार्थत्वा° to इति
5. P does not give the second line.

सन्दिग्धत्वादसमर्थत्वम् । पदस्य, यथा—

आलिङ्गितस्तत्र भवान् संपराये जयश्रिया ।
आशीःपरम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु ॥ ३१९ ॥
[ ]

अत्र वन्द्यां किं हठहृतमहेलायां किं नमस्यामिति सन्देहः । ५
यथा वा—

कस्मिन् कर्मणि सामर्थ्यमस्य नोत्तपतेतराम्[1] ।
अयं साधुचरस्तस्मादञ्जलिर्बध्यतामिह ॥३२०॥ [ ]

अत्र भूतपूर्वेपूचरडिति चरट्प्रत्यये किं पूर्वं साधुरुत साधुषु[2] चरतीति सन्देहः । क्वचिद् गुणः, यथा— १०

पश्याम्यनङ्गजाताङ्कलङ्घितां तामनिन्दितां[3] ।
कालेनैव कठोरेण ग्रस्तां किं नस्तदाशया ॥३२१॥
[ ]

अत्र विरहातुराया ग्रीष्मकाल उपनते किं ग्रीष्मवाची कालशब्द उत मृत्युवाचीति सन्देहकारीदं वचनं युवानमाकुलीकर्तुं प्रयुक्तमिति । १५
वाक्यस्य, यथा—

सुरालयोल्लासपरः प्राप्तपर्याप्तकम्पनः ।
मार्गणप्रवणो भास्वद्भूतिरेष विलोक्यताम्[4] ॥ ३२२ ॥
[ ]

अत्र किं सुरादिशब्दो देवसेनाशरविभूत्यर्थ उत मदिराद्यर्थ इति सन्देहः । २०

---

1. L. नान्नयतेतराम्  2. L. drops उत साधुषु  3. I. नन्दितां
4. I. विलोक्यते

क्वचिद् गुणः, यथा—

पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ।
विलसत्करेणुगहनं संप्रति सममावयोः सदनम् ॥३२३॥
[ ]

५ अत्र वाच्यमहिम्ना नियतार्थप्रतिपत्तिकारित्वे व्याजस्तुतिपर्यवसायित्वाद् गुणत्वम् ।

अनुचितार्थत्वं पदस्य, यथा—

तपस्विभिर्या सुचिरेण लभ्यते प्रयत्नतः सत्रिभिरिष्यते च या ।
प्रयान्ति तामाशु गतिं यशस्विनो रणाश्वमेधे पशुतामुपागताः ।३२४।
१० [ ]

अत्र पशुपदं कातरतामभिव्यनक्तीत्यनुचितार्थम् । यथा वा उपमायाम्—

कचिदग्रे प्रसरता क्वचिदापत्यनिघ्नता ।
शुनेव सारङ्गकुलं त्वया भिन्नं द्विषां बलम् ॥३२५॥
[ ]

१५ तथा—'वह्निस्फुलिङ्ग इव भानुरयं चकास्ति' ।३२६।
[ ]

अयं पद्मासनासीनश्चक्रवाको विराजते ।
युगादौ भगवान् ब्रह्मा विनिर्मित्सुरिव प्रजाः ॥३२७॥
[ ]

२० पातालमिव नाभिस्ते स्तनौ क्षितिधरोपमौ[1] ।
वेणीदण्डः पुनरयं कालिन्दीपातसन्निभः ॥३२८॥ [ ]

**पृथुकार्तस्वरेति** । पृथुकानां बालानां ये आर्ताः स्वरातेषां पात्रम्, पृथूनि कार्तस्वरस्य सुवर्ण[2]भाजनानि च यत्र । भुवि उषितो भूषितः, अलङ्कृतश्च । विलसत्कैर्गर्तसंबन्धिभिः पांसुभिर्गहनम्, विलसन्तीभिः करेणुभि-
२५ र्व्याप्तं च ।

1. I. क्षतिधर 2. A. B. omit सुवर्ण. N. has स्वर्णस्य

एषु श्वाद्युपमानानां जातिप्रमाणगताहीनताधिकता चेत्यनुचितार्थत्वम् । निन्दायां प्रोत्साहने च न दोषः । यथा—

चतुरसखीजनवचनैरतिवाहितवासरा विनोदेन ।
निशि चण्डाल इवायं मारयति वियोगिनीश्चन्द्रः ॥ इति ॥३२९॥

[ ]

५

' विशन्तु विष्टयः[1] शीघ्रं रुद्रा इव महौजसः ।' ।३३०। इति च ।

[ ]

यथा वा उत्प्रेक्षायाम्—

दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवान्धकारम् ।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैः शिरसां सतीव ॥३३१॥ १०

[ कु. सं. स. १. श्लो. १२ ]

अत्राचेतनस्य तमसस्तात्त्विकेन रूपेण दिवाकरात् त्रास एव न संभवति, कुत एव तत्प्रयोजितमद्रिपरित्राणम् । संभावितेन तु रूपेण प्रतिभासमानस्याप्यस्य[2] न काचिदनुपपत्तिरवतरतीत्यनुचितेव[3] तत्समर्थना ।

वाक्यस्य, यथा— १५

कुविन्दस्त्वं तावत्पटयसि गुणग्राममभितो
यशो गायन्त्येते दिशि दिशि वनस्थास्तव विभो ।
जरज्ज्योत्स्नागौरस्फुटविकटसर्वाङ्गसुभगा
तथापि त्वत्कीर्तिर्भ्रमति विगताच्छादनमिह ॥३३२॥

[ ] २०

अत्र कुविन्दादिशब्दास्तन्तुवायादिकमभिदधाना[4] उपश्लोक्यमानस्य तिरस्कारं व्यञ्जयन्तीत्यनुचितार्थम्[5] ।

---

1. वृष्णयः 2. I. प्रतिभासमानस्य न, L प्रतिभासमानस्यास्य
3. L. °पत्तिरनुचितैव 4. I. L. °वायादिमभि° 5. P. व्यञ्जन्ती

परुषवर्णत्वं श्रुतिकटुत्वम् । पदस्य, यथा—

अनङ्गमङ्गलगृहापाङ्गभङ्गितरङ्गितैः ।

आलिङ्गितः स तन्वङ्ग्या कार्तार्थ्यं लभते कदा ॥३३३॥

अत्र कार्तार्थ्यमिति ।

वाक्यस्य, यथा—

अचूचुरच्चण्डि कपोलयोस्ते कान्तिद्रवं द्राग्विशदं शशाङ्कः ।३३४।

अत्र चण्डिद्रागादीनि पदानि श्रुतिकटूनि ।

वक्त्राद्यौचित्ये गुणः, यथा

दीधीङ्वेवीङ्समः कश्चिद् गुणवृद्ध्योरभाजनम् ।

कित्प्रत्ययनिभः[1] कश्चिद्यत्र सन्निहिते नते ॥३३५॥ [ ]

१० अत्र वैयाकरणो वक्ता ।

यदा त्वामहमद्राक्षं पदविद्याविशारद[2] ।

उपाध्यायं तदा स्मार्षं समस्प्राक्षं च संमदम् ॥३३६॥

[ ]

अत्र वैयाकरणः प्रतिपाद्यः ।

१५ मातङ्गाः किमु वल्गितैः किमफलैराडम्बरैर्जम्बुका

सारङ्गा महिषा मदं व्रजत किं शून्येषु शूरा न के ।

कोपाटोपसमुद्भटोत्कटसटाकोटेरिभारेः शनैः

सिन्धुध्वानिनि हुंकृते स्फुरति यत्तद्गर्जितं गर्जितम् ॥३३७॥

२० [ ]

अत्र सिंहे वाच्ये परुषाः शब्दाः ।

अन्त्रप्रोतबृहत्कपालनलकक्रूरक्वणत्कङ्कण-

प्रायप्रेङ्खितभूरिभूषणरवैराघोषयन्त्यम्बरम् ।

---

1. I. L. P क्षित्. क्कित् 2. I. L. विशारदः 5. L. P. प्रषित

पीतच्छर्दितरक्तकर्दमघनप्राघारघोरोल्लसद्-[1][2]
व्यालोलस्तनभारभैरववपुर्दर्पोद्धतं धावति ॥ ३३८ ॥
[ म. च. अं. १. श्लो. ३५ ]

अत्र बीभत्से व्यङ्ग्ये ।

रक्ताशोककृशोदरी क्व नु गता त्यक्त्वानुरक्तं जनं ५
नो दृष्टेति मुधैव चालयसि किं वाताभिभूतं शिरः ।
उत्कण्ठाघटमानषट्पदघटासंघट्टदष्टच्छद-
स्तत्पादाहतिमन्तरेण भवतः पुष्पोद्गमोऽयं कुतः ॥३३९॥
[ वि. अं. ४.+ ]

अत्र शिरोधूननेन कम्पितस्य[3] वचसि प्रक्रान्ते । क्वचिन्नीरसे न १०
गुणो न दोषः । यथा—

शीर्णघ्राणांह्रिपाणीन् व्रणिभिरपघनैर्घर्घराव्यक्तघोषान्
दीर्घाघ्रातानघौघैः पुनरपि घटयत्येक उल्लाघयन्[4] यः ।
घर्मांशोस्तस्य वोऽन्तर्द्विगुणघनघृणानिघ्ननिर्विघ्नवृत्ते-[5]
र्दत्तार्घाः सिद्धसंघैर्विदधतु घृणयः शीघ्रमंहोविघातम्[6][7] ॥३४०॥ १५
[ सू. श. श्लो. ६ ]

व्यवहितार्थप्रत्ययजनकत्वं क्लिष्टत्वम् । पदस्य, यथा—
दक्षात्मजादयितवल्लभवेदिकानां
ज्योत्स्नाजुषां जललवास्तरलं पतन्ति ॥३४१॥ [ ]

प्राघार : सेकः । उल्लाघयन् स्वास्थ्यं नयन् । २०

1. L. प्राग्भार of प्रागार 2. L. घोरोल्लत्
+ Interpolated after verse 30
3. P. क. I. कुपितस्य 4. L. नल्लङ्घयन्त्यः 5. L. वान्तः
6. L. आहो 7. L. विगाढम्

दक्षात्मजास्तारास्तासां दयितश्चन्द्रस्तस्य वल्लभाः कान्तास्तद्वेदिकानामिति ।

झगित्यर्थप्रतीतौ गुणः । यथा–'काञ्चीगुणस्थानमनिन्दितायाः' ।

वाक्यस्य यथा—

५ धम्मिलस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः ।
रज्यत्यपूर्वबन्धव्युत्पत्तेर्[1]मानसं शोभाम् ॥ ३४२ ॥ [ ]

अत्र धम्मिल्लस्य शोभां प्रेक्ष्य कस्य मानसं न रज्यतीति संबन्धे क्लिष्टत्वम् ।

अविमृष्टः प्राधान्येनानिर्दिष्टो विधेयोंऽशो यत्र तस्य भावोऽवि-
१० मृष्टविधेयांशत्वम् । पदस्य, यथा—

वपुर्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितं वसु ।
वरेषु यद्वालमृगाक्षि मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने ।३४३।
[ कु. सं. स. ५. श्लो. ७२ ]

अत्रालक्षितत्वं नानुवाद्यम्, अपि तु विधेयमिति 'अलक्षिताजनिः'
१५ इति वाच्यम् । यथा च—

स्रस्तां नितम्बादवलम्बमानां पुनः पुनः केसरपुष्पकाञ्चीम् ।
न्यासीकृतां स्थानविदा स्मरेण द्वितीयमौर्वीमिव कार्मुकस्य ॥३४४॥
[ कु. सं. स. ३. श्लो. ५४. ]

अत्र मौर्वीं द्वितीयामिव इति द्वितीयत्वमात्रमुत्प्रेक्ष्यम् । यथा च–

२० तं कृपामृदुरवेक्ष्य भार्गवं राघवः स्खलितवीर्यमात्मनि ।
स्वं च संहितममोघसायकं व्याजहार हरसूनुसन्निभः ॥३४५॥
[ र. वं. स. ११. श्लो. ८३ ]

---

**दक्षात्मजेति** । अत्रैकपदप्रत्याय्योऽप्यर्थश्चन्द्रकान्तलक्षणो दक्षात्मजेत्याद्यनेकपदप्रत्यायितार्थपर्यालोचनाव्यवहिततया क्लिश्यमानो वाचकस्य क्लिष्टतामा-
२५ वहति ।

**काञ्चीगुणस्थानमिति** । अत्र रूढत्वादवान्तरपदार्थप्रत्ययमन्तरेणैव एकपदवदर्थप्रतीतिरिति नैतत्क्लिष्टम् ।

---

1. L बुद्धिव्युत्पत्तेः

अत्र सायकानुवादेनामोघत्वं[1] विधेयम् । 'अमोघमाशुगम्' इति तु युक्तः पाठः । यथा च—

मध्येव्योम त्रिशङ्कोः शतमखविमुखः स्वर्गसर्गं चकार । ३४६ ।
[ ]

इत्यत्र हि व्योमैव प्राधान्येन विवक्षितं न तन्मध्यम् । तेन मध्ये व्योम्न इति युक्तम् । यथा च—  ५

वाच्यवैचित्र्यरचनाचारुवाचस्पतेरपि ।
दुर्वचं वचनं तेन बहु तत्रास्म्यनुक्तवान् ।। ३४७ ।।
[ ]

अत्र नोक्तवानिति निषेधो विधेयः । यथा—'नवजलधरः संनद्धोऽयं न दृप्तनिशाचरः' इत्यादौ । न चानुक्तवत्त्वानुवादेनान्यदत्र किंचिद्विहितम् । यथा—  १०

**व्योमैव प्राधान्येनेति** । अत्र विश्वामित्रस्य तपःप्रभावप्रकर्षः प्रस्तुतः । स च तस्य निरुपकरणस्य सतः शून्ये व्योमनि स्वर्गसर्ग[2]सामर्थ्येनैव प्रतिपादितो भवतीति व्योमैव प्राधान्येन विवक्षितम्, न तन्मध्यम् ।  १५

**निषेधो विधेय** इति । प्रसज्यविषयत्वादित्यर्थः । यदुक्तम्—

(73) अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता ।
प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् ।। [ ]

नञ्-समासस्त्वनुपपन्नः । तस्य हि पर्युदास एव विषयस्तत्रैव विशेषणत्वान्नञः स्याद्यन्तेनोत्तरपदेन संबन्धोपपत्तेः । यदाह—  २०

(74) प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता ।
पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ।। [ ]

न च पर्युदासाश्रयणं युक्तम्, अर्थस्यासङ्गतिप्रसङ्गात् । उक्तवत्त्वप्रतिषेधो ह्यत्राभिमतः, नानुक्तवत्त्वविधिः । तस्मादस्य नञो विधेयार्थनिष्ठतया प्राधान्यस्यानूद्यमानार्थपरतया तद्विपरीतवृत्तिना उक्तवच्छब्देन सह सदाचारनिरतस्येव पतितेन वृत्तिर्नेष्यत एवेति स्थितम् । यदाह—  २५

(75) नञर्थस्य विधेयत्वे निषेधस्य विपर्यये ।
समासो नेष्यतेऽर्थस्य विपर्यासप्रसङ्गतः ।। इति ।।

1. L. °नुवादे मोघत्वम्  2. A. B. omit सर्ग

जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः ।
अगृध्नुराददेऽसोऽर्थानसक्तः सुखमन्वभूत् ॥ ३४८ ॥
[ र. वं. स. १. श्लो. २१ ]

अत्रात्रस्तताद्यनुवादेनात्मनो गोपनादि ।

५ वाक्यस्य, यथा—

शय्या शाद्वलमासनं शुचिशिला सद्म द्रुमाणामधः
शीतं निर्झरवारि पानमशनं कन्दाः सहाया मृगाः ।
इत्यप्रार्थितसर्वलभ्यविभवे दोषोऽयमेको वने
दुष्प्रापार्थिनि यत्परार्थघटनावन्ध्यैर्वृथा स्थीयते ॥३४९॥
[ ना. अं. ४. श्लो. २ ]

१० अत्र शाद्वलाद्यनुवादेन शय्यादीनि विधेयानि । अत्र च शब्द-रचना विपरीता कृतेति वाक्यस्यैव दोषः, न वाक्यार्थस्य । एवं विध्यनुवादौ कर्तव्यौ ।

---

**शय्यादीनि विधेयानीति** । यदाह—

१५ (76) अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत् ।
न ह्यलब्धास्पदं किञ्चित्कुत्रचित्प्रतितिष्ठति ॥ [ ]

(77) विधेयोद्देश्यभावोऽयं रूप्यरूपकात्मकः ।
न च तत्र विधेयोक्तिरुद्देश्यात्पूर्वमिष्यते ॥ [ ]

ननु 'शाद्वलं शय्या शुचिशिला आसनम्' इत्येवं विपर्ययेणात्र संबन्धः
२० करिष्यते, तस्य पुरुषाधीनत्वात् । तथा च न यथोक्तदोषावकाशो भविष्यतीति । सत्यम् । न सर्वविषयोऽयं संबन्धस्य पुरुषाधीनत्वोपगमः । तस्य हि विशेषणविशेष्यभाव एव विषयोऽवगन्तव्यो यत्र स्वसौन्दर्यादेव तयोरन्योन्याक्षेपः, न विध्यनुवादभावः । तदाह—**एवं चेति** । विध्यनुवादयोर्यथाश्रुतपदार्थसंबन्धनिबन्धनोऽर्थप्रतीतिक्रम इति पदार्थपौर्वापर्यनियमोऽवगन्तव्य इत्यर्थः ।
२५ ततश्च यदनूद्यते तस्यादावुपादानमुपपन्नम् । यस्तु विधीयते तस्य पश्चात् । 'खले वालीयूपो भवति' इत्यादौ च तथैव दृष्टम् । तथा (78) 'वृद्धिरादैच्' इत्यत्र भगवता **महाभाष्यकारेणावस्थापितम्**—यदुतात्र मङ्गलद्योतनार्थमादौ वृद्धिशब्दस्योपादानं क्षमणीयम् । अन्यथाऽऽदैजनुवादेन वृद्धिसंज्ञाविधानात्पश्चा-

त्वक् तारवी निवसनं मृगचर्मशय्या
गेहं गुहा विपुलपत्रपुटाघटाश्च ।
मूलं दलं च कुसुमं च फलं च भोज्यं
पुत्रस्य जातमटवीगृहमेधिनस्ते ॥ ३५० ॥ [ ]

यथा वा— ५

संरम्भः करिकीटमेघशकलोद्देशेन सिंहस्य यः
सर्वस्यापि स जातिमात्रविहितो हेवाकलेशः किल ।
इत्याशाद्विरदक्षयाम्बुदघटाबन्धेऽप्यसंरब्धवान्
योऽसौ कुत्र चमत्कृतेरतिशयं यात्वम्बिका केसरी ॥३५१॥
[ ] १०

अत्र योऽसाविति पदद्वयमनुवाद्यविधेयार्थतया विवक्षितमनुवाद्यमात्रप्रतीतिकृदिति यदः प्रयोगोऽनुपपन्नः । तथा हि—यत्र यत्तदोरेकतरनिर्देशेनोपक्रमस्तत्र तत्प्रत्यवमर्शिना तदितरेणोपसंहारो न्याय्यः । तयोरप्यनुवाद्य[1]विधेयार्थविषयत्वेनेष्टत्वात् । तयोश्च परस्परापेक्षया संबदभिधानं कार्यं स्यात्, यथा 'अदेङ्गुणः' इत्येवमादौ । 'प्रमाणमविसंवादि १५ ज्ञानम्' इत्यत्रापि 'यत्प्रमाणमिति लोके प्रसिद्धम्, तदविसंवादि ज्ञानमेवेति विज्ञेयम्' इति तात्पर्यार्थः । काव्येऽपि एषैव शैली । यथा–'इयं गेहे लक्ष्मीः' इत्यादि ।

एतदेव द्रढयितुं निदर्शयति–**त्वक्तारवी निवसनमिति** ।

**संरम्भ** इति । अत्र करिणां कीटव्यपदेशेन तिरस्कारः, तोयदानां च २० शकलशब्दाभिधानेनानादरः । **सर्वस्येति** । यस्य कस्यचित्तुच्छतरप्रायस्येति अवहेला । जातेश्च मात्रशब्दविशिष्टत्वेनावलेपः हेवाकस्य लेशशब्दाभिधानेनाल्पताप्रतिपत्तिरित्येतत्सावधानतया कविनोपनिबद्धम् । असंरब्धवानित्यत्र त्वविमृष्टविधेयांशत्वं प्रामादिकं तच्चानन्तरमेव दर्शितम् ।

पुनरविमृष्टविधेयांशत्वमेवाह—**अत्र योऽसाविति** । २५

1. I. °नुवाद

न्धस्य नित्यत्वात् । अत एवाहुः—(27) 'यत्तदोर्नित्यमभिसंबन्धः' [ ] इति । स चायमनयोरुपक्रमो द्विविधः—शाब्दश्चार्थश्चेति । तत्रोभयोरुपादाने सति शाब्दः, यथा—

यदुवाच न तन्मिथ्या यद्ददौ न जहार तत् ।३५२। [ ]

५ यथा च—

स दुर्मतिः श्रेयसि यस्य नादरः

स पूज्यकर्मा सुहृदां शृणोति यः ।३५३। इति । [ ]

एकतरस्योपादाने सत्यार्थस्तदितरस्यार्थसामर्थ्येनाक्षेपात् ।

तत्र तदः केवलस्योपादाने आर्थः प्रसिद्धानुभूतप्रक्रान्तविषयतया

१० त्रिविधः । तत्र प्रसिद्धार्थविषयः, यथा—'द्वयं गतम्' इत्यादि । अनुभूतविषयः, यथा—'ते लोचने प्रतिदिशं विधुरे क्षिपन्ती' इति । प्रक्रान्तविषयः, यथा—

कातर्यं केवला नीतिः शौर्यं श्वापदचेष्टितम् ।

अतः सिद्धिं सेमताभ्यामुभाभ्यामन्वियेष सः ॥३५४॥

१५ [ र. वं. स. १७. ४७ ]

यदः पुनरुत्तरवाक्यार्थगतत्वेनैवोपात्तस्यार्थः संबन्धः संभवति, पूर्ववाक्यगतस्य तच्छब्दस्यार्थादाक्षेपात् । यथा—

साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिके ।

उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः ॥३५५॥

२० [ ]

प्रागुपात्तस्य तु यच्छब्दस्य तच्छब्दोपादानं विना साकाङ्क्षतैव । यथात्रैव श्लोके आद्यपादयोर्विपर्यये ।

क्वचिदनुपात्तमपि द्वयं सामर्थ्याद्गम्यते । यथा—

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां

२५ जानन्ति ते किमपि तान्प्रति नैष यत्नः ।

---

**ये नाम केचिदिति** । नामशब्दोऽक्षमायाम् । यदुक्तम्—
(79) नाम कुत्साप्रश्नविषादामर्षप्रीतिसंख्यानृतानयसंभावनासु । [ ]

उत्पत्स्यते तु मम कोऽपि समानधर्मा

कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥ ३५६ ॥

[ मा. मा. अं. १. श्लो. ८ ]

अत्र स कोऽप्युत्पत्स्यते यं प्रति यत्नो मे सफलो भविष्यतीत्युभयोरपि अर्थादाक्षेपः । ५

एवं च स्थिते तच्छब्दानुपादानेऽत्र साकाङ्क्षत्वम् । न चासावित्यस्य तच्छब्दार्थत्वं युक्तम् । यथा—

असौ मरुच्चुम्बितचारुकेसरः प्रसन्नताराधिपमण्डलाग्रणीः ।

वियुक्तरामातुरदृष्टिवीक्षितो वसन्तकालो हनुमानिवागतः ।३५७।

[ ह. ना. अं. ६. ] १०

अत्र हि न तच्छब्दार्थप्रतीतिः । प्रतीतौ वा—

यस्य प्रकोपशिखिना परिदीपितोऽभू-

दुत्फुल्लकिंशुकतरुप्रतिमो मनोभूः ।

योऽसौ जगत्त्रयलयस्थितिसर्गहेतुः

पायात् स वः शशिकलाकलितावतंसः ॥३५८॥ [ ] १५

अत्र स इति पौनरुक्त्यं स्यात् ।

---

ये केचिदिह प्रबन्धे देशे काले वास्माकमवज्ञां कुर्वन्ति, ते किमपि स्वल्पं न किञ्चिल्लोकोत्तरं वा जानन्ति, तान् प्रति नैष प्रकरणनिर्माणविषयो यत्नः, तेषां स्तोकदर्शित्वात् । लोकोत्तरं यज्जानन्तीति व्याख्यातं तत्तेषामुपहासाय । कान् प्रति तर्हीत्याह—**उत्पत्स्यते त्विति** । सारेतरविभागज्ञ उत्पत्स्यते कश्चिदिति संभाव्यते । २०

**एवमिति** । तथा हि—सर्वेषामेव तावत्समासानां प्रायेण विशेषणविशेष्याभिधायिपदोपरचितशरीरत्वं नाम सामान्यं लक्षणमाचक्षते । इतरथा तेषां समर्थतानुपपत्तेः स च विशेषणविशेष्यभावो द्विधैव संभवति—सामानाधिकरण्ये व्यधिकरणश्चेति । तत्राद्यः कर्मधारयस्य विषयः । यत्र तु द्वे बहूनि वा २५ पदान्यन्यस्य[1] पदस्यार्थे विशेषणभावं भजन्ते सा बहुव्रीहेः सरणिः । तत्रैव

---

1. A. B drop पदान्यन्यस्य.

यदा संख्यायाः प्रतिषेधस्य च विशेषणभावो भवेत्तदा द्विगोर्नञ्समासस्य च गोचरः। द्वितीयः प्रकारः कारकाणां संबन्धस्य च विशेषणत्वाद्बहुविधः स तत्पुरुषस्य पन्थाः। तत्रापि यदा व्ययार्थस्य विशेष्यता[1] स्यात्तदाव्ययीभावस्य परामर्शः। तदेवं समासानां विशेषणविशेष्योभयांशसंस्पर्शित्वेऽपि यदा विशे-
५ षणांशः स्वाश्रयोत्कर्षाधानमुखेन वाक्यार्थचमत्कारकारणतया प्राधान्येन विवक्षितो विधेयधुरामधिरोहेदितरस्त्वनूद्यमानकल्पतया न्यग्भावमिव भजते तदासौ न वृत्तेर्विषयो भवितुमर्हति। तस्यां हि स[2] प्रधानेतरभावस्तयोरस्तमियात्। तच्चैतद्विशेषणमेकमनेकं वास्तु नानयोर्विशेषः कश्चित्। ननु च विशेषणत्वमवच्छेदकत्वाद्गुणभावो विधेयत्वं च विवक्षितत्वाप्राधान्यं तत्कथं
१० तयोर्भावाभावयोरिवान्योन्यविरोधादेकत्र समावेश उपपद्यते येनैकत्र नियमेन समासो निषिध्येता[3]न्यत्र च विकल्प्येत। नैष दोषः। विरोधस्योभयवस्तुनिष्ठत्वात् शीतोष्णादिवत्। न चेह वस्तुत्वमुभयोः संभवति। एकस्यैव वास्तवत्वादन्यस्य वैवक्षिकत्वेन विपर्ययात्। न च वस्त्ववस्तुनोर्विरोधः। न हि सत्यहस्तिनः कल्पनाकेसरिणश्च कश्चिदन्योन्यं विरोधमवगच्छति। फलभेदस्त्व-
१५ नयोर्निर्विवाद एव। एकस्य हि सकलजगद्रम्यं शाब्दिकैकविषयः पदार्थसंबन्धमात्रम्। अपरस्य पुनः कतिपयसहृदयसंवेदनीयः सत्कवीनामेव गोचरो वाक्यार्थचमत्कारातिशय इति।

अत्र क्रमेणोदाहरणानि। तत्र कर्मधारये यथा—

उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा
२० धृत्वा चान्येन वासो विगलितकबरीभारमंसं वहन्त्याः।
भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः
शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥३५५॥
[ वे. सं. अं. १. श्लो. ३ ]

अत्र विगलितकबरीभारत्वमलसलसद्बाहुत्वं चांसवपुषोर्विशेषणे रतेरुद्दीपन-
२५ विभावतापादनेन वाक्यार्थस्य कामपि कमनीयतामावहत इति प्राधान्येन विवक्षितत्वान्न ताभ्यां सह समासे कविना न्यग्भावं गमितो यथा चात्रैव तत्कालकान्तिद्विगुणितसुरतप्रीतित्वं हेतुभावगर्भं विशेषणं शौरे रुचिराचरण[4]लक्षणमतिशयमादधद्विधेयतया प्राधान्येन विवक्षितमिति न तेन सह समासे निमीलितम्।

(80) पदमेकमनेकं वा यद्विधेयार्थतां गतम्।
३० न तत्समासमन्येन न चाप्यन्योन्यमर्हति ॥ [ ]

1. N. विशेषणता 2. A. B. drops स
3. A. B. निषेध्येत C. निषिध्यत 4. N. °रुचिताचरण°

तत्रैकमुदाहृतमेव । अनेकं यथा—

अवन्तिनाथोऽयमुदग्रबाहुर्विशालवक्षास्तनुवृत्तमध्यः ।
आरोप्य चक्रभ्रममुष्णतेजास्त्वष्ट्रेव यत्नोल्लिखितो विभाति ॥३५६॥
[ ]

५

यथा च—

विद्वान् दारसखः परं परिणतो नीवारमुष्टिंपचः
सत्यज्ञाननिधिर्दधत्प्रहरणं होमार्जुनीहेतुतः ।
रे दुःक्षत्रिय किं त्वया मम पिता शान्तं मया पुत्रवान्
नीतः कीर्त्यवशेषतां तदिह ते धिक् धिक् सहस्रं भुजान् ॥३५७॥
[ ]

१०

यथा वा—

राज्ञो मानधनस्य कार्मुकभृतो दुर्योधनस्याग्रतः
प्रत्यक्षं कुरुबान्धवस्य मिषतः कर्णस्य शल्यस्य च ।
पीतं तस्य मयाद्य पाण्डववधूकेशाम्बराकर्षिणः
कोष्णं जीवत एव तीक्ष्णकरजक्षुण्णादसृग्वक्षसः ॥ ३५८ ॥ इति[1]

१५

[ वे. सं. अं. ४. श्लो. १ ]

यथा च—

हे हस्त दक्षिण मृतस्य शिशोर्द्विजस्य
जीवातवे विसृज शूद्रमुनौ कृपाणम् ।
रामस्य[2] पाणिरसि निर्भरगर्भखिन्न-
देवीप्रवासनपटोः करुणा कुतस्ते ॥३५९॥

२०

[ उ. रा. च. अं. २. श्लो. १० ]

एवम्—

'अङ्गराज सेनापते राजवल्लभ द्रोणापहासिन्, रक्ष भीमाद् दुःशासनम्'॥३६०॥
[ वे. सं. अ. ३. पृ. ८० ]

२५

इत्यादौ द्रष्टव्यम् ।

विध्यनुवादोऽपि विशेषणविशेष्यभावतुल्यफल' इति । तत्रापि तद्वदेव समासाभावोऽवगन्तव्यः । यथा—'चापाचार्यस्त्रिपुरविजयी' इति । प्रत्युदाहरणं त्वेतेषामेव कृतसमासवैशसानां कल्पनीयम् । बहुव्रीहौ यथा—

1. N. drops इति     2. N. भो रामपाणि°

येन स्थलीकृतो विन्ध्यो येनाचान्तः पयोनिधिः ।
वातापिस्तापितो येन स मुनिः श्रेयसेऽस्तु वः ॥३६१॥
[ ]

अत्रापि विन्ध्यादिविषयत्वेन स्थलीकरणादि यद्विशेषणतयोपात्तं तत्कर्तुर्मु-
५ नेरतिदुष्करकारितया कमपि तपःप्रभावप्रकर्षमवद्योतयति । विन्ध्यस्य प्रति-
दिवसमुच्छ्रायाच्छादितार्कप्रकाशस्य जगदान्ध्यविधायित्वात्पयोनिधेरगाधत्वादपार-
त्वाच्च वातापेश्च मायापरिग्रहग्रस्तसमस्तलोकत्वात् ततस्तत्प्राधान्येन विवक्षितमिति
न तैः सह समासे निर्जीवीकृतम् । प्रत्युदाहरणं यथा—

यः स्थलीकृतविन्ध्याद्रिराचान्तापारवारिधिः ।
१० यश्च तापितवातापिः स मुनिः श्रेयसेऽस्तु वः ॥ ३६२ ॥
[ ]

केचित्पुनरनयोरुदाहरणप्रत्युदाहरणयोरर्थस्योत्कर्षापकर्षप्रतीतिभेदो न कश्चि-
दुपलभ्यत इति मन्यन्ते । ते इदं प्रष्टव्याः—'किं भोः, सर्वेष्वेव समासेषु
इयं तदप्रतीतिरुत बहुव्रीहावेवायं शापः' इति । तत्र यदि सर्वेष्वेवेत्यभ्युप-
१५ गमस्तर्हि सहृदयाः साक्षिणः पृच्छयन्ताम् । वयं तावन्महदन्तरमेतयोः प्रतीत्योः
पश्यामः । अथ बहुव्रीहावेवेत्युच्यते, तदयुक्तम् । न हि प्रतीतिभेदहेतौ प्रती-
तसामर्थ्ये सत्यकस्मात्तदसंभवो भवितुं न्याय्यः । एवं हि क्षित्यादिसामग्र्याम-
विकलायामङ्कुरादिकार्योत्पादाभावाभ्युपगमोऽपि प्रसज्येतेति । सर्वत्रैवायं प्रतीति-
भेदोऽभ्युपगन्तव्यो नैव वा कुत्रचित्, न पुनरिदमर्धजरतीयं लभ्यते । इह वा
२० प्रतीतिवैचित्र्यं स्पष्टमवधारयतु मतिमान् । यत्र विध्यनुवादभावाभिधित्सयैव
पदार्थानामुपनिबन्धस्तत्रापि हि प्रधानेतरभावविवक्षानिबन्धनौ समासस्य भावा-
भावावुपगतावेव । यथा—

सूर्याचन्द्रमसौ यस्य मातामहपितामहौ ।
स्वयं वृतः पतिर्द्वाभ्यामुर्वश्या च भुवा च यः ॥ ३६३ ॥
२५ [ विक्रमोर्व. अं. ४, श्लो. १९ ]

अत्र हि त्रैलोक्यालङ्कारभूतौ चराचरस्य जगतो जीवितायमानौ भगवन्तौ
सूर्याचन्द्रमसौ प्रसिद्धावनूद्य यन्मातामहपितामहभावो विहितस्तत् तस्य पुरूरवसस्तौ
लोकोत्तरोभयाभिजनजनितमभिमानं कामपि काष्ठामधिरोपयतो विशेषणविशेष्य-
भावाभिहितेनैव नयेनात्राप्यनूद्यमानगतोऽतिशयो विधीयमानाकारसंक्रमणक्रमेण
३० तत्संबन्धिनः पर्यवस्यति । तयोर्हि स्वरूपमात्रं भिन्नं फलं पुनः पारम्पर्येण
वाक्यार्थोत्कर्षलक्षणमेकमेवेति प्राधान्येन विवक्षितत्वान्न तौ ताभ्यां सह
समासे म्लानिमानीतौ । इह च—

जनको जनको यस्या याता तस्योचिता वधूः ।
आर्यस्य गृहिणी या च स्तुतिस्तस्यास्त्रपास्पदम् ॥३६४॥ इति ।

द्विगौ यथा—
उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य मे ।
दैवीनां मानुषीणां च प्रतिकर्ता त्वमापदाम् ॥ ३६५ ॥ ५
[ र. वं. स. १. श्लो. ६०. ]

इत्यत्र हि संख्यायाः संख्येयेष्वङ्गेषु निरवशेषताप्रतिपत्तिफलमतिशयमादधानायाः प्राधान्येन विवक्षा । तत एव हि तेषु द्विविधापत्प्रतीकारेण राज्ञः शिवोपपत्तिः परिपुष्यतीति तस्यास्तैः सह समासो न विहितः । यथा च—
निग्रहात्स्वसुराप्तानां वधाच्च धनदानुजः । १०
रामेण निहितं मेने पदं दशसु मूर्धसु ॥३६६॥ [र. वं. स. १२, श्लो. ५२]
प्रत्युदाहरणमेतदेवोदाहरणं कृतसमासवैशसं द्रष्टव्यम् । नञ्समासविषयस्तु पूर्वमेव वितत्योपदर्शित उपपादितश्च । तत्पुरुषे कर्तुर्यथा—
देशः सोऽयमरातिशोणितजलैर्यस्मिन्ह्रदाः पूरिताः
क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रहः । १५
तान्येवाहितशस्त्रघस्मरगुरूण्यस्त्राणि भास्वन्ति नो
यद्रामेण कृतं तदेव कुरुते द्रोणात्मजः क्रोधनः ॥ ३६७ ॥
[ वे. सं. अं. ३. श्लो. ३३ ]

अत्र रामेणेति रामस्य कर्तृभावेन करणं प्रति यद्विशेषणत्वं तत्तस्य दारुणतातिरेकात्मकमुत्कर्षं रौद्ररसपरिपोषपर्यवसायिनं समर्पयति । तस्य निरतिशयशौर्यशौण्डीर्यशालित्वेन घोरतर[1]नैर्घृण्यनिघ्नतया च प्रसिद्धेः । तेन तत्प्राधान्यात्र विशेष्येण सह समासे गुणतां नीतं, कर्त्रादेः कारकस्यानेकस्य समशीर्षिकया विशेषणभावेन यदुपादानं स द्वन्द्वस्य विषय इति तत्स्वरूपनिरूपणावसर एव तस्य प्राधान्यमप्राधान्यं चाभिधास्यत इति न तदुदाहरणमिहोपदर्शितम् । नापि विध्यनुवादभावोदाहरणं तस्य विशेषणविशेष्यभावतुल्यफलतया तत्समानवृत्तान्तत्वोपपादनात् । प्रत्युदाहरणं यथा—
यस्यावमत्य गुरुदत्तमिमं कुठारं
डिम्भोऽपि राम इति नाम पदस्य हन्ता ॥३६८॥ इति ।

कर्मणो यथा—
कृतककुपितैर्बाष्पाम्भोभिः सदैन्यविलोकितै- ३०
र्वनमसि गता यस्य प्रीत्या धृतापि तथाऽम्बया ।

1. A. B. omit तर

नवजलधरश्यामाः पश्यन्दिशो भवतीं विना
कठिनहृदयो जीवत्येव प्रिये स तव प्रियः ॥ ३६९ ॥
[ ]

अत्र वनमिति यद्गमनक्रियायाः सीताविशेषणभूतायाः कर्मभावेन विशेषणं
५ तत्तस्या रामप्रीतिप्रकर्षयुक्ताया अन्यकुलमहेला दुर्लभं दुष्करकारित्वं नामोत्कर्षमर्पयति वनवासदुःखस्यातिकष्टत्वात् । स चोत्कर्षो रामस्य रतेरुद्दीपनतां प्रतिपद्यत इति प्रधानं न गतेत्यनेन सह समासे कविना तिरस्कृतम् । यथा च—

गुर्वर्थमर्थी श्रुतपारदृश्वा रघोः सकाशादनवाप्य कामम् ॥३७०॥
[ र. वं. स. ५. श्लो. २४ ]

१० इत्यत्र गुर्वर्थमित्यर्थिनोऽर्थनक्रियामुखेण यद्विशेषणं तत्तस्य श्लाघ्यतातिशयाधानद्वारेण रघोरुत्साहपरिपोषे पर्यवस्यतीति प्राधान्येन विवक्षितत्वान्नार्थिना सहसमासे सताममतामवमतां गमितमिति । यथा च—

संवर्धितानां सुतनिर्विशेषम् ॥३७१॥ इति । [ ]

प्रत्युदाहरणं यथा—

१५ प्रदक्षिणक्रियातीतस्तस्याः कोपमजीजनत् ॥ ३७२ ॥ इति । [ ]

तमभ्यनन्दत्प्रथमं प्रबोधितः प्रजेश्वरः शासनहारिणा हरेः ।३७३।
[ र. वं. स. ३. श्लो. ६८ ] इति ।

यथाकामार्चितार्थिनाम् ।३७४। [ र. वं. स. १. श्लो. ६ ] इति ।

यथाकालप्रबोधिनाम् ।३७५। [ र. वं. स. १ श्लो. ६ ]

२० इति च । करणस्य यथा— आलोकमार्गं सहसा ।३७६।
[ र. वं. स. ७. श्लो. ६ ] इति ।

अत्र करणेति यत्केशहस्तकर्मकस्य संभावितस्य रोधनस्य करणभावेन विशेषणं तत्तस्याः कस्याश्चिद्रभसौत्सुक्यप्रहर्षप्रकर्षरूपमतिशयं प्रतिपादयद्वधूवरयो रूपसंपदमसाधारणीमभिव्यनक्ति । यदवलोकनावधानव्यवधानाधायिनीं[1] तावतीमपि कालकलां विधायमानां मन्यमानयानया[2]
२५ सततस्वाधीनेनैकेन करकमलेन रोधोऽप्यस्य न कृतस्तेन तत्प्रधानमिति न रुद्ध इत्यनेन समासेऽस्तमुपनीतम् । यथा च—

कर्तुमक्षमया मानं प्राणेशः प्रत्यभेदि यत् ।
सोऽयं सखि स्वहस्तेन समाकृष्टस्त्वयानलः ॥ ३७७ ॥ इति ।

---

1. A. drops. व्यवधाना B. °नाव्यवधायिनीं N. °लोकनाधानव्य°

2. A. drops मन्यमानयान. B. drops मन्यमानः N. °मन्यमानयासततं

प्रत्युदाहरणं यथा—

धात्रा स्वहस्तलिखितानि ललाटपट्टे को वाक्षराणि परिमार्जयितुं समर्थः ॥३७८॥इति।

संप्रदानस्य यथा—

पौलस्त्यः स्वयमेव याचत इति श्रुत्वा मनो मोदते
देयो नैष हरप्रसादपरशुस्तेनाधिकं ताम्यति । ५
तद्वाच्यः स दशाननो मम गिरा दत्वा द्विजेभ्यो महीं
तुभ्यं ब्रूहि रसातलत्रिदिवयोर्निर्जित्य किं दीयताम् ॥३७९॥

[ बा. रा. अं. २ श्लो. २० ]

अत्र द्विजेभ्य इति निर्जयपूर्वकस्य भार्गवकर्तृकस्य महीदानस्य संप्रदानत्वेन यद्विशेषणं तन्मह्याः पात्रसात्करणेनोत्कर्षमादधद् भार्गवशौर्यातिरेकाभिव्यञ्जनेन दशाननस्य क्रोधोद्दीपनपर्यवसायि भवतीति प्राधान्येन विवक्षितत्वान्न दत्तेत्यनेन सह समासे कविना विच्छायीकृतम् । प्रत्युदाहरणमेतदेव पूर्ववद् द्रष्टव्यम् । १०

अपादानस्य यथा--

तातान्जन्म वपुर्विलङ्घितवियत् क्रौर्यं कृतान्ताधिकं
शक्तिः कृत्स्नसुरासुरोष्मशमनी नीता तथोच्चैः पदम् । १५
सर्वं वत्स तवातिशायि निधनं क्षुद्रात्तु यत्तापसात्
तेनाहं त्रपया शुचा च विवशः कष्टां दशामागतः ॥३८०॥

[ ]

अत्र तातादिति क्षुद्रात्तु यत्तापसादिति च ये जन्मनिधनयोरपादानभावेन विशेषणे ते तातस्य पितामहपितामहतया महामुनिपुलस्त्यापत्यतया च क्षुद्रतापसस्य च गणनानर्हतया तयोरुत्कर्षापकर्षद्वारेण तद्वतः कुम्भकर्णस्य कामपि कुलीनतां शौर्यापकर्षं चादधाने भ्रातुर्दशाननस्य शोकत्रपापावकेन्धनत्वभावेन परिणमत इति प्राधान्येन विवक्षितेन ताभ्यां सह समासे गुणतां गमिते । प्रत्युदाहरणं यथा—अत्रैव 'क्रौर्यं कृतान्ताधिकम्' ।३८१। [ ] इति । यथा च २०

'आसमुद्रक्षितीशानाम् ।३८२। [ र. वं. स. १. श्लो. ५ ] इति । २५

अधिकरणस्य यथा—

1. A. drops करणेनो 2. A. drops one पितामह. C. पितामहस्य पिता°

शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम् ।
वार्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ॥ ३८३ ॥
[ र. वं. स. १. श्लो. ८ ]

अत्र शैशव इत्यादीनि यान्यभ्यस्तविद्यत्वादीनामधिकरणभावेन विशेषणानि
५ तानि तेषामितरान्वयवैलक्षण्यलक्षणमतिशयमादधानानि रघूणां यथौचित्यं नय-
विनयादिसंपदमुन्मीलयन्तीति प्राधान्येन विवक्षितत्वान्न तैः सह समासे सम-
शीर्षिकां नीतानि । प्रत्युदाहरणं यथा—

रेणुरक्तविलिप्ताङ्गो विकृतो व्रणभूषितः ।
कदा दुष्प्रत्यभिज्ञातो भवेयं रणभूषितः ॥३८४॥
१० [ ]

संबन्धस्य यथा—

द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।३८५। इति ।

अत्र कपालिन इति यत्समागमप्रार्थनायाः शोचनीयतागतौ[1] हेतुत्वेनोपा-
त्तायाः संबन्धिद्वारेण विशेषणं तत्तस्यास्तत्र यत्सामर्थ्यं तत्सुतरामुपबृंहयति ।
१५ तस्य सकलामङ्गलनिलयतयानिन्दिताचारनिरतया च दर्शनस्पर्शनसंभाषणादीना-
मपि प्रतिषिद्धत्वात् । अतो विधेयार्थतया प्राधान्येन विवक्षितं न विशेष्येण
सह समासे प्रत्यधरीकृतम् । यथा च—

'स्कन्दस्य मातुः पयसां रसज्ञः' ।३८६। [र. वं. स. २. श्लो. ३६] इति ।
'कः क्षमेत तवानुजः' ।३८७। [ ] इति ।

२० प्रत्युदाहरणं तु 'किं लोभेन विलङ्घितः–' इति दर्शितमेव । यथा च[2]—

जयाशा यत्रास्माकं प्रतिघातोत्थितार्चिषा ।
हरिचक्रेण तेनास्य कण्ठे निष्क इवार्पितः ॥३८८॥ इति ।
[ कु. सं. स. २. श्लो. ४९ ]

अत्र हि हरेः संबन्धित्वेन चक्रस्य जयाशास्पदत्वमिति हरेरेव प्राधान्य-
२५ विवक्षा न चक्रमात्रस्य । तच्च तस्य समासेऽस्तमुपगतम् । विभक्त्यन्वयव्य-
तिरेकानुविधायिनी हि विशेषणानां[3] विधेयतावगतिः । तत एव चैषां विशेष्ये
प्रमाणान्तरसिद्धस्वोत्कर्षापकर्षाधायिनां[4] शाब्दे गुणभावेऽप्यार्थं प्राधान्यम् । विशे-

1. N. निरततया. 2. A. B. drop च 3. A. B. विषयतत्वगतिः
4. N, °सिद्धत्वोत्कर्ष°

ष्याणां च शाब्दे प्राधान्येऽप्यार्थो गुणभावोऽप्यनूद्यमानत्वात्, समासे च विभक्तिलोपान्नोत्कर्षापकर्षावगतिरिति न तन्निबन्धना रसाभिव्यक्तिरिति तदात्मनः काव्यस्येदमविमृष्टविधेयांशत्वं दोषतयोक्तमिति ।

अव्ययीभावे यथा—

सा दयितस्य समीपे नावस्थातुं न चलितुमुत्सहते ।
ह्रीसाध्वसरसविवशा स्पृशति दशां कामपि नवोढा ॥३८९॥ ५
[ ]

इत्यत्र दयितस्येति संबन्धितया यत्समीपस्य विशेषणं तत्तस्य सुकृत[1]शतलभ्यतालक्षणमुत्कर्षमादधद्रतेरुद्दीपने पर्यवस्यतीति प्राधान्येन विवक्षितत्वान्नोपदयितमितिवत् समीपार्थे नाव्ययेन सह समासेऽवसादं गमितम् । प्रत्युदाहरणं १० तु 'मध्येव्योम'—इत्यादि प्रदर्शितमेव । अनेनैव न्यायेन कृत्तद्धितवृत्त्योरपि प्रतिषेधोऽवगन्तव्यः । तत्राप्युक्तक्रमेण प्राधान्येतरभावविवक्षाविशेषात् । तयोरुदाहरणं यथा—

यः सर्वं कषति खलो बिभर्ति यः कुक्षिमेव सत्यतिथौ ।
यस्तु विधुं तुदति सदा शीर्षच्छेदं त्रयोऽपि तेऽर्हन्ति ॥३९०॥ १५
[ ]

इत्यत्र सर्वादीनां कषणादिषु कर्मभावेन विशेषणतयोपात्तानामुत्कर्षाधायितया प्राधान्येन विवक्षितत्वान्न तैः सह वृत्तौ न्यग्भावो विहितः । सर्वार्थस्य भुवनाभयदानदीक्षाबद्धकक्षाणां[2] बोधिसत्त्वानामपि चरितस्य तदन्तःपातित्वात् । खलाः खलु दम्भादिदोषरोपणेन[3] तदपि तेषां कषन्त्येव । कायोपलक्षणस्य कुक्षेः काय- २० स्य सर्वाशुचिनिधानत्वाद्विनश्वरत्वाच्च । विधोश्च सकलजगदानन्दहेतुत्वात्कषणादिकर्तृष्वकार्यकारितयापराधातिरेकलक्षणमुत्कर्षमादधतां प्राधान्येन विवक्षा । शीर्षच्छेदस्य च शारीरेषु निग्रहेषु तदतिरिक्तस्यान्यस्यासंभवात् । यथा च—'रामोऽस्मि सर्वं सहे' इति । उचितकारित्वं प्रति किमुच्यते रामभद्रस्य । दशरथस्य हि प्रसूतिरसाविति च । प्रत्ययोत्पत्तौ पुनर्न्यग्भूतसर्वादिकर्मभावः २५ कषणादिषु कर्त्रंश एवोन्मग्नतया प्रकाशेत न कर्मांशस्तत्रैव प्रत्ययोत्पत्तेः । वाक्ये तु यद्यपि शब्दवृत्तेन क्रियायाः प्रधानभावेन प्रतीतिः, तथापि तत्रान्यो विवक्षाकृतः साधनानामपि स प्रतीयत एव । न चैकस्मिन्नेव वाक्ये द्वयोः साध्यसाधनयोर्युगपत्प्रधानभावोऽनुपपन्न इति शक्यं वक्तुम् । शब्दार्थसामर्थ्यविवक्षा-

1. A. drops सु   2. A. ०कक्षाबद्धकक्षाणां C. कक्षाबद्धकक्षायाणां
3. B. °रोपणन. C. °रोरोणने. N. °रोपण

कृतानां त्रयाणामप्येकस्यैव विवक्षाकृतस्य प्राधान्यस्य बलीयस्तया तयोः समशीर्षिकाभावात् । तदिदमत्र तात्पर्यम् । यत्कथञ्चिदपि प्रधानतया विवक्षितं न तन्नियमेनेतरेण सह समासमर्हतीति । इतरच्च विशेष्यमन्यद्वास्तु न तत्र नियमः, तेन द्वन्द्वपदानां सरूपाणां च पदार्थानामर्थस्यान्योन्यं विशेषणविशेष्यभावाभावेऽपि यदा प्रत्येकं क्रियाभिसम्बन्धोपगमलक्षणं प्राधान्यं विवक्ष्येत तदा तेषामपि समास एकशेषश्च नेष्यत एव । यथा—

किमञ्जनेनायतलोचनाया हारेण किं पीनपयोधरायाः ।
पर्याप्तमेतन्ननु मण्डनं ते रूपं च कान्तिश्च विदग्धता च । ३९१ । [ ]

अत्र रूपादीनां प्रत्येकं मण्डनक्रियाभिसम्बन्धकृतं प्राधान्यं रत्युद्दीपनपर्यवसायि विवक्षितमिति न तत्तेषां समासेऽवसादितम् । यथा च—

यान्त्या मुहुर्वलितकन्धरमाननं तद्-
आवृत्तवृन्तशतपत्रनिभं वहन्त्या ।
दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या
गाढं निखात इव मे हृदये कटाक्षः ॥३९२ ॥ इति ।
[ मा. मा. अं. १. श्लो. ३२ ]

एकशेषे यथा—

प्राप्तावेकरथारूढौ पृच्छन्तौ त्वामितस्ततः ।
कश्च कश्च स कर्णारिः स च क्रूरो वृकोदरः ॥३९३॥ इति ।
[ वे. सं. अं. ५. श्लो. २५ ]

प्रत्युदाहरणमेतदेव कृतैकशेषमवगन्तव्यम् ।

यत्र पुनरेष प्रधानेतरभावो न विवक्षितः स्वरूपमात्रप्रतिपत्तिफलश्च विशेषणविशेष्यभावस्तत्र समासासमासयोः कामचारः । यथा—

स्तनयुगमश्रुस्नातं समीपतरवर्तिहृदयशोकाग्नेः ।
चरति विमुक्ताहारं व्रतमिव भवतो रिपुस्त्रीणाम् ॥३९४॥
[ काद. श्लो. २१. पृ. २६ ]

इत्यत्र भवत इति रिपुस्त्रीणामिति च रिपुस्त्रीणां स्तनयुगस्य च संबन्धित्वेन यद्विशेषणं न ततस्तेषामुत्कर्षयोगः कश्चिद्विवक्षितः, अपि तु तत्संबन्धप्रतीतिमात्रं तच्च व्रतमिव भवदरिवधूस्तनद्वयमित्यतः समासादपि तुल्यमेव । यथा चात्रैव रिपुस्त्रीणामिति रिपुसंबन्धमात्रप्रतीतिः स्त्रीणामिति ।

(81) विनोत्कर्षापकर्षाभ्यां स्वदन्तेऽर्था न जातुचित् ।
तदर्थमेव कवयोऽलङ्कारान्[1] पर्युपासते ॥ [ ]

1. N. °लंकारं

तौ विधेयानुवाद्यत्वविवक्षैकनिबन्धनौ ।
सा समासेऽस्तमायातीत्यसकृत्प्रतिपादितम् ॥
अत एव हि वैदर्भी रीतिरेकैव शस्यते ।
यतः समाससंस्पर्शस्तत्र नैवोपपद्यते ॥
संबन्धमात्रमर्थानां समासो ह्यवबोधयेत् । ५
नोत्कर्षमपकर्षं वा ॥ [ ]

यथा–

ऊर्ध्वाक्षितापगलितेन्दुसुधालवाक्त-[1]
जीवत्कपालचयमुक्तमहाट्टहासम् ।
संत्रस्तमुग्धगिरिजावलिताङ्गसङ्ग-[2] १०
हृष्टं वपुर्जयति हारि पिनाकपाणेः ॥ ३९५ ॥
[ ]

वाक्यात्तूभयमप्यदः । यथा—

न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसबलं जीवत्यहो रावणः । १५
धिग् धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥३९६॥ इति ।
[ हनुमन्नाटक. अं. १४ ]

तथा हि—मम अरय इति बहुवचनेन शत्रुशत्रुमद्भावो[3] ममानुचित इति संबन्धानौचित्यं क्रोधविभावो व्यज्यते । तपो विद्यते यस्येति पौरुषकथाहीनत्वं २० तद्धितेन मत्वर्थीयेनाभिव्यक्तम् । तत्रापिशब्देन निपातसमुदायेन तापसस्य सतः शत्रुताया अत्यन्तासंभाव्यमानत्वमभिव्यक्तम् । मत्कर्तृका यदि जीवनक्रिया तदा हननक्रिया तावदनुचिता तस्यां च स कर्ता । अपिशब्देन मानुषमात्रकः । अत्रैवेति मदधिष्ठितो देशोऽधिकरणम् । निःशेषेण हन्यमानतया राक्षसबलं च कर्मेति । तदिदमसंभाव्यमुपनतमिति पुरुषकारासंपत्तिर्ध्वन्यते । रावण इति २५ येन इन्द्रपुरविमर्दनादि किं किं न कृतमिति । धिग्धिगिति निपातेन शक्रजित-मित्युपपदसमासेन सह कृता च शक्रं जितवानित्याख्यायिकेयमिति व्यज्यते । स्वर्गेत्यादिसमासस्य स्वपौरुषानुस्मरणं प्रति व्यञ्जकत्वम् । ग्रामटिकेति स्वार्थिक-तद्धितप्रयोगेण स्त्रीप्रत्ययसहितेनाबहुमानास्पदत्वं व्यज्यते । विलुण्ठनशब्दे विशब्द-स्योपसर्गस्य निर्दयावस्कन्दव्यञ्जकत्वम् । वृथाशब्देन स्वात्मपौरुषनिन्दा व्यज्यते । ३०

1. N. ऊर्ध्वा° 2. A. drops सङ्ग 3. A. drops one शत्रु

भुजैरिति बहुवचनेन प्रत्युत भारमात्रमेतदिति व्यज्यत इति । किं तु प्रवृत्ति-
रेतस्य रसाभिव्यक्त्यपेक्षया शान्तशृङ्गारकरुणानन्तरेण प्रशस्यते ।

(82) यतः समासो वृत्तं च वृत्तयः काकवस्तथा ।
वाचिकाभिनयात्मत्वाद्रसाभिव्यक्तिहेतवः ॥
५ स चार्थान्तावधिः कार्यो नाधिको गद्यताश्रितः ।
गद्ये हि वृत्तवैकल्यान्न्यूना तद्व्यक्तिहेतुता ॥ [ ]

यथानन्तरोक्त उदाहरणे ।

(83) तस्याभिन्नः पदार्थानां संबन्धश्चेत्परस्परम् ।
न विच्छेदोऽन्तरा कार्यो रसभङ्गकरो हि सः ॥ [ ]

१० यथा—

मायद्दिग्गजगण्डभित्तिकषणैर्भग्नस्रवच्चन्दनः ॥३९७॥ इति ।
[ ]

अत्र हि 'क्षुण्णस्रवच्चन्दनः' इति युक्तः पाठः ।

विधेयत्वं चैतत्प्राधान्योपलक्षणमव्यभिचारात् । ततश्च प्रधानाविमर्शोऽपि
१५ दोषतयावगन्तव्यः । यथा—

स्नेहं समापिबति कज्जलमादधाति सर्वान् गुणान् दहति पात्रमधःकरोति ।
योऽयं कृशानुकणसंचयसंभृतात्मा दीपः प्रकाशयति तत्तमसो महत्त्वम् ॥३९८॥
[ ]

अत्र हि प्रकाशनक्रियाया एव प्राधान्यविवक्षा नान्यासामिति तासां तत्स-
२० मभीर्षिकया निर्देशो दोष एव । स हि तत्र शत्रादिभिरेव वक्तुं न्याय्यो
नाख्यातेन । यथा—

बिभ्राणः शक्तिमाशु प्रशमितबलवत्तारकौर्जित्यगुर्वीं
कुर्वाणो लीलयाधः शिखिनमपि लसच्चन्द्रकान्तावभासम् ।
आधेयादन्धकारे रतिमतिशयिनीमावहन्वीक्षणानां
२५ बालो लक्ष्मीमपारामपर इव गुहोऽहर्पतेरातपो वः ॥३९९॥
[ सू. श. श्लो. २५ ]

इत्यादौ ।

सर्वासां पुनः प्राधान्यविवक्षायां नाख्यातवाच्यत्वं दोषः । यथा—

सौधादुद्विजते त्यजत्युपवनं द्वेष्टि प्रभामैन्दवीं
३० द्वारान्नश्यति चित्रकेलिसदसो वेषं विषं मन्यते ।
आस्ते केवलमब्जिनी किसलयप्रस्तारशय्यातले
संकल्पोपनतत्वदाकृतिरसायत्तेन चित्तेन सा ॥४००॥
[ ]

अथ—

योऽविकल्पमिदमर्थमण्डलं पश्यतीश निखिलं भवद्वपुः ।
स्वात्मपक्षपरिपूरिते जगत्यस्य नित्यसुखिनः कुतो भयम् ॥३५९॥
[ ]

इत्यादौ इदमदःप्रभृतयः शब्दास्तच्छब्दार्थमभिदधतीत्युच्यते । ५
तर्हि यथादर्शनं व्यवहितानामेवोपादानं युज्यते । अव्यवहितत्वे हि
प्रत्युत तदितराकाङ्क्षा भवत्येव । यथा–

'यदेतच्चन्द्रान्तर्जलदलवलीलां प्रकुरुते ।
तदाचष्टे लोकः' । ३६० ।

इत्यत्र, 'सोऽयं वटः श्यामः' इति प्रसिद्धस्त्वया पुरस्तादुपयाचितो १०
य इत्यादौ च ।

अथ—

'स्मृतिभूः स्मृतिभूर्विहितो येनासौ रक्षता क्षताद्युष्मान्' ।३६१।
[ ]

इत्यादावव्यहितत्वेऽपि दृश्यते । १५
तर्हि, अत्रैव भिन्नविभक्तिकानां सोऽस्त्वित्यलम् । यथा वा–

किं लोभेन विलङ्घितः स भरतो येनैतदेवं कृतं
मात्रा स्त्रीलघुतां गता किमथवा मातैव मे मध्यमा ।
मिथ्यैतन्मम चिन्तितं द्वितयमप्यार्यानुजोऽसौ गुरुः
माता तातकलत्रमित्यनुचितं मन्ये विधात्रा कृतम् ॥३६२॥ २०

अत्रार्यस्येति तातस्येति च वाच्यम् । न त्वनयोः समासे गुणीभावः कार्यः । एवं समासान्तरेष्वप्युदाहर्यम् ।

विरुद्धबुद्धिकृत्त्वं पदस्य, यथा—

(84) यत्रैककर्तृकानेका प्राधान्येतरभाक्क्रिया ।
तत्राख्यातेन वाच्याया शत्राद्यैरपरा पुनः ॥ [ ]
इत्यन्तरश्लोकः ।
अयं च समासासमासविषयः सूक्तरत्नपरीक्षाव्यसनैकरसिकतया पदवाक्यविवेकानवधारणेन प्रदर्शितोऽपि सहृदयैः स्वयमेव तद्विवेकेन परामर्शनीयः ॥

गौरपि यद्वाहनतां प्राप्तवतः सोऽपि गिरिसुतासिंहः ।
सविधे निरहङ्कारः पायाद्वः सोऽम्बिकारमणः ॥३६३॥

अत्राम्बिकाया गौर्या रमण इति विवक्षितं मातृरमण इति तु विरुद्धां धियमुत्पादयति । तथा—

५ सहस्राक्षैरङ्गैर्नमसितरि नीलोत्पलमयी-
मिवात्मानं मालामुपनयति पत्यौ दिविषदाम् ।
जिघृक्षौ च क्रीडारभसिनि कुमारे सहगणै-
र्हसन् वो भद्राणि द्रढयतु मृडानीपरिवृढः ॥ ३६४ ॥

अत्र मृडानीपरिवृढ इति मृडान्याः पत्यन्तरे प्रतीतिं करोति ।

१० तथा[1]—

चिरकालपरिप्राप्तिलोचनानन्ददायिनः ।
कान्ता कान्तस्य सहसा विदधाति गलग्रहम् ॥३६५॥
[ ]

अत्र कण्ठग्रहमिति वाच्यम् ।

१५ वाक्यस्य, यथा—

अनुत्तमानुभावस्य परैरपिहितौजसः ।
अकार्यसुहृदोऽस्माकमपूर्वास्तव कीर्तयः ॥ ३६६ ॥
[ ]

अत्रापकृष्टश्छादितमकार्येषु मित्रम् । अः पूर्वो यासां ता अकीर्तय

२० इति विरुद्धा प्रतीतिः । क्वचिद्गुणः, यथा—

अभिधाय तदातदप्रियं शिशुपालो[2]ऽनुशयं परं गतः ।
भवतोऽभिमनाः समीहते सरुषः कर्तुमुपेत्य माननाम् ॥३६७॥
[ शि. व. स. १६. २. ]

अत्रानुशयमिति पश्चात्तापं कोपं च । अभिमना इति प्रसन्नमना

२५ निर्भयचित्तश्च । माननामिति पूजां निबर्हणं च । अत्र विपरीतार्थे-

1. I. drops तथा 2. P. शिशुपाल blotted out and a lacuna left 3. P. L. drop अत्र.

कल्पनाद् विरुद्धत्वेऽपि सन्ध्यर्थविग्रहार्थयोः स्फुटभिन्नार्थत्वेनाभिधानाद् गुणत्वम् ।

अथार्थदोषाः—

**९१) कष्टापुष्टव्याहतग्राम्याश्लीलसाकाङ्क्षसन्दिग्धाक्रमपुनरुक्तसहचरभिन्नविरुद्धव्यङ्ग्यप्रसिद्धिविद्याविरुद्धत्यक्तपुनरात्तपरिवृत्तनियमानियमविशेषसामान्यविध्यनुवादत्वान्यर्थस्य ॥७॥**  ५

दोषा[1] इति वर्तते[2] । कष्टावगम्यत्वात्कष्टत्वमर्थस्य, यथा—

सदामध्ये यासाममृतरसनिष्पन्दसरसं
सरस्वत्युद्दामा वहति बहुमार्या परिमलम् ।
प्रसादं ता एता घनपरिचयाः[3] केन महतां  १०
महाकाव्यव्योम्नि स्फुरितरुचिरायां तु रुचयः ॥३६८॥

यासां कविरुचीनां प्रतिभारूपाणां प्रभाणां मध्ये बहुमार्गा सुकुमारविचित्रमध्यमात्मकत्रिमार्गा सरस्वती भारती परिमलं चमत्कारं वहति, ताः कविरुचयो महाकाव्यव्योम्नि सर्गबन्धलक्षणे परिचयमागताः । कथमभिनेयकाव्यवत्प्रसादं यान्तु । तथा यासामादित्यप्रभाणां मध्ये  १५ त्रिपथगा वहति, ता मेघपरिचिताः कथं प्रसन्ना भवन्तीति संक्षेपार्थः ।

प्रकृतानुपयोगोऽपुष्टार्थत्वम्, यथा—

तमालश्यामलं क्षारमत्यच्छमतिफेनिलम् ।
कालेन लङ्घयामास हनूमानेष सागरम् ॥३६९॥ [ ]

अत्र तमालश्यामलत्वादयोऽनुपादानेऽपि[4] प्रकृतमर्थं न बाधन्त  २० इत्यपुष्टाः । यथा वानुप्रासे—

भण तरुणि रमण मन्दिरमानन्दस्यन्दिसुन्दरेन्दुमुखि ।
यदि सल्लीलोल्लापिनि गच्छसि तत्किं त्वदीयं मे ॥३७०॥

---

1. P. L. दोष  2. L. विद्यते  3. P. L. घनपरिचया
4. I. °मलादयो L तमालत्वानुपादाने

अनणुरणन्मणिमेखलमविरतसिञ्जानमञ्जुमञ्जीरम् ।
परिसरणमरुणचरणे रणरणकमकारणं कुरुते ॥३७१॥
[ रुद्रट का. लं. अ. २. श्लो. २२–२३]

अत्र वर्णसावर्ण्यमात्रं न पुनर्वाच्यवैचित्र्यकणिका काचिदस्तीत्य-
५ पुष्टार्थत्वम् । पूर्वापरव्याघातो व्याहतत्वं यथा—

जहि शत्रुकूलं कृत्स्नं जय विश्वंभरामिमाम् ।
न च ते कोऽपि विद्वेष्टा सर्वभूतानुकम्पिनः ॥३७२॥

अत्र शत्रुवधो विद्वेष्यभावेन व्याहतः ।

अवैदग्ध्यं ग्राम्यत्वं यथा—

१० स्वपिति यावदयं निकटो जनः स्वपिमि तावदहं किमपैति ते ।
इति निगद्य शनैरनुमेखलं मम करं स्वकरेण रुरोध सा ॥३७३॥
[ ]

व्रीडादिव्यञ्जकत्वमश्लीलत्वं यथा—

हन्तुमेव प्रवृत्तस्य स्तब्धस्य विवरैषिणः ।
१५ यथाशु जायते पातो न तथा पुनरुन्नतिः ॥ ३७४ ॥
[ ]

एतद्वाक्यं खलेषु प्रयुज्यमानं सेपसि[1] प्रतीतिं जनयति । इहान्वय-
व्यतिरेकाभ्यामर्थस्यैवाश्लीलत्वं पूर्वत्र तु पदवाक्ययोरिति विवेकः ।

साकाङ्क्षत्वम्, यथा—

२० अर्थित्वे प्रकटीकृतेऽपि न फलप्राप्तिः प्रभोः प्रत्युत
द्रुह्यन् दाशरथिर्विरुद्धचरितो युक्तस्तया कन्यया ।
उत्कर्षं च परस्य मानयशसोर्विस्रंसनं चात्मनः
स्त्रीरत्नं च जगत्पतिर्दशमुखो देवः कथं मृष्यते ॥३७५॥
[ म. च. अं. २. श्लो. ९. ]

---

२५ **स्वपितीति** । निद्राति । **स्वपिमीति** कामये ।

---

1. I. सेफसि. शे is written over से

अत्र स्त्रीरत्नमुपेक्षितुमित्याकाङ्क्षति। न हि परस्येत्यनेन संबन्धो योग्यः । यथा च--

गृहीतं येनासीः[1] परिभवभयान्नोचितमपि
प्रभावाद्यस्याभून्न खलु तव कश्चिन्न विषयः ।
परित्यक्तं तेन त्वमसि सुतशोकान्न तु भयाद्
विमोक्ष्ये शस्त्र त्वामहमपि यतः स्वस्ति भवते ॥३७६॥

[ वे. सं. अं. ३. श्लो. १९ ]

यत इति तत इत्यत्रार्थे । अत्र शस्त्रमोचनं हेतुमाकाङ्क्षति । यत्र त्वाकाङ्क्षा नास्ति तत्र न दोषः । यथा—

चन्द्रं गता पद्मगुणान्न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्याम् ।
उमामुखं तु प्रतिपद्य लोला द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥३७७॥

[ कु. सं. स. १ श्लो. ४३ ]

अत्र रात्रौ पद्मस्य संकोचो दिवा चन्द्रमसश्च निष्प्रभत्वं लोकप्रसिद्धमिति न भुङ्क्ते इति हेतुं नापेक्षते ।

संशयहेतुत्वं सन्दिग्धत्वं यथा–

मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमुदाहरन्तु ।
रम्या नितम्बाः किमु भूधराणामुत स्मरस्मेरविलासिनीनाम् ॥

[ भ. शृ. श. श्लो. ३६ ]

अत्र प्रकरणाद्यभावे सन्देहः । शान्तशृङ्गारयोरन्यतराभिधाने तु निश्चयः ।

प्रधानस्यार्थस्य पूर्वं निर्देशः क्रमस्तदभावोऽक्रमत्वम् , यथा–

---

हेतुमाकाङ्क्षतीति । तेन निर्हेतुः पृथग् न वाच्यः साकाङ्क्ष एवान्तर्भावादिति ।

---

1. येनासीः

'तुरगमथवा मातङ्गं मे प्रयच्छ मदालसम्' । ३७८ ।

अत्र मातङ्गस्य प्राग् निर्देशो न्याय्यः । यदा तूदारसत्त्वो गुर्वादिबलाद् प्राह्यमाणस्तुरगमित्यादि वक्ति तदा न दोषः ।

क्रमानुष्ठानाभावो वाक्रमत्वम्, यथा–

५ काराविऊण खउरं गामउडो मज्जिऊण जिमिऊण ।
नक्खत्तं तिहिवारे जोइसिअं पुच्छिउं चलिओ ॥३७९॥
[ ]

कचिदतिशयोक्तौ गुणो यथा–

पश्चात्पर्यस्य किरणानुदीर्णं चन्द्रमण्डलम् ।
१० प्रागेव हरिणाक्षीणामुदीर्णो रागसागरः ॥३८०॥
[का. द. परि. २. श्लो. २५७]

यत्तूद्देशिना[1]मनूद्देशिनां[2] च क्रमभ्रंशोऽक्रमत्वम्, यथा–

'कीर्तिप्रतापौ भवतः सूर्याचन्द्रमसोः समौ' ।३८१। इति ।

तत्र पदरचनाविपरीतेति भग्नप्रक्रमत्वलक्षणो वाक्यस्यैव दोषो न
१५ वाक्यार्थस्येति ।

द्विरभिधानं पुनरुक्तम्, यथा—

प्रसाधितस्याथ मधुद्विषोऽभूदन्यैव लक्ष्मीरीति युक्तमेतत् ।
वपुष्यशेषेऽखिललोककान्ता सानन्यकाम्या ह्युरसीतरा तु ।३८२।
[शि. व. स. ३. श्लो. १२.]

२० इत्युक्त्वैकार्थमेवाह —

कपाटविस्तीर्णमनोरमोरःस्थलस्थितश्रीललनस्य तस्य ।
आनन्दिताशेषजना बभूव सर्वाङ्गसङ्गिन्यपरैव लक्ष्मीः ॥३८३॥
[शि. व. स. ३ श्लो. १३]

यथा वा—'अश्मीयसंहतिभिरुद्धत[3]मुद्गराभिः' । ३८४ ।
२५ [ ]

---

1. I. यत्र L यत्र देशि° 2. I. °मनुद्देशिनां, L मन्ददेशिनां.
3. P. °तिनिरुद्धत°

अत्राश्वीयेति[1] समूहार्थायाः प्रकृतेः संहतेश्च पौनरुक्त्यम् । तथा—

छायामपास्य महतीमपि वर्तमानामागामिनीं जगृहिरे जनतास्तरूणाम्।३८५
[ शि. व. स. ५. श्लो. १४ ]

अत्र जनता इति तद्धितार्थस्य बहुवचनार्थस्य । तथा—

'पायात्स शीतकिरणाभरणो भवो वः' ।३८६।　　५

अत्र विशेषणाद्विशेष्यप्रतिपत्तौ भव इत्यस्य[2] । यत्र तु विशेषणान्न विशेष्यमात्रस्य प्रतीतिरपि तु तद्विशेषस्य[3] । तत्र पौनरुक्त्यमेव नास्ति । यथा—

तव प्रसादात्कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा ।
कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं किं मम धन्विनोऽन्ये ।३८७।　　१०
[ कु. सं. स. ३. श्लो. १० ]

अत्र हरशब्दस्य । अथ यथात्र कुसुमायुधोऽपीत्यस्माद्विशेष्योपादानमन्तरेणाप्युभयार्थप्रतिपत्तिस्तद्वदत्रापि भविष्यति । नैवम् । सप्तम्युत्तमनिर्देशेनैवास्मदर्थस्य विशेष्यस्य[4] प्रतिपादितत्वात् । एवं धनुर्ज्यादिपदेष्वपि विशेषप्रतिपत्तौ न पौनरुक्त्यम् । यदाह—(28) 'धनुर्ज्याशब्दे　　१५
धनुःश्रुतिरारुढेः प्रतिपत्त्यै' [　　　　] इत्यादि । यथा—

'धनुर्ज्याकिणचिह्नेन दोष्णा विस्फुरितं तव' ।३८८।

अत्र धनुःशब्दादारूढेः प्रतिपत्तिः ।

दोलाविलासेषु विलासिनीनां कर्णावतंसाः कलयन्ति कम्पम् ।३८९।
[　　　　]　　२०

**धनुःशब्दादिति** । अन्यथा ज्याकिणचिह्नेन दोष्णेत्युक्तेऽनवरतदृढाकर्षणाहितकिणमण्डितत्वं दोष्णो न प्रतीयते[5] । वेष्ट्यमानेऽप्यनया ज्यया कृतकिणचिह्नत्वस्य संभवात् ।

1. I. drops अत्र　2. L drops from बहुवचनार्थस्य to इत्यस्य
3. I. adds बहुवचनार्थस्य.　4. I. विशेषस्य　5. C. प्रतीयत

'लीलाचलच्छ्रवणकुण्डलमापतन्ति' ।३९०। [ ]

अपूर्वमधुरामोदप्रमोदितदिशस्ततः ।

आययुर्भृङ्गमुखराः शिरःशेखरशालिनः ॥३९१॥ [ ]

एषु कर्णश्रवणशिरःशब्देभ्यः सन्निधानस्य प्रतिपत्तिः ।

५ प्राणेश्वरपरिष्वङ्ग[1]— विभ्रमप्रतिपत्तिभिः ।

मुक्ताहारेण लसता हसतीव[2] स्तनद्वयम् ॥३९२॥ [ ]

अत्र मुक्ताशब्दाच्छुद्धिप्रतीतिः ।

प्रायशः पुष्पमालेव कन्यका कं न लोभयेत् ।३९३। [ ]

अत्र पुष्पशब्दादुत्कर्षप्रतीतिः ।

१० 'त्यज करिकलभ प्रेमबन्धं करिण्याः' ।३९४। [ ]

अत्र करिशब्दात्ताद्रूप्यावगतिः[3]। यत्र तु न विशेषप्रतिपत्तिर्यथा–

'ज्याबन्धनिष्पन्दभुजेन यस्य' ।३९५। [ ] इति ।

'अदादिन्द्राय कुण्डले' । ३९६ । [ ] इति ।

'पाण्ड्योऽयमंसार्पितलम्बहारः' ।३९७। [ ] इति ।

१५ 'मालाकार इवारामः' ।३९८। इति

'लब्धेषु वर्त्मसु सुखं कलभाः प्रयान्ति ।३९९। [ ] इति च

तत्र केवला एव ज्यादिशब्दाः, । न च नितम्बकाञ्च्युष्ट्रकरभादिषु तथा प्रसङ्गः । तेषां कविभिरप्रयुक्तत्वात् । (29) संकेतव्यवहाराभ्यां हि शब्दार्थनिश्चयः [ ] इति ।

---

२० **कर्णेति** विलासनिर्वाहार्थं प्रतिनियतस्वदेशसंनिहितैराभरणैः प्रयोजनमिति तदर्थं प्रयुक्तेभ्य इत्यर्थः ।

**मुक्ताशब्दादिति** । उत्प्रेक्ष्यमाणस्य स्तनद्वयकर्तृकस्य हासस्य सातिशयधवलताप्रतिपत्तये साधकतमस्य हारस्य केवलमुक्तालतावेष्टितत्वप्रतीत्यर्थं प्रयुक्तात् ।

**पुष्पशब्दादिति** । विदग्धजनमनोविलोभनक्षमकन्यारत्नोपमानभावेन

२५ मालाया उपादानादुत्कृष्टपुष्पग्रथितत्वावगमाय[4] प्रयुक्तादित्यर्थः ।

---

1. I. प्राणेश्वरः 2. I. L हसता 3. I. °शब्दत्वात्ताद्रू° 4. N. °वगमनाय

क्वचिद्गुणः, यथा—

प्राप्ताः श्रियः सकलकामदुघास्ततः किं
दत्तं पदं शिरसि विद्विषतां ततः किम् ।
संप्रीणिताः प्रणयिनो विभवैस्ततः किं
कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ॥४००॥　　५
[ भ. वै. श. श्लो. ६७ ]

अत्र हि निर्वेदपारवश्येन वक्तुरियमुक्तिः प्रत्युत शान्तरसपोषाय । यदाह—

(30) वक्ता हर्षभयादिभिराक्षिप्तमनास्तथा स्तुवन्निन्दन् ।
यत्पदमसकृद्ब्रूते तत्पुनरुक्तं न दोषाय ।। इति　　१०
[　　　　]

उचितसहचारिभेदो भिन्नसहचरत्वम्, यथा—

श्रुतेन बुद्धिर्व्यसनेन मूर्खता मदेन नारी सलिलेन निम्नगा ।
निशा शशाङ्केन धृतिः समाधिना नयेन चालङ्क्रियते नरेन्द्रता॥४०१
[　　　　]　　१५

अत्र श्रुतबुद्ध्यादिभिरुत्कृष्टैः सहचरैर्व्यसनमूर्खतयोर्निकृष्टयोर्भिन्नत्वम् ।

विरुद्धं व्यङ्ग्यं यस्य तद्भावो विरुद्धव्यङ्ग्यत्वम्, यथा—

लग्नं[1] रागावृताङ्ग्यः । ४०२ । [　　　　] इति ।

अत्र विदितं तेऽस्त्वित्यनेन श्रीस्तस्मादपसरतीति विरुद्धं व्यज्यते ।　　२०

प्रसिद्ध्या विद्याभिश्च विरुद्धत्वम् । तत्र प्रसिद्धिविरुद्धत्वं यथा—

इदं ते केनोक्तं कथय कमलातङ्कवदने
यदेतस्मिन् हेम्नः कटकमिति धत्से खलु धियम् ।
इदं तद्दुःसाध्यक्रमणपरमास्त्रं स्मृतिभुवा
तव प्रीत्या चक्रं करकमलमूले विनिहितम् ॥४०३॥　　२५
[　　　　]

1. L. ताङ्ग्येऽपि

अत्र कामस्य चक्रं लोकेऽप्रसिद्धम् ।

उपपरिसरं गोदावर्याः परित्यजताध्वगाः

सरणिमपरो मार्गस्तावद्भवद्भिरिहेक्ष्यताम् ।

इह हि विहितो रक्ताशोकः कयापि हताशया

५ चरणनलिनन्यासोदञ्चन्नवाङ्कुरकञ्चुकः ॥४०४॥ [ ]

इति । अत्र पादाघातेनाशोकस्य पुष्पोद्गम एव कविषु प्रसिद्धो नाङ्कुरोद्गमः । यथा वानुप्रासे

चक्री चक्रारपङ्क्तिं हरिरपि च हरीन् धूर्जटिर्धूर्ध्वजान्ता-

नक्षं नक्षत्रनाथोऽरुणमपि वरुणः कूबराग्रं कुबेरः ।

१० रंहः सङ्घः सुराणां जगदुपकृतये नित्ययुक्तस्य यस्य

स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेः सोऽवतात्स्यन्दनो वः ।४०५।

[ सू. श. श्लो. ७१ ]

अत्र कर्तृकर्मप्रतिनियमेन स्तुतिरनुप्रासानुरोधेनैव कृता न पुराणादिषु तथा प्रतीता । कदाचिच्चक्रिणश्चक्रारप्रियत्वं संभाव्येताप्यु-
१५ त्तराणि तु न तथा संगच्छन्त इति प्रसिद्धिविरोधः ।

यथा वा उपमायाम्—

ग्रश्नामि काव्यशशिनं विततार्थरश्मिम् ।४०६। [ ]

अत्र काव्यस्य शशिना, अर्थानां च रश्मिभिः साधर्म्यं न प्रसिद्धम् । तथा—

२० चकास्ति वदनस्यान्तः स्मितच्छाया विकाशिनः[2] ।

उन्निद्रस्यारविन्दस्य मध्यगा चन्द्रिका यथा ॥४०७॥

[ ]

अत्र मध्यगतचन्द्रिकयारविन्दस्योन्निद्रत्वमसंभवीति प्रसिद्धिविरुद्धत्वम् ।

---

1. P. °नलिजन्यासो 2. I. विकासिनः

कलाचतुर्वर्गशास्त्राणि विद्या । कलाश्च गीतनृत्तचित्रकर्मादिकाः । तत्र गीतविरुद्धत्वं यथा—

श्रुतिसमधिकमुच्चैः पञ्चमं पीडयन्तः
सततमृषभहीनं भिन्नकीकृत्य षड्जम्[1] ।
प्रणिजगदुरकाकुश्रावकस्निग्धकण्ठाः[2]
परिणतिमिति रात्रेर्मागधा माधवाय ॥४०८॥
[ शि. व. स. ११. श्लो. १ ]

श्रुतिसमधिकमिति श्रुत्या समधिकं पञ्चश्रुतिकमित्यर्थः । पीडयन्त इति । श्रुतिह्रासेनाल्पीकुर्वन्त इत्यर्थः । भिन्नकीकृत्यषड्जमिति । भिन्नषड्जं कृत्वेत्यर्थः । प्रातःकाले भिन्नषड्जो गेय इत्याम्नायात् । अत्र भिन्नषड्जेन मागधी गीतिरुपनिबद्धा । तस्यां च पञ्चमस्य ऋषभवदसंभव एव । दूरे पुनः श्रुतिसमधिकत्वम् । यतो भिन्नषड्जस्येदं लक्षणम्—

(31) धांशस्तु धैवतन्यासः पञ्चमर्षभवर्जितः ।
षड्जोदीच्यवतीजातेर्भिन्नषड्ज उदाहृतः ॥ [ ]

**धांश** इति धैवतांश इत्यर्थः । षड्जोदीच्यवतीजातेरिति । जातयो **ष्टा**दश । तथा हि **मुनिः**—

(85) षाड्जी चैवार्षभी चैव धैवत्यथ निषादिनी ।
षड्जोदीच्यवती चैव तथा स्यात्षड्जकैशिकी ॥
स्यात् षड्जमध्यमा चैव षड्जग्रामसमाश्रयाः ।
अत ऊर्ध्वं प्रवक्ष्यामि मध्यमग्रामसंश्रयाः ॥
गान्धारी मध्यमा चैव गान्धारोदीच्यवा तथा ।
पञ्चमी रक्तगान्धारी तथा गान्धारपञ्चमी ॥

1 P. षड्ग. In the lines that follow P has every where षड्ग for षड्ज.

2. P. I. L N. °रकाकि. As this makes no meaning I have taken this reading from शि. व. N. S.

एवं कलान्तरेष्वप्युदाहार्यम् ।

चतुर्वर्गे धर्मशास्त्रविरुद्धत्वम्, यथा–

सततं स राजसूयैरीजे विप्रोऽश्वमेधैश्च ।४०९। [ ]

अत्र विप्र इति । क्षत्रियस्य हि तत्राधिकारः ।

५ अर्थशास्त्रविरुद्धत्वम्, यथा–

अहंकारेण जीयन्ते द्विषन्तः किं नयश्रिया ।४१०। [ ]

द्विषज्जयस्य हि नयमूलत्वं स्थितं दण्डनीतौ ।

कामशास्त्रविरुद्धत्वम्, यथा—

तवोत्तरौष्ठे बिम्बोष्ठि दशनाङ्को विराजते ।४११। [ ]

१० उत्तरौष्ठमन्तर्मुखं नयनान्तं च मुक्त्वा चुम्बनवद्दशनरदनस्थानानीति हि कामशास्त्रे स्थितम् ।

मोक्षशास्त्रविरुद्धत्वम्, यथा–

'देवताभक्तितो मुक्तिर्न तत्त्वज्ञानसम्पदः' ।४१२। [ ]

---

मध्यमोदीच्यवा चैव नन्दयन्ती तथैव च ।
१५ कार्मीरवी च विज्ञेया तथान्ध्री कैशिकी मता ॥

[ना. शा. अ. २८ श्लो. ४२–४५ (नि. सा.); श्लो. ३८–४१. (चो. सं).

इत्येतासां मध्याद् या षड्जोदीच्यवती जातिस्तस्याः सकाशादित्यर्थः ।

**कलान्तरेष्वप्युदाहार्यमिति** । तत्र चित्रकलाविरोधो यथा—

कालिङ्गं लिखितमिदं वयस्य पत्रं
२० पत्रज्ञैरपतितकोटिकण्टकश्रि ॥ ४०१ ॥

'कालिङ्गं पतिताग्रकण्टकम्' इति पत्रविदामाम्नायः । एवं **कलान्तरेष्व**भ्यूह्यम् ।

**क्षत्रियस्य हीति** । तथा च स्मृतिः—

(86) राजा राजसूयेन स्वाराज्यकामो यजेत । राजा सर्वतो विजीती
२५ अश्वमेधेन यजेत ॥ [ ] इति ।

**देवताभक्तित इति** ।

(87) चतुर्विधा भजन्ते मां जनाः सुकृतिनः सदा ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥
तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ॥
३० [ भ. गी. अ. ७ श्लो. १६–१७ ]

एतस्यार्थस्य मोक्षशास्त्रेऽस्थितत्वाद्विरुद्धत्वम् ।

त्यक्तपुनरात्तत्वम्, यथा—

'लग्नं रागावृताङ्ग्याः । ४१३ । [ ] इति ।

अत्र विदितं तेऽस्त्वित्युपसंहृतोऽपि तेनेत्यादिना पुनरुपात्तः ।

क्वचिद्गुणः— ५

शीतांशोरमृतच्छटा यदि कराः कस्मान्मनो मे भृशं

संप्लुष्यन्त्यथ[1] कालकूटपटलीसंवाससं दूषिताः ।

किं प्राणान्न हरन्त्युत प्रियतमा संजल्पमन्त्राक्षरै-

रक्ष्यन्ते किमु मोहमेमि हहहा नो वेद्मि कामे गतिः ॥४१४॥

[ ] १०

अत्र ससन्देहालङ्कारस्त्यक्त्वा त्यक्त्वा पुनरुपात्तो रसपरिपोषाय ।

परिवृत्तौ विनिमयितौ नियमानियमौ सामान्यविशेषौ विध्य-नुवादौ च यत्र । तद्भावस्तत्त्वम् । तत्र परिवृत्तो नियमोऽनियमेन, यथा—

यत्रानुल्लिखिताक्षमेव निखिलं निर्माणमेतद्विधे- १५

रुत्कर्षप्रतियोगिकल्पनमपि न्यक्कारकोटिः परा ।

याताः प्राणभृतां मनोरथगतीरुल्लङ्घ्य यत्सम्पद-

स्तस्याभासमणीकृताश्मसु मणेरश्मत्वमेवोचितम् ॥४१५॥ [ ]

अत्रच्छायामात्रमणीकृताश्मसु मणेस्तस्याश्मतैवोचिता इति नियमे वाच्ये तस्याभास इत्यनियम उक्तः । परिवृत्तोऽनियमो नियमेन यथा— २०

वक्त्राम्भोजं सरस्वत्यधिवसति सदा शोण एवाधरस्ते

बाहुः काकुत्स्थवीर्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः ।

---

इत्युक्तनीत्या ज्ञानित्वेन यका[2] भक्तिः सा नात्र विवक्षिता । अपि त्वार्तत्वादिभिस्त्रिरूपा ।

**अनुल्लिखिताक्षमिति** । अनभिव्यक्तारम् । २५

इति ॥ **आचार्यश्रीहेमचन्द्रविरचिते विवेके** तृतीयोऽध्यायः ॥

---

1. संश्लिष्यन्त्यथ  2. N. एका

वाहिन्यः पार्श्वमेताः क्षणमपि भवतो नैव मुञ्चन्त्यभीक्ष्णं
स्वच्छेऽन्तर्मानसेऽस्मिन्कथमवनिपते तेऽम्बुपानाभिलाषः ।४१६।
[ भोजप्रबन्ध. श्लो. २३० ]

अत्र शोण इत्यनियमे वाच्ये शोण एवेति नियम उक्तः ।

५ परिवृत्तं सामान्यं विशेषेण यथा—

कल्लोलवेल्लितदृषत्परुषप्रहारै
रत्नान्यमूनि मकराकर मावमंस्थाः ।
किं कौस्तुभेन विहितो भवतो न नाम
याच्ञाप्रसारितकरः पुरुषोत्तमोऽपि ॥ ४१७ ॥

१० [ भल्लट. श. श्लो. ६२ ]

अत्र 'एकेन किं न विहितो भवतः स नाम' इति सामान्ये वाच्ये कौस्तुभेनेति विशेष उक्तः ।

परिवृत्तो विशेषः सामान्येन यथा—

श्यामां श्यामलिमानमानयत भोः सान्द्रैर्मषीकूर्चकै-
१५ मन्त्रं तन्त्रमथ प्रयुज्य हरत श्वेतोत्पलानां स्मितम् ।
चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिलापट्टके
येन द्रष्टुमहं क्षमे दश दिशस्तद्वक्त्रमुद्राङ्किताः ॥४१८॥

[ वि. भं. अ. ३. श्लो. १ ]

अत्र ज्योत्स्नामिति विशेषे वाच्ये श्याममिति सामान्यमुक्तम् ।

२० परिवृत्तो विधिरनुवादेन यथा—

अरे रामाहस्ताभरण मधुपश्रेणिशरण
स्मरक्रीडाव्रीडाशमन विरहिप्राणदमन ।
सरोहंसोत्तंस प्रचलदल नीलोत्पल सखे
सखेदोऽहं मोहं श्लथय कथय क्वेन्दुवदना ॥४१९॥

२५ [ ]

अत्र विधौ वाच्ये विरहिप्राणदमनेति—अनुवाद उक्तः ।

परिवृत्तोऽनुवादो विधिना यथा—

प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशां
अकेशवमपाण्डवं भुवनमद्य निःसोमकम् ।
इयं परिसमाप्यते रणकथाद्य दोःशालिनां
अपैतु रिपुकाननातिगुरुरद्य भारो भुवः ॥४२०॥ ५

[ वे. सं. अं. ३. श्लो. ३४ ]

अत्र शयित इत्यनुवादे वाच्ये शेषे इति विधिरुक्तः ।

प्रयत्नेन परिबोध्य स इति विधौ वाच्ये परिबोधित इत्युक्तमिति परिवृत्तविधित्वमपि[1] । अत्र चान्वर्थबलादेवाधिगतेः पदादिदोषाणां विशेषलक्षणं न प्रतीतम्[2] । १०

अथापवादानाह—

## ९२) नानुकरणे ॥८॥

दोषा इत्यनुवर्तते । अनुकरणविषये निरर्थकादयः शब्दार्थदोषा न भवन्ति । उदाहरणं प्रागेव दर्शितम् ।

## ९३) वक्त्राद्यौचित्ये च ॥ ९ ॥ १५

वक्तृप्रतिपाद्यव्यङ्ग्यवाच्यप्रकरणादीनां महिम्ना न दोषो न गुणः। तथोदाहृतम्।

## ९४) क्वचिद् गुणः ॥१०॥

वक्त्राद्यौचित्ये क्वचिद्गुण एव । तथैवोदाहृतम् ॥

इति । **आचार्यश्रीहेमचन्द्रविरचितायामलङ्कारचूडामणिसंज्ञस्वोपज्ञ-काव्यानुशासनवृत्तौ** दोषविवेचनस्तृतीयोऽध्यायः ॥ २०

---

1. L °मिति 2. प्रणीतं

सगुणौ शब्दार्थौ काव्यमित्युक्तम् । गुणानां च रसोत्कर्षहेतुत्वं सामान्यलक्षणं प्रतिपादितम् । इदानीं तद्भेदानाह—

**९५) माधुर्यौजःप्रसादास्त्रयो गुणाः ॥१॥**

५ त्रयो न तु दश पञ्च वा । लक्षणव्यभिचारादुच्यमानगुणेष्वन्तर्भावात् । दोषपरिहारेण स्वीकृतत्वाच्च । गुणा इति रसस्य गुणाः, शब्दार्थयोऽस्तु भक्त्या—इत्युक्तमेव ।

---

**न तु दश पञ्च वेति** । अयं भावः—माधुर्यौजःप्रसादा एव गुणाः, ते च मुख्यवृत्त्या रसस्यैवेति प्राक् सामान्यगुणलक्षणे निर्णीतम् । ततश्चैते १० शब्दार्थाश्रयत्वेनान्ये च गुणा यत्कैश्चन प्रतिपाद्यन्ते तन्न युक्तमिति । तथा हि—

(88) 'ओजःप्रसादश्लेषसमतासमाधिमाधुर्यसौकुमार्योदारतार्थव्यक्तिकान्तयो बन्धगुणाः' दश इति **केचित्** । [ का. लं. सू. अधि. ३. अ. १. सू. ४. ]

तत्र (89) 'अवगीतस्य हीनस्य वा वस्तुनः शब्दार्थसम्पदा यदुदात्तत्वं +
१५ निषिञ्चन्ति कवयस्तदोजः' इति **भरतः** । [ ]

यथा—

गोमायवः शकुनयोऽत्र शुनां गणोऽत्र लुण्ठन्ति कीटकृमयः परितस्तथैते ।
त्वं सम्पदं सकलसत्त्वकृतोपकारां नो दृष्टवान् यदपि तच्छव वञ्चितोऽसि ॥
४०२ ॥ [ ]

२० (90) अनवगीतस्याहीनस्य वा वस्तुनः शब्दार्थयोरर्थसम्पदा यदनुदात्तत्व निषिञ्चन्ति कवयस्तर्हि तदनोजः स्यादिति **मङ्गलः** [ ]

---

+ In the texts of ना. शा. ( C. S. S. & N. S. ) ओजः is described as follows:

अविगीताविहीनोऽपि स्यादुदात्तावभावकः ।
यत्र शब्दार्थसम्पत्तिस्तदोजः परिकिर्तितम् ॥
अ. १७. श्लो. १०३ ( C. S. S. )

समासवद्भिर्विविधैर्विचित्रैश्च पदैर्युतम् ।
सा तु स्वरैरुदारैश्च तदोजः परिकीर्त्यते ॥
अ. १६. श्लो. ९९ ( N. S. )

यथा—

ये सन्तोषसुखप्रबुद्धमनसस्तेषां न भिन्ना मुदो÷
येऽप्येते धनलोभसंकुलधियस्तेषां तु दूरे नृणाम् ।
धिक् तं कस्य कृते कृतः स विधिना तादृक्पदं सम्पदां
स्वात्मन्येव समाप्तहेममहिमा मेरुर्न मे रोचते ॥४०३॥ ५

[ सुभा. १०२७. लुलसूनोर्विद्याधरस्य ]

(91) कवीनामभिधेयं प्रति त्रयः पन्थानः । एते यदुत न्यूनमुत्कर्षन्ति, अधिकमपकर्षन्ति, यथार्थं वस्तु स्थापयन्ति, तत्कथमिवायं गुण इति **दण्डी** ।

[ ]

(92) तस्मात्समासभूयस्त्वमोजः[1] । [ का. द. परि. १. श्लो. ८० ] १०

तच्च गद्यविभूषणं प्रायेण, वृत्तवर्त्मन्यपि गौडास्तदाद्रियन्ते । प्रथममाख्यायिकादिषूपलभ्यते । द्वितीयं यथा—

दूरोद्दण्डतडित्करालतरलज्योतिश्छटाडम्बर-
स्फारस्फूर्जितदुर्जयास्त्रसचिवज्याघोषघूत्कारिणाम् ।
यस्यैकस्य शतानि पञ्च धनुषां दैत्याहवेषु व्यधु- १५
र्लोलीभावगभीरघोरमखिलब्रह्माण्डकोलाहलम् ॥ ४०४ ॥

[ ]

(93) रीतित्रयेऽप्योजसः साधारणत्वाद्गौडीयानिर्देशो न युक्तिमानिति **वामनो मङ्गलश्च** । तस्माद् 'गाढत्वमोजः' [ का. लं. सू. अधि. ३. अ. १. सू. ५ ]+ २०

यथा—

भस्मवर्म फणिनः पतिर्गवामस्थिपङ्क्तिरिति ते परिग्रहः ।
ईश इत्ययमनन्यचुम्बितश्चन्द्रचूड तदपि त्वयि ध्वनिः ॥४०५॥

[ ]

एवं रीत्यन्तरेऽपि । ओजसि हेत्वन्तरमवमृश्यतां, न पुनर्गाढत्वम् । तद्धि २५ शुद्धमोजसः प्रत्युत हानिहेतुः । यथा—

÷ The correct reading is तेषामभिन्नो मृदो. See सुभा. ( B. S. S. ) notes p. 33.

1 A. B. समासे

+ गाढबन्धत्वमोजः । that is how the sūtra stands.

वज्रेणान्तर्भु वज्रिन् जहि बहुविशतं वासुके शेष घोणां
दन्तैर्दिग्दन्तिनोऽक्ष्णो विघटयत पुटानङ्गुलीर्हि[1] त्रिशूलैः ।
दंध्वन्यध्वं श्रवःस्थाः प्रलयजलमुचः कूर्म आकम्पयोर्वीं
मैनाकक्षुद्विवक्षस्तटमटतु रणे कुम्भकर्णोऽस्तनिद्रः ॥४०६॥

५ [ ]

तस्मान्न गाढत्वमोजः । अर्थगुणस्तु (94) 'अर्थस्य प्रौढिरोजः' इति वामनः । [ का. लं. सू. अधि. ३. अ. २. सू. २ ]

तत्र—

(95) पदार्थे वाक्यवचनं वाक्यार्थे च पदाभिधा ।

१० प्रौढिर्व्याससमासौ च[2] ॥ [ का. लं. सू. अधि. ३. अ. २. सू. २. ]

इति या प्रौढिरोजस्तद्वैचित्र्यमात्रम् । साभिप्रायत्वरूपं चौजोऽपुष्टार्थत्वदोषाभावमात्रं न गुणः । किं च । भोः सहृदया अर्थो जडस्तस्याभिप्राय इति केयं भाषा । वक्तृश्रोत्रोः स इति चेत्तद्गतोऽर्थस्य गुण इति कथम् । अथ वस्त्वन्तराक्षेपकत्वमेव तस्य गुण इत्युच्यते । तद्वस्त्वन्तरमाक्षेप्यं वक्त्र-
१५ भिप्रायरूपमेवमाक्षेपकत्वमपि कविव्यापारबलादेव, तथाविनिवेशनाप्रकारयोगे तथाभावात् । अत एव प्रौढिर्वस्तुतो वक्तृगतैव, सा त्वर्थे काममुपचर्यतामित्यलं बहुना ।

(96) 'विभक्तिवाच्यवाचकयोगादनुक्तयोरपि शब्दार्थयोः प्रतिपत्तिः प्रसादः'+ इति भरतः । [ ]

२० पदपूर्विका तदर्थावगतिरिति शब्दार्थयोर्ग्रहणम् । यथा—

यस्याहुरतिगम्भीरजलदप्रतिमं गलम् ।
स वः करोतु निःसङ्गमुदयं प्रति मङ्गलम् ॥४०७॥

---

1 A. B. द्विशूलैः

2 A. B. C. do not give the fourth pāda which is as follows: साभिप्रायत्वमस्य च ॥

+ ना. शा. ( C. S. S. ) reads as follows:

अप्यनुक्तो बुधैर्यत्र शब्दोऽर्थो वा प्रतीयते ।
सुखशब्दार्थसंबोधात् प्रसादः परिकीर्त्यते ॥ अ. १७ श्लो. ९९
बहुशो यत्कृतं काव्यमुक्तं वापि पुनः पुनः ।
नोद्वेजयति तस्माद्धि तन्माधुर्यमुदाहृतम् ॥ अ.१६.श्लो. ९८ना.शा.(N. S.)

(97) ज्ञेयं विशेषणाधारा विशेष्याणामुक्तिरिति **वामनीयाः** । तस्मात्, शैथिल्यं प्रसादः [ का. लं. सू. अधि. ३. अ. १. सू. ६ ] ओजो विपर्ययात्मा दोषोऽसौ कथं गुण इति । गाढत्वसंप्लुतं शैथिल्यमेव गुण इति चेत् । परस्परविरोधित्वाद्गाढत्वशैथिल्ययोः कथमेकत्र सन्निवेशः संभवतीति । अनुभवादेव विरोधप्रतिषेध इति चेत् । यदाह— 5

(98) करुणप्रेक्षणीयेषु संप्लवः सुखदुःखयोः ।
यथानुभवतः सिद्धस्तथैवौजःप्रसादयोः ॥

[ का. लं. सू. अधि. ३. अ. १. सू. ८ ]

सेयं दृष्टान्तस्यैव तावदसिद्धिः । दृष्टान्तविघातश्च दार्ष्टान्तिकमपि प्रतिहन्ति । तथा हि–सामाजिकजनो नाटयकर्मणि करुणरसवासितचेताः प्रथमं 10 दुःख्यति[1] पात्रप्रयोगवैशारद्येन च पश्चात्सुख्यति । ओजःप्रसादयोः पुनर्युगपदेवानुभवप्रतिज्ञा । यदि च तत्त्वं विवेच्यते तदा सर्वेषामपि रसानां प्रतीतिश्चमत्कारसारत्वात्सुखरूपैवेति दृष्टान्त एव न संगच्छते । तस्माद्विकासहेतुः सर्वत्र÷ प्रसाद इति। अर्थगुणस्तु (99) 'वैमल्यं प्रसादः' [का.लं. सू. अधि.३. अ.२. सू.३] इति । प्रयोजकपदपरिग्रहो हि वैमल्यम् । तच्चाधिकपदत्वदोषनिराकरणात्स्वीकृतमेव । 15

(100) 'स्वभावस्पष्टं विचारगहनं वचः श्लिष्टम्' इति **भरतः** ।

[　　　　×]

यथा—

क्षणं स्थिताः पक्ष्मसु ताडिताधराः पयोधरोत्सेधनिपातचूर्णिताः । 20
वलीषु तस्याः स्खलिताः प्रपेदिरे चिरेण नाभिं प्रथमोदबिन्दवः ॥४०८॥

[ कु. सं. स. ५. श्लो. २४. ]

---

1. C. दुष्यति

÷ अर्थवैमल्यं प्रसादः ॥

× ना. शा. (C. S. S.) 25

विचार्यग्रहणं वृत्त्या स्फुटं चैव स्वभावतः ।
स्वतः सुप्रतिबन्धश्च श्लिष्टं तत्परिकीर्त्यते ॥　　अ. १७ श्लो. ९७
ईप्सितेनार्थजातेन संबद्धानुपरस्परम् ।
श्लिष्टता या पदानां हि श्लेष इत्यभिधीयते ॥　　श्लो. ९८

ना. शा. (N. S.) does not give the first verse. The second verse is identical.

सेयमभिधानाभिधेयव्यवहारे वैदग्धी, न पुनः सन्दर्भधर्मः । रचनारूपता हि गुणस्य स्वरूपमिति **वामनीयाः** । तस्मात् । (101) 'मसृणत्वं श्लेषः' । तदाह—यस्मिन् सति बहून्यपि पदानि एकपदवद्भासन्ते स श्लेषः ।

[ का. लं. सू. अधि. ३. अ. १. सू. १०. ] यथा—

५ 'अस्त्युत्तरस्यां दिशि देवतात्मा' इति ॥४०९॥ [कु. सं. स. १ श्लो. १]

मसृणमदन्तुरतायां हि रीतिवैशसोपनिपातः। न चान्यतररसनिर्वाहे निषवन्ते[1] ।

तस्मात् (102) 'अशिथिलं श्लिष्टम्' इति **दण्डी**।[+] [का. द. परि. १ श्लो. ४३]

प्रेक्षामृदङ्गनिनदानुपकर्ण्यं तूर्णमम्भोदनादरभसान्नृते मयूरैः ।

यन्मन्दिरे सरलकण्ठमकण्ठकूजमुन्मण्डलीकृतशिखण्डमकाण्ड एव ॥४१०॥

१० [ ]

सोऽयमोजःप्रकार एव । अदृष्टगौडसन्दर्भस्य वा दर्शनमित्युपेक्षणीयम् । गौडा हि शिथिलमाद्रियन्ते । यथा—

लीलाविलोलललनाललितालकलासकाः ।

विलुप्तमालतीमाला जलकालानिला ववुः ॥४११॥ इति ।

१५ [ ]

अर्थगुणस्तु (103) 'घटनाश्लेषः' । क्रमकौटिल्यानुल्बणत्वोपपत्तियोगो हि घटना ।

[ का. लं. सू. अधि. ३. अ. २ सू. ४ ]

यथा—

'दृष्ट्वैकासन'—इति ।

२० संविधानकभवं वैचित्र्यमात्रमिदं[2] न गुणः ।

(104) 'परस्परविभूषणो गुणालङ्कारग्रामः समम्' इति **भरतः** ।

[ ][+]

---

1 A. B. निषेधन्ते

+ श्लिष्टमस्पृष्टशैथिल्यम् ।

2 A. B, drops. इदं

+ अन्योन्यसदृशं यत्र तथान्योन्यभूषणम् ।
अलङ्कारगुणाश्चैव समासात् समता यथा ॥
ना. शा. अ. १७ श्लो. १०० (C. S. S.)

नातिचूर्णपदैर्युक्ता न च व्यर्थाभिधायिभिः ।
न दुर्बोधा तैश्च कृता समत्वात् समता मता ॥
अ. १६. श्लो ९६ (N.

यथा—

'स्मरनवनदी' ॥४१२॥ इति ।

(105) भिन्नाधिकरणा हि गुणालङ्कारास्तत्कथमन्योन्यं भूषयेयुरिति **दण्डी**। श्लेषयमकचित्राणि हि प्रायेण गुणान् विगृह्य वर्तन्ते । अनुप्रासोऽपि प्रचुरं[1] ÷ प्रयुक्तस्तद्वदेव । तस्मात् (106) प्रबन्धेष्वविषमं समम् । [का. द. परि. १ श्लो. ४७] ५
द्वे च प्रौढो मृदुर्मध्यश्चेति त्रयः । प्रौढमृदुमध्यवर्णविन्यासयोनित्वात् । प्रौढो यथा—

आहतं कुचतटेन तरुण्याः साधु सोढममुनेति पपात ।
त्रुटयतः प्रियतमोरसि हारात्पुष्पवृष्टिरिव मौक्तिकवृष्टिः ॥४१३॥
[ शि. व. स. १०, श्लो. ७४ ] १०

मृदुर्यथा—

ललितमङ्गमपाङ्गविलोकितं स्मितसुधालवपल्लवितोऽधरः ।
इति मनो जयतः प्रमादाजनं मनसिजस्य जयन्ति शिलीमुखाः ॥४१४॥
[ ]

मध्यो यथा— १५

ईदृशस्य भवतः कथमेतल्लाघवं मुहुरितीव रतेषु ।
क्षिप्तमायतमदर्शयदुर्व्या काञ्चिदाम जघनस्य महत्त्वम् ॥४१५॥
[ शि. व. स. १० श्लो. ७७ ]

तदिदं वृत्तिभ्यो न पृथग्भवतीति **वामनीयाः**। (107) तस्माद्येन रीतिविशेषेणोपक्रमस्तस्यापरित्याग आ समाप्तेरिति समताया रूपम् । तन्मुक्तके प्रबन्धे च । २०
[ का. लं. सू. अधि. ३. अ. १. सू. ११ ]

वैदर्भमार्गनिर्वाहो यथा—

'किं व्यापारैः—' ॥४१६॥ इति ।

गौडमार्गनिर्वाहो यथा—

क्षुद्रः क्वायं तपस्वी क्व च वदनवनच्छेदनिष्ठ्यूतमज्ज- २५
व्याजाज्यस्फारधाराहुतिहुतहुतभुक्पच्यमानैः कपालैः ।
जातास्थिस्फोटभीतिप्रविघटितवलद्ग्रामपार्श्वप्रवेश-
क्लाम्यत्सव्येतरार्धाकुलितहरहठाकृष्टखड्गो दशास्यः ॥४१७॥
[ ]

1. A- B. drop प्रचुरं

÷ समं बन्धेष्वविषमम् ।

पञ्चालमार्गनिर्वाहो यथा—

ते काकुत्स्थपृषत्कजर्जरजरत्तालद्रुमस्थाणव-
स्ते विच्छिन्नमहेन्द्रकन्दरकणत्कर्णेषु[1] टङ्काङ्किताः ।
ते लीलाशबरेन्दुशेखरशरव्याक्षेपवीथीभुवो
दुर्गाह्या अपि गाह्निताः शशिरुचा कीर्त्या वनान्तास्तव ॥४१८॥
[ ]

एवं प्रबन्धेऽपि ।

प्रयोगमार्गं प्रति च सन्तः प्रमाणम् । ते च न सर्वत्र समतां वैचित्र्याय संगिरन्ते । तथा हि—

अज्ञानाद्यदि वाधिपत्यरभसादस्मत्परोक्षे हृता
सीतेयं प्रतिमुच्यतामिति वचो गत्वा दशास्यं वद ।
नो चेल्लक्ष्मणमुक्तमार्गणगणच्छेदोच्छलच्छोणित-
च्छत्रच्छन्नदिगन्तमन्तकपुरं पुत्रैर्वृतो यास्यसि ॥४१९॥
[ ह. ना. अं. ७. श्लो. ४४ ]

इत्यादौ मसृणमार्गत्यागो गुणः । (108) तस्मात्समता न वक्तव्या । अर्थगुणस्तु 'अवैषम्यं समता' [ का. लं. सू. अधि. ३. अ. २. सू. ५ ]

प्रक्रमभेदो यथा—

च्युतसुमनसः कुन्दाः पुष्पोद्गमेष्वलसा द्रुमाः ।
मनसि च गिरं ग्रथ्नन्तीमे किरन्ति न कोकिलाः ॥४२०॥
[ औ. वि. च. श्लो. २६. पृ. १४६ मालवकुवलय. ]

प्रक्रमाभेदो ह्यवैषम्यं यथा—

च्युतसुमनसः कुन्दाः पुष्पोद्गमेष्वलसा द्रुमाः ।
मलयमरुतः सर्पन्तीमे वियोगिधृतिच्छिदः ॥४२१॥ इति ।

मधुग्रीष्मर्तुप्रतिपादनपरेऽत्र द्वितीयपादे प्रक्रमभेदः । मलयमरुतामसाधारणत्वात् । ततश्चापदोषत्वमेतन्न गुण इति ।

(109) अर्थस्य गुणान्तरसमाधानात्समाधिरिति भरतः ।
[ ]+

---

1 A. B. °रणत्

+ उपमास्वियहिष्ठनां (?) अर्थानां यत्नतस्तथा ।
प्राप्तानां चातिसंयोगः समाधिः परिकीर्त्यते ॥
ना. शा. अ. १७ श्लो. १०१ (C. S. S.)

यथा—

परिणतशरकाण्डच्छायमच्छाच्छया यत्
किसलयितमिवासीच्चारुलावण्यलक्ष्म्या ।
तदनुदिवसमस्यास्तोयविच्छेदसीदन्-
नवकुवलयदामश्यामलं जातमङ्गम् ॥४२२॥ [ ] ५

सोऽयमतिशयोक्तिविशेष इति **वामनीयाः**। तस्मात् (110)' आरोहावरोहक्रमः समाधिः ' । [ का. लं. सू. अधि. ३. अ. १. सू. १२ ]

तत्रारोहपूर्वोऽवरोहो यथा—

शृङ्गोत्खातभुवः कृतान्तमहिषादुत्त्रस्त उच्चैःश्रवाः
श्रुत्वैरावणकण्ठगर्जितभयं क्रुद्धोऽम्बिकाकेसरी । १०
संगीतागतकम्बलाश्वतरयोः प्रेक्षागृहद्वारि च
प्रेक्ष्य स्कन्दशिखण्डिनं चकितयोः कस्मान्मुखं म्लायति ॥४२३॥
[ ]

अवरोहपूर्व आरोहो यथा—

यद्गर्याभिर्जगाहे गुरुशकुलकुलास्फालनत्रासहास- १५
व्यस्तोरुस्तम्भिकाभिर्दिशि दिशि सरितां दिग्जयप्रक्रमेषु ।
अम्भो गम्भीरनाभीकुहरकवलनोन्मुक्तिपर्यायलोलत्-
कल्लोलाबद्धमुग्धध्वनिचकितकणत्कुङ्कुमं कामिनीभिः ॥४२४॥
[ ]

(111) तदिदं गुरुलघुसंचययोरन्योन्यान्तरणमिति **दण्डी** । तस्मादन्यधर्मस्यान्यत्र समाधानात्समाधिः । [ का. द. परि. १. श्लो. ९३ ]+ २०

यथा—

प्रतीच्छत्याशोकीं किसलयपरावृत्तिमधरः
कपोलः पाण्डुत्वादवतरति ताडीपरिणतिम्[1] ।
परिम्लानप्रायामनुवदति दृष्टिः कमलिनी- २५
मितीयं माधुर्यं स्पृशति च तनुत्वं च भजते ॥४२५॥ [ ]

---

अभियुक्तैर्विशेषस्तु योऽर्थस्यैवोपलभ्यते ।
तेन चार्थेन संपन्नः समाधिः परिकीर्त्यते ॥
ना. शा. अ. १६ श्लो. ९७ (N. S.)

+ अन्यधर्मस्ततोऽन्यत्र लोकसीमानुरोधिना ।
सम्यगाधीयते यत्र स समाधिः स्मृतो यथा ॥

1. C. °परिणति; A. drops परिणति

सेयमुपचरिता वृत्तिरिति चेद्गुणः, योगवृत्त्या किमपराद्धमिति । अर्थगुणस्तु (112) 'अर्थदृष्टिः समाधिः' [ का. लं. सू. अधि. ३. अ. २. सू. ६ ]
यथा—

अग्रादपि मध्यादपि मूलादपि सर्वतोऽप्यशोकस्य ।
५ पिशुनस्यमिव रहस्यं यतस्ततो निर्गतं कुसुमम् ॥४२६॥ [ ]

अर्थस्यायोनेरन्यच्छायायोनेर्वा÷ यदि न भवति दर्शनं तत्कथं काव्यं स्यात् । ततश्च सकलसत्कविदृष्टः काव्यार्थः समाधिः स्यादिति नार्थगुणः समाधिः ।

(113) बहुशो यच्छ्रुतमभिहितं वा वाक्यमनुद्वेजकं मनसः तन्मधुरमिति+ भरतः । [ ]

१० दयितजनरूक्षाक्षराक्षेपवचनेऽपि तत्समानमिति **वामनीयाः** । तस्मात् (114) 'पृथक्पदत्वं माधुर्यम्' [ का. लं. सू. अधि. ३. अ. १. सू. २० ]
(115) तदिदमनुभवविरुद्धमिति **दण्डी** । समासेऽपि माधुर्यस्य दर्शनात् ।
यथा—

अनवरतनयनजललवनिपतनपरिमुषितपत्रलेखान्तम् ।
१५ करतलनिषण्णमबले वदनमिदं किं न तापयति ॥४२७॥ इति ।
[ ]

तस्माद (116) 'रसवन्मधुरम्' । [ का. द. परि. १. श्लो. ५१ ] रसश्च द्विधा–वाग्वस्तुविषयत्वेन । तयोः श्रुतिवर्णानुप्रासाभ्यां वाग् रसः । अनुप्रासो ह्यलङ्कारः । कथं तस्य गुणत्वम् । अग्राम्याभिधेयता तु वस्तुरसः ।
२० असभ्यार्थनिबन्धनं हि ग्राम्यता । यथा—

ब्रह्मचर्योपतप्तोऽहं त्वं च क्षीणा बुभुक्षया ।
भद्रे भजस्व मां तूर्णं तव दास्याम्यहं पणम् ॥४२८॥ [ ]

---

÷ अर्थो द्विविधोऽयोनिरन्यच्छायायोनिश्च ॥
का. लं. सू. अधि. ३. अ. २ सू. ७

+ बहुशो यच्छ्रुतं वाक्यमुक्तं वापि पुनः पुनः ।
नोद्वेजयति यस्माद्धि तन्माधुर्यमिति स्मृतम् ॥
ना. शा. अ. १७. श्लो. १०२ (C. S. S.)

बहुशो यत्कृतं काव्यमुक्तं वापि पुनः पुनः ।
नोद्वेजयति तस्माद्धि तन्माधुर्यमुदाहृतम् ॥
ना. शा अ. १६. श्लो. ९८ (N. S.)

सोऽयं दोषभावो न गुणः एतेनोक्तिवैचित्र्यरूपं माधुर्यं **वामनो**क्तोऽप्यर्थगुणो[1] निरस्त एव । तस्मादाह्लादकत्वं माधुर्यमिति ।

(117) सुखशब्दार्थं सुकुमारमिति **भरतः** । [ +]
यथा—

अङ्गानि चन्दनरजःपरिधूसराणि ताम्बूलरागसुभगो[2]ऽधरपल्लवश्च । ५
अच्छाञ्जने च नयने वसनं तनीयः कान्तासुभूषणमिदं विभवावशेषः ।४२९।
[ ]

(118) 'सुखशब्दमेव' इति **वामनः** । [ ×]
यथा—
हरेः कुमारोऽपि कुमारविक्रमः सुरद्विपास्फालनकर्कशाङ्गुलौ । १०
भुजे सचीपत्रलताक्रियोचिते स्वनामचिह्नं निचखान सायकम् ॥४३०॥
[ र. वं. स. ३. श्लो. ५५ ]

सोऽयं श्रुतिकटुत्वदोषभावो न गुणः। माधुर्यप्रकार एवायम् । अर्थगुणस्तु (119) 'अपारुष्यं सौकुमार्यम्' । [का. लं. सू. अधि. ३. अ. २, सू. ११]
यथा— १५
स किलेन्द्रप्रयुक्तेन शौरिणा भूमिनन्दनः ।
चक्रघातोपदिष्टाध्वा[3] नीतोऽत्यन्तप्रवासताम् ॥४३१॥ [ ]
सोऽयममङ्गलरूपाश्लीलत्वदोषाभावो न गुणः । यदि वा उक्तिविशेषः पर्यायोक्तालंकारविषय एवासौ ।

(120) बहुभिः सूक्ष्मैश्च विशेषैः समेतमुदारमिति **भरतः** [ ÷] २०

1. A. B. °ह्लादत्व
+ सुखप्रयोज्यैर्यच्छब्दैर्युक्तं सुश्लिष्टसन्धिभिः ।
सुकुमारार्थसंयुक्तं सौकुमार्यं तदुच्यते ॥ ना.शा. अ. १७. श्लो. १०४ (C. S. S.)
मुख्यप्रयोज्यैर्यच्छन्दैर्युक्तं सुश्लिष्टसंधिभिः ।
सुकुमारार्थसंयुक्तं सुकुमारं तदुच्यते ॥ ना. शा. अ. १६ श्लो. १०९ (N. S.)
2. A. B. सुलभो
× अजरठत्वं सौकुमार्यम् ॥ का. लं. सू. अधि. ३. अ. १ सू. २१
3. N. °दिग्धाध्वा.
÷ अनेकार्थविशेषैर्यत् सूक्तैः सौष्ठवसंयुतैः ।
उपेतमतिचित्रार्थैः उदात्तं तच्च कीर्त्यते ॥ ना. शा.अ.१७ श्लो. १०६ (C. S. S.)
दिव्यभावपरीतं यच्छृङ्गाराद्भुतयोजितम् ।
अनेकभावसंयुक्तमुदारं तत्प्रकीर्तितम् ॥ ना. शा. अ. १६ श्लो. १०२. (N. S.)

यथा—

ये पूर्वं यवसूचिसूत्रसुहृदो ये केतकाग्रच्छद-
च्छायाधाम पुनर्मृणाललतिकालावण्यभाजोऽत्र ये ।
ये धाराम्बुविडम्बिनः क्षणमथो ये तारहारश्रिय-
स्तेऽमी स्फाटिकदण्डडम्बरजितो जाताः सुधांशो कराः ॥४३२॥
[ ]

उल्लेखवानयमर्थः कथं गुण इति **वामनीयाः** । तस्माद् (121) 'विकटत्वमुदारता ' यस्मिन् सति नृत्यन्तीव पदानीति वर्णना भवति [ का. लं. सू. अधि. ३ अ. १ सू. २२ ] । यथा–

अत्रान्तरे रणितहारलतानितम्ब–संवाहनस्खलितवेगतरङ्गिताङ्गी ।
देवी व्यपास्य शयनं धृतमानतन्तुरन्तःपुरं गतवती सह सौविदल्लैः ॥४३३॥
[ वि. शा. भं. अं. १ श्लो. ३९ ]

सोऽयमीषदमसृणोऽनुप्रासप्रभावो न गुणः । ओजः प्रकार एव चायम् । अर्थगुणस्तु–(122) ' अग्राम्यत्वमुदारता ' [का. लं. सू. अधि. ३.अ. १ सू.१२]

यथा—

त्वमेवं सौन्दर्या स च रुचिरतायाः परिचितः
कलानां सीमान्तं परमिह युवामेव भजथः ।
अयि द्वन्द्वं दिष्टया तदिह सुभगे संवदति वा-
मतः शेषं चेत् स्याज्जितमथ तदानीं गुणितया ॥ ४३४ ॥
[ ]

सोऽयं दोषाभावो न गुणः ।

(123) यस्मिन्न तथास्थितोऽपि तथास्थित एवार्थः प्रतिभाति सोऽर्थव्यक्तिर्गुण इति **भरतः** । [ ×]

यथा—

च्युतामिन्दोर्लेखां रतिकलहभग्नं च वलयं
द्वयं चक्रीकृत्य प्रहसितमुखी शैलतनया ।

---

× यस्यार्थानुप्रवेशेन मनसा परिकल्प्यते ।
अनन्तरं प्रयोगस्य सार्थव्यक्तिरुदाहृता ॥
ना. शा. अ. १७ श्लो. १०५ (C. S. S.)

सुप्रसिद्धा धातुना तु लोककर्मव्यवस्थिता ।
या क्रिया क्रियते काव्ये सार्थव्यक्तिः प्रकीर्त्यते ॥
ना. शा. अ. १६ श्लो. १०१ (N. S.)

अवोचयं पश्येत्यवतु स शिवः सा च गिरिजा
स च क्रीडाचन्द्रो दशनकिरणापूरिततनुः ॥४३५॥
[ सुभा. श्लो. ६६ चन्द्रकस्य ]

सोऽयं प्रसादादभिन्न इति **वामनीयाः** । तस्माद्यत्र पुरस्तादिव वस्तुनोऽवगतिः पश्चादिव वाचां सार्थव्यक्तिः । यथा—  ५

महेश्वरे वा जगतां महेश्वरे जनार्दने वा जगदन्तरात्मनि ।
न वस्तुभेदप्रतिपत्तिरस्ति मे तथापि भक्तिस्तरुणेन्दुशेखरे ॥४३६॥

(124) सोऽयमुक्त्यन्तराभिहितः प्रसाद एवेति **दण्डी** ।× तस्मादनेयार्थत्वमर्थस्यार्थव्यक्तिः । [ का. द. परि. १ श्लो. ७३ ] तत्र चास्तोकमुदाहरणम् । दोषाभावोऽयं कथमिव गुणः । तथा चेद्बहुत्वाद्दोषाणां शतं गुणाः स्युः । अर्थगुणस्तु (125) वस्तुनः स्फुटत्वमर्थव्यक्तिः । [ का. लं. सू. अधि. ३ अ. २. सू. १३ ]+ यथा—  १०

पृष्ठेषु शङ्खशकलच्छविषु च्छदानां राजीभिरङ्कितमलक्तकलोहिनीभिः ।
गोरोचनाहरितबभ्रु बहिः पलाशमामोदते कुमुदमम्भसि पल्वलस्य ॥४३७॥  १५
[ ]

कविवचनवैशारद्यतो वस्तुनः स्फुटत्वं न निसर्गतः । तदुक्तम्—
(126) निवेशयति हृद्यर्थान्न तथापि तथेति वा ।
महाकवीनां[1] विकटा वाणी विजयतामसौ ॥ [ ]
अपि च । जातिर्नामायमलङ्कार इति ।  २०
(127) श्रोत्रमनःप्रह्लादजनकं कान्तमिति **भरतः** । [ ]×

× अर्थव्यक्तिरनेयत्वम् ॥
+ वस्तुस्वभावस्फुटत्वमर्थव्यक्तिः ।
1. A. drops महाकवी°
× यो मनःश्रोत्रविषयः प्रसादजनको भवेत् ।
शब्दबन्धः प्रयोगेण स कान्त इति भण्यते ॥
ना. शा. अ. १७ श्लो. १०७ ( C. S. S. )
यन्मनःश्रोत्रविषयमाह्लादयति हीन्दुवत् ।
लीलाद्यर्थोपपन्नां वा तां कान्तिं कवयो विदुः ॥
ना. शा. अ. १६. श्लो. १०३ (N. S.)

अत्र काव्यकथा प्रकृता शेषाण्यप्रकृतानि । गुरुकीकरणमेका क्रिया ।

यथा वा—

मयूखैश्च निशाया गुरुकीकरणं भास्वरत्वसेव्यतादि यत्क्रियते, कमलैर्नलिन्याः शोभा परिमललक्ष्म्यादि, कुसुमगुच्छैर्लताया अभिगम्यत्वमनोहरत्वादि, हंसैः शारदशोभायाः श्रुतिसुखकरत्वमनोहरत्वादि, तत्सर्वं काव्यकथायाः सज्जनैरित्येतावानयमर्थो गुरुकीक्रियते इत्येत दीपकबलाच्चकास्ति । कथाशब्द इदमाह— आसतां तावत्काव्यस्य केचन सूक्ष्मा विशेषाः, सज्जनैर्विना काव्यकथा काव्यमित्येष शब्दोऽपि विध्वंसते । तेषु तु सत्सु आस्तां सुभगं काव्यं काव्यशब्दस्य व्यपदेशभागपि शब्दसन्दर्भमात्रं तथा तथा तैः क्रियते यथादरणीयतां प्रतिपद्यते ।

ननु यदि क्रियापदोपनिबन्धो दीपकम्, तर्हि न तदलङ्कारः । क्रियापदे हि सति वाक्यपरिसमाप्तिः प्रतीयते, न पुनरर्थातिशयः, विना क्रियापदं वाक्यमेव किंचिन्नास्ति यदवोचाम 'सविशेषणमाख्यातं वाक्यम्' इति । आख्यातशब्देन चात्राख्यातान्तं पदमुच्यते, तस्यैव क्रियावाचकत्वात् । तेनात्र कुतः कस्यातिशयः शास्त्रारम्भवैयर्थ्याच्च । तथा हि—अलङ्कारशून्यं काव्यं मा भूदिति कवीनामलङ्कारव्युत्पत्तिः क्रियते । क्रियापदस्य च दीपकत्वे सर्वं काव्यं सालङ्कारमिति नार्थोऽनेन ग्रन्थेन । अलङ्कारभेदप्रज्ञापनार्थोऽयं ग्रन्थ इति चेत्, तेनैव तावज्ज्ञापितेन कोऽर्थः सर्वथा सालङ्कारं काव्यं विधेयम् । तत्र यद्यलङ्कारान्तरं काकतालीयेन भवति तदा शोभनमेव, नो चेद्दीपकमवस्थितमेव । किं च संकरस्योच्छेदप्रसङ्गान्न[1] क्रियापदं दीपकालङ्कारः[2] । पृथक् पृथग् लब्धात्मनामलङ्काराणामेकवाक्यसंसर्गे संकरः । न च क्रियापदस्य दीपकत्वे रूपकादयोऽलङ्कारा दीपकात्पृथगात्मानं लब्धुमुत्सहन्ते । तस्मान्न क्रियापदं[3] दीपकम् । सत्यम् । न क्रियापदमात्रमस्माकं दीपकम् । किं तु बहुभिः समानजातीयैः कारकविशेषैरभिसंबध्यमानम् । तस्य चानेकेष्वर्थेष्वभिसंबध्यमानस्यार्थादन्वयिरूपं यत्तत्साम्यमुच्यते । प्राकरणिकाप्राकारणिकत्वाभ्यां च तेषामर्थानामुपमानोपमेयभावो गम्यमानो न श्रौतः । अत एव च दीपकमुपमातो भिद्यते । यत्रापि प्राकरणिका एव अप्राकरणिका एव वा पदार्था एकधर्मानुगता वर्ण्यन्ते, तत्रापि तेषां परस्परं किञ्चित्साम्यं विज्ञेयमेव ।

1. A. B. संकरोच्छेद

2. A. B. drop from दीपकालंकार to क्रियापदं

मदो जनयति प्रीतिं सानङ्गं मानभङ्गुरम् ।
स प्रियासङ्गमोत्कण्ठां सासह्यां मनसः शुचम् ॥५५२॥
[ ]

अत्र मदादौ यत्प्राकरणिकतया विवक्ष्यते तदुपमेयं शेषाण्युपमानानि । न च क्रमिकत्वमुपमां[1] रुणद्धीति वाच्यम् । ५

राम इव दशरथोऽभूद्दशरथ इव रघुरजोऽपि रघुसदृशः ।
अज इव दिलीपवंशश्चित्रं रामस्य कीर्तिरियम् ॥५५३॥
[ ]

इत्यादौ क्रमिकत्वेऽप्युपमादर्शनात् । प्रकृतानां धर्मैक्यं यथा—'पाण्डुक्षामं वदनम्' इति । यथा वा— १०

हंसाण सरेहिं सिरी सारिज्जइ अह सराण हंसेहिं ।
अण्णोण्णं चिअ एए अप्पाणं नवर गरुएन्ति[2] ॥५५४॥
[ स. श. ९५३ ]

---

ननु रुद्रटप्रभृतिभिर्वास्तवभेदतयापि दीपकं प्रतिपादितम्, तत्र च कथमौपम्यं स्यादित्याशङ्क्य निदर्शयति—**मद इति** । मदः सुरादिपानविकारविशेषः । मानभङ्गुरं मानभञ्जनशीलम् । यद्वा मानो भङ्गुरो यत्रेति समासः । क्रियादेर्धर्मस्यैकस्यैव वाच्यार्थेष्वनेकेष्वपि साधारणतयोपादीयमानत्वादत्रौपम्यं बलादापतति । तत्रापि यद्विवक्षितं तदुपमेयमित्तरत्तूपमानमिति । अत एव **रुद्रटोक्त** औपम्यसमुच्चयोऽपि दीपकमेव तुल्यस्वभावत्वादिति । १५

**हंसाणेति** । अत्र हंसानां श्रीः सरोभिः सरसां च हंसैः सार्यत इति सारणक्रियया एकयैव हंससरसोः प्राकरणिकयोः संबन्ध इति अन्योन्यनामालङ्कारो न दीपकतामतिक्रामति । यथा वा— २०

कण्ठस्य तस्याः स्तनबन्धुरस्य मुक्ताकलापस्य च निस्तलस्य ।
अन्योन्यशोभाजननाद्बभूव साधारणो भूषणभूष्यभावः ॥५४१॥ इति ।
[ कु. सं. स. १. श्लो. ४२ ] २५

अत्र कण्ठमुक्ताकलापयोः प्राकरणिकयोरन्योन्यं भूष्यभूषणभाव इति ।

---

1. I. क्रमैकत्वं° 2. I. गरुअन्ति

अप्रकृतानां यथा—

कुमुदकमलनीलनीरजालिर्ललितविलासजुषोर्दशोः पुरः का ।
अमृतममृतरश्मिरम्बुजन्मप्रतिहतमेकपदे त्वदाननस्य ॥५५५॥
[ ]

५ स्विद्यति कूणति वेल्लति विचलति निमिषति विलोकयति तिर्यक् ।
अन्तर्नन्दति चुम्बितुमिच्छति नवपरिणया वधूः शयने ॥५७३।

इत्यादौ तु जातेरेव चमत्कारो न दीपकस्येति कारकदीपकं न लक्ष्यते ।

**१२०) सामान्यविशेषे कार्ये कारणे प्रस्तुते तदन्यस्य**
१० **तुल्ये तुल्यस्य चोक्तिरन्योक्तिः ॥८॥**

सामान्ये प्रस्तुते तदन्यस्य विशेषस्य, विशेषे सामान्यस्य, कार्ये कारणस्य, कारणे कार्यस्य, सदृशे सदृशस्य चान्यस्याप्रस्तुतस्योक्तिरभिधानमन्योक्तिः । अप्राकरणिकस्याभिधानेन प्राकरणिकस्याक्षेप इत्यर्थः । यथा—

---

१५ **कुमुदेति** । अत्र कुमुदादीनि अमृतादीनि चाप्राकरणिकानि दृशोराननस्य च प्रकृतस्य वर्ण्यमानत्वात् । यथा वा—

यैर्दृष्टा सा नवा दृष्टा मुषिताः सममेव ते ।
[1]हृतं हृदयमेकेषामन्येषां जन्मनः फलम् ॥५४२॥ [ ]

अत्र प्रियतमां प्राकरणिकीं प्रति अवलोकयितॄणामनवलोकयितॄणां [2]चाप्राकरणिकानां मुषितत्वमेको धर्म इति । एवं च तुल्ययोगिता पृथङ् न वाच्या इति ।
२० ननु च कारकदीपकमन्यैरुक्तं तत्किं नोच्यते–इत्याशङ्क्याह–**स्विद्यतीत्यादि** ।

**अप्रस्तुतस्येति** । उपमानस्य वर्णनावसरादपेतत्वादप्राकरणिकस्येत्यर्थः ।
**अभिधानमिति** । स्तुतिनिन्दोभयानुभयरूपम् ।

२५ ननु चाप्रस्तुतपदार्थस्वरूपोक्तावसंबद्धभाषिता नालङ्कारगन्धोऽपि । तथा हि–पर्वतोपवर्णनायां कः समुद्रस्वरूपमुपवर्णयेत् । उपवर्णने वा शिष्टविगर्हणमवश्यं भावीत्याशङ्क्य, अन्योक्तिशब्दार्थं प्रकटीचिकीर्षुराह—**अप्राकरणिकस्याभि-**

---

1. A. drops हृतं 2. N- च प्रा°

धानेनेत्यादि । सान्तरेण शब्दव्यापारेण[1] गोचरीक्रियमाणः प्राकरणिको योऽर्थस्तेन सहाप्रस्तुतस्य कार्यकारणभावादौ सबन्धे सति सहृदयहृदयावर्जक-[2] मलङ्कारूपत्वमेतस्या इत्यर्थः । तुल्ये प्रस्तुते यत्र तुल्यस्याप्रस्तुतस्याभिधानं तत्र विशेषो विशेषेण प्रतीयत इति पूर्वाभ्यो भेदः ।[3] अन्योक्तौ च यद्वाच्यं तस्य कदाचिद्विवक्षितत्वं कदाचिदविवक्षितत्वं कदाचिद्विवक्षिताविवक्षितत्वमिति त्रयी   ५
बन्धच्छाया । तत्र विवक्षितत्वं यथा—

परार्थे यः पीडामनुभवति भङ्गेऽपि मधुरो
यदीयः सर्वेषामिह खलु विकारोऽप्यभिमतः ।
न संप्राप्तो वृद्धिं यदि स भृशमक्षेत्रपतितः
किमिक्षोर्दोषोऽसौ न पुनरगुणाया मरुभुवः ॥५४३॥   १०
[ भल्लटशतक. श्लो. ५६ ]

इक्षौ पीडनं पीडा, सत्पुरुषे तु परार्थोद्यते तदर्थं क्लेशः । भङ्गोऽपीक्षौ ग्रन्थित्रोटनम्, सत्पुरुषे तु धनाभावनिमित्तो विप्लवः । इक्षोर्माधुर्यमास्वाद्य-लक्षणो गुणः, सत्पुरुषे त्वनुल्बणत्वम् । इक्षोर्विकारः शर्करागुडखण्डादि सत्पुरुषे तु चित्तविक्रिया । न हि सत्पुरुषा विकृत्यवस्थायामप्यसेव्याः । उल्बणत्वाभावात् ।   १५
इक्षोरक्षेत्रमूषरम्, सत्पुरुषे निर्विवेकस्वाम्यादिस्थानम् । यथा वा—

अमी ये दृश्यन्ते ननु सुभगरूपाः सफलता
भवत्येषां यस्य क्षणमुपगतानां विषयताम् ।
निरालोके देशे कथमिदमहो चक्षुरधुना
समं जातं सर्वैर्न सममथवान्यैरवयवैः ॥५४४॥ [ ]   २०

नन्विति । यैर्जगदिदं भूषितमित्यर्थः । यस्य चक्षुषो विषयतां क्षणं गतानामेषां सफलता भवति तदिदं चक्षुरिति सम्बन्धः । आलोको विवेकोऽपि । न सममिति । हस्तो हि वरं स्पर्शादानादावप्युपयोगी । अवयवैरिति । अतितुच्छप्रायैरित्यर्थः । अत्र अविचारकजनाकुले काले कश्चिन्महापुरुषः कुस्वामिभि-रितरजनसमसत्कारतया ततोऽपि चाप्रयोजनतया न्यूनसत्कारतया खलीक्रियमाणः   २५
प्रस्तुतः । यथा च—

प्राणा येन समर्पितास्तव बलाद्येन त्वमुत्थापितः
स्कन्धे यस्य चिरं स्थितोऽसि विदधे यस्ते सपर्यां पुरः ।

---

1. A. B. drop शब्दव्यापारेण   2. A. drops one हृदय
3. A. अन्योभेदः after भेदः

तस्यास्य स्मितमात्रकेण जनयञ्जीवापहारक्रियां
भ्रातः प्रत्युपकारिणां धुरि परं वेताल लीलायसे ॥५४५॥
[ भल्लटश. श्लो. १०२ ]

अत्र यद्यपि सारूप्यवशेन कृतघ्नः कश्चिदन्यः प्रस्तुत आक्षिप्यते, तथाप्य-
५ प्रस्तुतस्य वेतालवृत्तान्तस्यापि चमत्कारकारित्वं न ह्यचेतनोपालम्भवदसंभाव्य-
मानोऽयमर्थ इति । एषु वाच्यं विवक्षितस्वरूपमेव, न च[1] प्रस्तुतम् । यत
आद्ययोर्द्वयोर्महागुणस्याविषयपतितत्वादप्राप्तपरभागस्य, तृतीये च कृतघ्नस्य कस्य-
चित्स्वरूपं वर्णयितुं तात्पर्येण प्रस्तुतमिति । अविवक्षितत्वं यथा—

कस्त्वं भोः कथयामि दैवहतकं मां विद्धि शाखोटकं
१० वैराग्यादिव वक्षि साधु विदितं कस्मादिदं कथ्यते ।
वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते
न च्छायापि परोपकारकरणे मार्गस्थितस्यापि मे ॥५४६॥ [ ]

कथयामीत्यादि प्रत्युक्तिः । अनेन पदेनेदमाह—'अकथनीयमेतत्, श्रूय-
माणं हि निर्वेदाय भवति, तथापि तु यद्यनुबन्धस्तत्कथयामि' । वैराग्यादिति ।
१५ काकवा दैवहतकमित्यादिना च सूचितं ते वैराग्यमिति यावत् । साधु विदित-
मित्युत्तरम् । कस्मादिति वैराग्ये हेतुप्रश्नः । इदं कथ्यत इत्यादि सनिर्वेदस्म-
रणोपक्रमं कथं कथमपि निरूपणीयतयोत्तरम् । वामेनेति । अनुचितेन कुला-
दिनोपलक्षित इत्यर्थः । वट इति । छायामात्रकरणादेव फलदानशून्यादुद्धुर-
कन्धर इत्यर्थः । छायापीति । शाखोटको हि श्मशानाग्निज्वालालीढलतापल्लवादि-
२० तरुविशेषः । न हि वृक्षविशेषेण सहोक्तिप्रत्युक्ती संभवत इति अविवक्षिता-
भिधेयेनैवानेन श्लोकेन समृद्धासत्पुरुषसमीपवासिनो[2] निर्धनस्य कस्यचिन्मनस्विनः
परिदेवितं तात्पर्येण वाक्यार्थीकृतमिति प्रतीयते । विवक्षितत्वं यथा—

उप्पहजायाएँ असोहिरीएँ फलकुसुमपत्तरहिआए ।
बोरीएँ वइं देन्तो पामर हो हो हसिज्जिहसि ॥५४७॥ [ ]

२५ अत्र वाच्योऽर्थो नात्यन्तं संभवी न चासंभवीति वा[3] वक्तुं शक्यम्,
व्यङ्ग्यस्यापि भावात् । तथा हि—उत्पथजाताया इति न तथा कुलोद्गतायाः ।
अशोभनाया इति लावण्यरहितायाः । फलकुसुमपत्ररहिताया इति । एवंभूतापि
काचित्पुत्रिणी वा भ्रात्रादिपक्षपरिपूर्णतया संबन्धिवर्गपोषिका वा परिरक्ष्यते ।
बदर्या वृत्तिं ददत्पामर भो भो हसिष्यसे । सकललोकैरिति भावः । यथा वा—

1. C. drops च 2. N. समीपे वा° 3. N. वा न वक्तुं

सोऽपूर्वो रसनाविपर्ययविधिस्तत्कर्णयोश्चापलं
दृष्टिः सा मदविस्मृतस्वपरदिक् किं भूयसोक्तेन वा ।
सर्वं विस्मृतवानसि भ्रमर हे यद्वारणोऽद्याप्यसा-
वन्तःशून्यकरो निषेव्यत इति भ्रातः क एष ग्रहः ॥५४८॥
[ भल्लटशतक. श्लो. १८ ]    ५

रसनाविपर्ययोऽसत्यभाषित्वमपि । चापलमश्रोतव्यश्रवणमपि । मदो गर्वोऽपि । शून्यकरत्वमपि । अत्र रसनाविपर्यासः शून्यकरत्वं च भ्रमरस्यासेवने न हेतुः कर्णचापलं तु हेतुः, मदः प्रत्युत सेवने निमित्तमिति ।

ननु यत्राप्रस्तुतं वस्तु प्रस्तुतार्थानुबन्धि कथ्यते, तत्र यद्यन्योक्तित्वमभिधीयते, तदा सहस्रमायप्रयाणे भटीनां [1]प्रियविरहोत्कण्ठितानामनेकविधव्यापारोपवर्णने भूतकालसंबन्धिनि प्रस्तुते—    १०

औत्सुक्यगर्भा भ्रमतीव दृष्टिः पर्याकुला क्वापि मतिः प्रयाति ।
निरत्ययप्रेमनिबन्धनं च वियोगकाले द्रवतीव चेतः ॥ ५४९ ॥ [    ]

इत्यप्रस्तुतार्थाभिधायिनि श्लोकान्तरे । तथा समुद्रेण रामं प्रति—

त्वयैव मह्यमियं स्थितिर्दत्ता । यामनुपालयता मया भवान्विष्णुरारोपितः ।    १५
[    ]

इति प्रस्तुत्योपन्यस्ते—

विअसन्तरअक्खउरं मअरन्दरसुद्धुमायमुहलमहुअरम् ।
उउणा दुमाण दिज्जइ हीरइ न उणाइ अप्पण च्चिअ कुसुमम् ॥५५०॥
[    ]    २०

इत्यप्रस्तुतार्थप्रतिपादके छन्दोन्तरे च अन्योक्तित्वप्रसङ्गः । अत्र हि वृत्तद्वये उपवर्ण्यमानेनाप्रस्तुतेनार्थेन वृत्तान्तरोपनिबद्धः प्रस्तुतोऽर्थोऽनुसंबध्यते । नैवम् । यत्र हि तस्मिन्नेव वाक्येऽभिधीयमानेनाप्रस्तुतेनार्थेन शब्दानुरूपारूढस्यापि प्रस्तुतस्यार्थस्य सारूप्यादिभिराक्षेपः सोऽन्योक्तेर्विषयः, यत्र त्वेकस्मिन्नेव वाक्ये वाक्यद्वये वा समर्थ्यसमर्थकतया बिम्बप्रतिबिम्बभावेन वा प्रस्तुताप्रस्तुतयोरभिधयैव संस्पर्शो वाक्यैकवाक्यता च सोऽर्थान्तरन्यासस्य निदर्शनस्य वा विषयः । एवं च 'औत्सुक्यगर्भा'–इत्यादौ, यद्यपि श्लोकान्तरे समर्थ्यस्य वस्तुन उपक्रान्तत्वाच्छ्लोकान्तरेण तथाभूतमप्रस्तुतमेव प्रस्तुतार्थाभिसंबन्धि वस्तूपनिबध्यते, तथापि नान्योक्तिरिति वक्तव्यम् । अपि त्वर्थान्तरन्यास एवासौ । अत्र हि वृत्तान्तरेणोपक्षिप्तो योऽसौ भटीनां वियोगजनितो व्यापारो भूतकालसंबन्धी    २५ ३०

1. A. B. drop. प्रिय

विशेषभूतः स कालमात्रसंबन्धिना सकलवियोगिनीव्यापारेण सामान्यरूपेण समर्थितः । यद्यप्युत्प्रेक्षाप्यत्रास्ते, तथापि 'प्रधानेन व्यपदेशा भवन्ति' इति न्यायोऽत्रानुसर्तव्यः । यद्वा संकर एवास्तु, न तावदन्योक्तिरियम् । तथा 'विअसन्तरअक्खउरं' इत्यत्रापि वृत्तान्तरोपनिबन्धनोपस्थितेऽर्थे रामसमुद्र-
५ व्यापाररूपे वृत्तान्तरेण ऋतुद्रुमव्यापारात्मनस्तत्प्रतिबिम्बस्य निदर्शितत्वान्निदर्श-नालङ्कारतैव ।

विकसद्रजःकर्बुरं मकरन्दरसक्षीतमुखरमधुकरम् ।

ऋतुना द्रुमाणां दीयते ह्रियते[1] न पुनरात्मनैव कुसुमम् ॥५५१॥ [ ]

इत्यर्थः । ऋतुरत्र वसन्तः । कुसुममिति जातावेकवचनम् ।

१० अथात्र कोऽलङ्कारः

लावण्यद्रविणव्ययो न गणितः क्लेशो महान्स्वीकृतः

स्वच्छन्दस्य सुखं जनस्य वसतश्चिन्तानलो दीपितः ।

एषापि स्वयमेव तुल्यरमणाभावाद्वराकी हता

कोऽर्थश्चेतसि वेधसा विनिहितस्तन्व्यास्तनुं तन्वता ॥ ५५२ ॥

१५ [ सुभा. श्लो. १४७२ धर्मकीर्तेः ]

द्रविणशब्देन सर्वस्वप्रायत्वमनेकस्वकृत्योपयोगित्वमुक्तम् । गणित इति । चिरेण हि यो व्ययः संपद्यते न तु विद्युदिव झटिति, तत्रावश्यं गणनया भवितव्यम् । अनन्तकालनिर्माणकारिणोऽपि तु विधेर्न विवेकलेशोऽप्युदभूदिति परमस्याप्रेक्षावत्त्वम् । अत एवाह–क्लेशो महानिति । अनेन प्रत्युतानर्थप्राप्ति[2]-
२० रुक्ता । एवमपि यदि परस्योपकारः स्यात्तदा को दोष इत्याशङ्क्याह–स्वच्छ-न्दस्येति । परार्थोऽपि न कश्चित्, यतो विशृङ्खलस्य जनस्यैतदभिलाषजननेन 'प्रथमेऽभिलाषो द्वितीये चिन्तनम्' इति चिन्तानलो दीपितः । येन सर्वमन्यत्प-रित्यज्यैतत्प्राप्त्युपायान्वेषणपरः संजातः । न चाप्यस्याः कश्चित्स्वार्थोऽनर्घलाव-ण्यसुन्दरतर[3]तनुलतानिर्माणे प्रत्युत समुचितवल्लभलाभाभावासंप्राप्तसंभोगविफलमनो-
२५ रथा वञ्चितैवेयं वराकीत्याह–एषापीति । यस्स्वयं निर्मीयते तदेतदेव च निहन्यत इति महद्वैशसमपिशब्देनैवकारेण+ चोक्तम् । कोऽर्थ इति । न स्वात्मनो[4] न

1. B. drops from न पुनरात्मा to महद्वैशसशब्देन.

2. A. drops. प्रत्युतानर्थं. 3. A. drops तर.

+ B. resumes from नैवकारेण चोक्तं.

4. A. B. न त्वात्मनो

लोकस्य न निर्मितस्येत्यर्थः। निन्दाद्वारिका स्तुतिरत्र प्रतीयत इति व्याजस्तु-
तिरिति केचित्। तच्च न चतुरस्रम्। यतोऽस्याभिधेयस्यैतदलंकारस्वरूपमात्र-
पर्यवसायित्वेन सुश्लिष्टता। तथा हि—न तावदयं रागिणः कस्यचिद्विकल्पस्तस्य
एषापि इत्येवंविधोक्त्यनुपपत्तेः। रागिणो हि वराकी हृता इति कृपालिङ्गित-
ममङ्गलोपहतं चानुचितं वचनम्। तुल्यरमणाभावादिति स्वात्मन्यत्यन्तमनुचितम्।　　५
आत्मन्यपि हि तद्रूपासंभावनायां रागितायां च पशुप्रायत्वं स्यात्। नापि
नीरागस्य, तस्यैवंविधविकल्पपरिहारैकव्यापारत्वात्। ननु च रागिणोऽपि कुत-
श्चित्कारणात् परिगृहीतकतिपयकालव्रतस्य वा, रावणप्रायस्य वा सीतादिविषये,
दुष्यन्तप्रायस्य वाऽनिर्ज्ञातजातिविशेषे शकुन्तलादौ किमियं स्वसौभाग्याभिमा-
नगर्भा तत्स्तुतिगर्भा चोक्तिर्न भवति। वीतरागस्यापि चानादिकालाभ्यस्तराग-　　१०
वासनावासिततया मध्यस्थत्वेनापि तां वस्तुतस्तथा पश्यतो नेयमुक्तिर्न संभाव्या।
न हि वीतरागो विपर्यस्तान् भावान् पश्यति। न ह्यस्य वीणाक्वणितं काकर-
टितकल्पं प्रतिभाति। तस्मात्प्रस्तुतानुसारेण उभयस्यापीयमुक्तिरुपपद्यते।
अन्योक्तावपि ह्यप्रस्तुतः संभवन्नेवार्थो वक्तव्यः। न हि तेजसीत्थमन्योक्ति-
र्भवति—'अहो धिक् ते कार्ष्ण्यम्' इति। स परं प्रस्तुतपरतयेति नात्रासंभवः,　　१५
किं तर्हि सुश्लिष्टतैवेति। सत्यमेतत्। किं तु न ह्ययं श्लोकः क्वचित्प्रबन्ध
इति श्रूयते, येन तत्प्रकरणानुगुणार्थतास्य परिकल्पयते[1] तस्मादन्योक्तिरेवेयम्।
यस्मादनेन वाच्येन गुणीकृतात्मना निःसामान्यगुणावलेपाध्मातस्य निजमहिमो-
त्कर्षजनितसमत्सरजनज्वरस्य विशेषज्ञमात्मनो न किंचिदेवापरं पश्यतः परिदे-
वितमेतदिति प्रकाश्यते। निःसामान्येति निजमहिमेति विशेषज्ञमिति—अमीषां　　२०
चतुर्णां वाक्यखण्डानामर्थस्य क्रमेण पादचतुष्टयतात्पर्यतया प्रतीयमानत्वात्।
तथा चायं [2]**विनिश्चयवृत्त्यन्ते धर्मकीर्त्याचार्यस्य** श्लोक इति प्रसिद्धिः।
एतदर्थसंसूचकश्चापरोऽपि हि स्फुट एव तस्य श्लोको विद्वद्भिः परिपठ्यते।
[3]यथा—

अनध्यवसितावगाहनमनल्पधीशक्तिनाप्यदृष्टपरमार्थतत्त्वमधिकाभियोगैरपि।　　२५
मतं मम जगत्यलब्धसदृशप्रतिग्राहकं प्रयास्यति पयोनिधेः[4] पय इव स्वदेहे जराम्।५५३।
[ धर्मकीर्तेः ]

अवगाहनमप्यध्यवसितमपि न यत्र, आस्तां तस्य संपादनम्। परमं यद-

1. A. B. परिकल्पते　2. A. B. विनिश्चितवृत्त्य° C. विनिश्चेयवृत्त्य°
3. C. drops यथा.　4. A. drops पयोनि C. पयोनिधिः.

ऐरावणं स्पृशति मन्त्रयते मरुद्भि-

र्वज्रं परामृशति पश्यति योधसार्थान् ।

मेरोस्तटानि विषमीकुरुते महेन्द्र-

स्त्वच्छङ्कया निशि न याति नरेन्द्रनिद्राम् ॥५५७॥

५ अत्र त्वय्युद्युक्ते न कश्चित् सुखं शेत इति सामान्ये प्रस्तुते विशेष उक्तः ।

अहो संसारनैर्घृण्यमहो दौरात्म्यमापदाम् ।

अहो निसर्गजिह्मस्य दुरन्ता गतयो विधेः ॥५५८॥ [ ]

अत्र क्वापि वस्तुनि विनष्टे विशेषात्मनि प्रस्तुते दैवस्वातन्त्र्यं

१० सर्वत्र सामान्यरूपमप्रस्तुतं वर्णितम् ।

---

र्थतत्त्वं कौस्तुभादिभ्योऽप्युत्तमम् । अलब्धं प्रयत्नपरीक्षितमपि न प्राप्तं सदृशं यस्य तथाभूतं प्रतिग्राहम्, एकैको ग्राहो जलचरः प्राणी, ऐरावणोच्चैःश्रवोधन्वन्तरिप्रायो यत्र तदलब्धसदृशप्रतिग्राहकम् । इयति चार्थे साम्यादुपमालङ्कारोऽनन्तरं तु स्वात्मनि विस्मयधामतयाद्भुते विश्रान्तिः, परस्य च श्रोतृजन-
१५ स्यात्यादरास्पदतया प्रयत्नग्राह्यतया चोत्साहजननेनैवंभूतमत्यन्तोपादेयं सत् कतिपयसमुचितजनानुग्राहकं कृतमिति स्वात्मनि कुशलकारितादर्शनया धर्मवीरस्पर्शेनेन वीररसे विश्रान्तिरिति मन्तव्यम् । अन्यथा परिदेवितमात्रेण किं कृतं स्यात् । अप्रेक्षापूर्वकारित्वमात्मन्यावेदितं चेत्किं ततः, स्वार्थपरार्थासंभवादिति । तदनेन निर्विवादतद्वीयश्लोकेनैव तदभिप्रायस्य परिदेवितविषयस्य संवाद्यमानत्वात्पूर्वत्रा-
२० प्यन्योक्तिरेव संभाव्यते । तत्रापि चाद्भुतास्वादपुरःसरा वीररसविश्रान्तिपरतानुसन्धेयेति । तर्हि यत्र प्रकरणमेव किंचिन्नास्ति तत्र कोऽलङ्कारः । यथा—
'निग्गण्डदुरारोहम्—' इति

उच्यते । यत्रोभयोरलङ्कारयोरन्यतरपरिग्रहे न दोषः, नापि साधकं प्रमाणम्, तत्र संकरालङ्कारो वक्ष्यते । अत्र च शठतरपोटापाटलयोरन्यतरस्याः प्राकरणि-
२५ कत्वाभावान्न ज्ञायते किमियं समासोक्तिरुतान्योक्तिरिति संकरालङ्कार एव । अन्ये त्वाहुः—यत एव[1] प्रकरणापरिज्ञानमत एवात्र प्राधान्येन पाटलोपवर्णने[2] क इव वस्तुपरिपोष इत्यन्यपरत्वे प्रवृत्तिनिवृत्ती प्रत्युपदेशाय शास्त्रमिव श्लोकाः कल्पन्त इति समासोक्तिपरिग्रहे कुतो दोषाभावः । तस्मादन्योक्तिरेवेयमिति ।

---

1. A. B. एवं 2. A. B. पादलोपवर्णने

ये यान्त्यभ्युदये प्रीतिं नोज्झन्ति व्यसनेषु च ।
ते बान्धवास्ते सुहृदो लोकः स्वार्थपरोऽपरः ॥५५९॥
[ ]

अत्र जरासंधः कार्यरूपां श्रद्धेयवचनतां प्रस्तुतामात्मनोऽभिव्यङ्क्तुं सुहृद्बान्धवरूपत्वकारणमप्रस्तुतं[1] वर्णयति । ५

सग्गं अपारिआयं[2] कुत्थुहलच्छिविरहिअं[3] महुमहस्स उरं ।
सुमरामि महणपुरओ अमुद्धयंदं च हरजडापब्भारं[4] ॥५६०॥
[ से. ब. ४-२० ]

अत्र जाम्बवान् वृद्धसेवाचिरजीवित्वव्यवहारकौशलादौ मन्त्रिताकारणे प्रस्तुते कौस्तुभलक्ष्मीविरहितहरिवक्षःस्मरणादिकमप्रस्तुतं कार्यं वर्णयति । १०

तुल्ये प्रस्तुते तुल्यस्याभिधाने द्वौ प्रकारौ श्लिष्टविशेषणतां सादृश्यमात्रं वा तुल्यान्तरस्याक्षेपहेतुः । यथा—

नालस्य प्रसरो जडेष्वपि कृतावासस्य कोशे रुचिर्दण्डे कर्कशता मुखे च मृदुता मित्रे महान् प्रश्रयः । १५
आमूलं गुणसंग्रहव्यसनिता द्वेषश्च दोषाकरे
यस्यैषा स्थितिरम्बुजस्य वसतिर्युक्तैव तत्र श्रियः ॥५६१॥
[ शार्ङ्गधरपद्धतौ ]

अत्राप्रस्तुतेनाम्बुजेन तुल्यविशेषणबलात्तुल्यः सत्पुरुष आक्षिप्यते ।

आदाय वारि परितः सरितां मुखेभ्यः २०
किं तावदर्जितमनेन दुर्णवेन ।
क्षारीकृतं च वडवावदने हुतं च
पातालकुक्षिकुहरे विनिवेशितं च ॥५६२॥
[ औ. वि. च. का. २०. पृ. १३९ भट्टेन्दुराजस्य ]

1. I. सुहृद्बान्धवरूपत्वमप्रस्तुते कारणं 2. I. अप्परियायं
3. I. °रहियं 4. I. हरजटा° २५

अत्रार्णवस्य गर्हणयाऽन्यायोपार्जितधनत्वादिप्रतीयमानसादृश्यः कश्चित्पुरुषविशेष आक्षिप्यते ।

विशेष्यश्लिष्टता तु अन्योक्तिप्रयोजकतया न वाच्या । यथा—

पुंस्त्वादपि प्रविचलेद्यदि यद्यधोऽपि
यायाद्यदि प्रणयनेन महानपि स्यात् ।
अभ्युद्धरेत्तदपि विश्वमितीदृशीयं
केनापि दिक् प्रकटिता पुरुषोत्तमेन ॥९६३॥

[ भल्लट. श. श्लो. ७९ ]

अत्र पुरुषोत्तमशब्दस्यार्थद्वयवाचकत्वेऽपि सत्पुरुषचरितस्य प्रस्तुतत्वादभिधा एकत्र नियन्त्रितेति सत्पुरुष एव वाच्यो न विष्णुस्तच्चरितस्याप्रकृतत्वात् । तत्प्रतिपत्तिस्तु[1] शब्दशक्तिमूलाद् ध्वनेरेव । यद्यपि च सत्पुरुषस्य विष्णोरिव विश्वोद्धरणे शक्तिर्नास्ति तथापि गुणवृत्त्या संभवतीति न दोषः ।

अन्योक्तिश्च क्वचित्स्तुतिरूपा, यथा—'नालस्य प्रसरः' इति । क्वचिन्निन्दारूपा, यथा—'आदाय वारि' इति । क्वचिदुभयरूपा, यथा—

निष्कन्दामरविन्दिनीं स्थपुटितोद्देशां स्थलीं पल्वले[2]
जम्बालाविलमम्बु कर्तुमितरा सूते वराकी[3] सुतान् ।
दंष्ट्रायां चतुरर्णवोर्मिपटलैराप्लावितायामियं
यस्या एव शिशोः स्थिता विपदि भूः[4] सा पुत्रिणी पौत्रिणी ॥९६४॥

[ ]

अत्र पूर्वार्धे निन्दा, उत्तरार्धे तु स्तुतिः ।

क्वचिदनुभयरूपा यथा—

1. N. तत्प्रतीतिस्तु 2. I. कशेरुस्थलीं, L. स्थलीं drops पल्वले.
3. I. वराही 4. I. वसुमती

इतो वसति केशवः पुरमितस्तदीयद्विषा-
मितोऽपि शरणागताः[1] शिखरिपक्षिणः[2] शेरते ।
इतोऽपि वडवानलः सह समस्तसंवर्तकै-
रहो विततमूर्जितं भरसहं च सिन्धोर्वपुः ॥५६५॥
[ भ. नी. श. श्लो. ६७ ] ५

अत्र निन्दा स्तुतिर्वा विस्मयोक्तावेवास्तमयत इत्यनुभयरूपा ।

**१२१) व्यङ्ग्यस्योक्तिः पर्यायोक्तम् ॥९॥**

व्यङ्ग्यस्य प्रतीयमानस्यार्थस्याभिधानं यत्तत्पर्यायेण भङ्ग्यन्तरेण कथनं पर्यायोक्तम् । अत एव चान्योक्तेरस्य भेदः । न हि तत्र गम्यमानस्यार्थस्य भङ्ग्यन्तरेणाभिधानमपि त्वप्रस्तुतद्वारेण तस्याक्षेप १० इति । यथा—

शत्रुच्छेददृढेच्छस्य[3] मुनेरुत्पथगामिनः ।
रामस्यानेन धनुषा देशिता धर्मदेशना ॥५६६॥ [ ]

अत्र भीष्मेण भार्गवो जित इति व्यङ्ग्यस्य 'देशिता धर्मदेशना' इत्यनया भङ्ग्या भणनम् । १५

---

**व्यङ्ग्यस्येति** । योग्यतया निर्देशः ।

**अनया भङ्ग्या भणनमिति** । देशिता धर्मदेशनेति भङ्ग्यन्तररचितशब्दैरित्यर्थः । तेन यद्भङ्ग्यन्तरेणोच्यते तद्व्यङ्ग्यम् । यथा त्वेकघनरूपतात्मकप्रकारेण व्यङ्ग्यं प्रतीयते, न तथा वक्तुं शक्यते । क्रमभाविविकल्पप्रभवानां शब्दानां[4] तथाभिधानशक्तेरभावात् । यथा गवि शुक्ले चलति दृष्टे गौः २० शुक्लश्चल इति विकल्पो यदेव दृष्टमभ्यासपाटवापेक्षी तदेव विकल्पयति न तु यथादृष्टम् । अशेषविशेषावच्छिन्नस्वलक्षणाकारतयानुभवस्योत्पत्तेः । तथा—अभिन्नासंसृष्टत्वेन दृष्टं भेदसंसर्गाभ्यां विकल्पयति । निरंशस्य वस्तुनो भेदसंसर्गयोरभावात् । तौ हि विकल्पस्यैव व्यापारः । स ह्यभिन्नमपि वस्तु गौः शुक्लश्चल इत्येवं भिनत्ति । भिन्नमपि पदार्थजातमयं गौरयमपि गौरित्येवं संसृजति । २५

---

1. L °णार्भिनः 2. L. °पत्रिणः 3. L °ढे कस्य
4. A. drops शब्दानां

**१२२) विशेषविवक्षया भेदाभेदयोगायोगव्यत्ययोऽतिशयोक्तिः ॥१०॥**

प्रकृतस्यार्थस्य विशेषवर्णनेच्छया भेदस्य व्यत्ययोऽभेदाभिधानं यत्तदतिशयाभिधानादेकातिशयोक्तिः । यथा—

५ सुधाबद्धग्रासैरुपवनचकोरैरनुसृतां
किरञ् ज्योत्स्नामच्छां लवलफलपाकप्रणयिनीम् ।
उपप्राकाराग्रं प्रहिणु नयने तर्कय मनाग्
अनाकाशे कोऽयं गलितहरिणः शीतकिरणः ॥९१७॥

[ वि. शा. भं. अं. १. श्लो. ३१ ]+

१० अत्र मुखचन्द्रयोर्भेदेऽप्यभेदः । यथा वा—

अइ दिअर[1] किन्न पिच्छसि[2] आयासं किं मुहा पुलोएसि[3] ।
जायाए बाहुमूलम्मि अद्धयंदाण परिवाडिं ॥५६८॥

[ स. श. ५७१; गा. स. श. ६, ७० ]

अत्र नखार्धचन्द्राणाम् ।

१५ अभेदस्य व्यत्ययो भेदो द्वितीया । यथा—

अन्नं[4] लडहत्तणयं अण्ण चिय कावि वत्तणच्छाया ।
सामा सामण्णपयावइस्स रेह चिय न होइ ॥५६९॥

[ ]

अत्र लटभत्वादेरभिन्नस्यैव भेदेनाभिधानम् । योगस्य संबन्धस्य
२० व्यत्ययोऽसम्बन्धस्तृतीया, यथा—

---

**अभेदाभिधानमिति** । गौण्या वृत्त्येत्यर्थः ।

---

+ In the edition of Jivanananda Vidyasagara the last two lines occur first.

1. I. अयि दियर, L अइ दियर 2. I. पेच्छसि
3. I. L. पलोएसि 4. I. अण्णं

मल्लिकामालभारिण्यः सर्वाङ्गीणार्द्रचन्दनाः ।
क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः ॥५७०॥

[ का. द. प. २. श्लो. २१५ ]

अत्राभिसारिकाणां लक्षणक्रियायोगेऽपि ज्योत्स्नाबाहुल्योत्कर्षविवक्षयाऽयोग उक्तः । यथा वा—

अपाङ्गतरले दृशौ मधुरवक्रवर्णा गिरो
विलासभरमन्थरा गतिरतीव कान्तं मुखम् ।
इति स्फुरितमङ्गके मृगदृशां स्वतो लीलया
तदत्र न महोदयः कृतपदोऽपि संलक्ष्यते ॥५७१॥

अत्र महोदयस्य लक्षणेऽपि स्वाभाविकविभ्रमाणामुत्कर्षविवक्षया लक्षणस्यायोग उक्तः । एवम्—

एत्तो[1] वि ण सच्चविओ जीसे पसरंतपल्लवारुणराओ ।
मज्जणतंबेसु[2] मओ तह मयतंबेसु लोअणेसु[3] अमरिसो[4]॥५७२॥इति

अयोगस्य[5] व्यत्ययो योगश्चतुर्थी[6], यथा—

पश्चात्पर्यस्य किरणानुदीर्णं[7] चन्द्रमण्डलम् ।
प्रागेव हरिणाक्षीणामुदीर्णो रागसागरः ॥ ५७३ ॥

[ का. द. परि. २. श्लो. २९७ ]

अत्रानुद्गते चन्द्रे रागसागरवृद्धेरयोगेऽपि चन्द्रस्योद्दीपनविभावता[8]तिशयप्रतिपादनार्थं योग उक्तः । यथा वा—

---

**एवमिति** । मज्जनाताम्रयोर्लोचनयोर्मदरागे मदाताम्रयोः कोपोपरागे च लक्ष्यमाणेऽपि लक्षणायोगो दर्शनीयः ।

---

1. I. एसो 2. I. मुरातंबेसु 3. I. लोयणेसु 4. I. शमरिशो
5. L. अयोग्यस्य 6. L. योग्य 7. I. °णामुदीर्णं
8. I. विभावना°

पुराणि यस्यां सवराङ्गनानि वराङ्गनारूपपुरस्कृताङ्गयः ।
रूपं समुन्मीलितसद्विलासमस्त्रं विलासाः कुसुमायुधस्य ॥५७४॥

[ नवसा. च. स. १. ]

तथा—

५ न तज्जलं यन्न सुचारुपङ्कजं
न पङ्कजं तद्यदलीनषट्पदम् ।
न षट्पदोऽसौ कलगुञ्जितो न यो
न गुञ्जितं तन्न जहार यन्मनः ॥ ५७५ ॥

[ भट्टिका. स. २. श्लो. १९ ]

१० अत्र वराङ्गनादीनां पङ्कजादीनां च निःशेषतया पुरजलादिव्याप्तेरयोगेऽपि योग उक्तः । यथा वा—

उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम् ।
वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम् ।५७६।

[ शि. व. स. ४. श्लो. २० ]

१५ अत्र वारणेन्द्रलीलां गिरिर्वहतीत्यसंबन्धेऽपि संबन्धः । यद्वा गिरिवारणेन्द्रगतयोर्लीलयोर्भेदेऽप्यैक्यमध्यवसितमिति[1] । यथा वा—

दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् ।
रमयन्ति जगन्ति चिरं कथमिव कवयो न ते वन्द्याः ॥५७७॥

[ रु. का. ७. ६. ]

२० अत्र दिवंगतकविगुणानां रमणायोगेऽपि योग उक्तः । तथा—
हृदये चक्षुषि वाचि च तव सैवाभिनवयौवना वसति ।
वयमत्र निरवकाशा विरम कृतं पादपतनेन ॥ ५७८ ॥

[ रु. का. ७. ८. ]

1. I. drops इति

अत्रैकस्य युगपदनेकवृत्तित्वायोगेऽपि योग उक्तः । एवंविधे च सर्वत्र विषयेऽतिशयोक्तिरेव प्राणत्वेनावतिष्ठते । तां विना प्रायेणालङ्करणत्वायोगादिति न सामान्यमीलितैकावलीनिदर्शनाविशेषाद्यलङ्कारोपन्यासः श्रेयान् ।

**१२३) विवक्षितस्य निषेध इवोपमानस्याक्षेपश्चाक्षेपः ।११।** ५

विशेषविवक्षयेत्यनुवर्तते । वक्तुमिष्टस्य प्राकरणिकत्वात्प्रधानस्याशक्यवक्तव्यत्वमतिसिद्धत्वं वा विशेषं वक्तुं निषेध इव न तु निषेध एव निषेधमुखेन विशेष एव तात्पर्यादित्येक आक्षेपः । उपमानस्य च य आक्षेपस्तिरस्कारः सोऽन्यः ।

निषेधो यथा— १०

अहं त्वां[1] यदि नेक्षेय क्षणमप्युत्सुका ततः ।
इयदेवास्त्वतोऽन्येन किमुक्तेनाप्रियेण ते ॥ ५७९ ॥

अयं[2] वक्ष्यमाणमरणविषयो निषेधात्माक्षेपः ।

---

**अलङ्करणत्वायोगादिति** । तथा चाह—

(152) सैषा सर्वैव वक्रोक्तिरनयार्थो विभाव्यते । १५
यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना ॥ इति ॥

[ भामह. का. लं. परि. २. श्लो. ८५ ]

**सामान्येति** । 'मल्लिका–' इत्यादौ सामान्यम्, 'अपाङ्गतरले' इति 'एन्तोवि' इत्यनयोर्मीलितम्, 'पुराणि' इति 'न तज्जलम्' इत्यनयोरेकावली, 'उदयति' इत्यादौ निदर्शना, 'दिवमप्युपयातानाम्' इति 'हृदये चक्षुषि' इत्यनयोर्विशेषश्चालङ्कारो यथान्यैः प्रदर्शितस्तथा न दर्शनीय इति । २०

**अशक्यवक्तव्यत्वमिति** । वक्ष्यमाणविषयतामाह–

**अतिसिद्धत्वमिति** । अतिप्रसिद्धत्वम् । अनेनोक्तविषयतामाह । 'किमुक्तेनाप्रियेण ते' इति त्वदर्शनात्तास्ता अवस्था या वक्तुमपि न शक्यन्त इत्यस्यार्थस्य प्रतिपत्तये । २५

---

1. I. त्वा

2. I. वक्ष्यमाये प्ररणयो which is meaningless. It is a corruption of वक्ष्यमाणमरणविषयो

उक्तविषयोऽपि यथा—

ज्योत्स्ना मौक्तिकदाम चन्दनरसः शीतांशुकान्तद्रवः
कर्पूरं कदली मृणालवलयान्यम्भोजिनीपल्लवाः ।
अन्तर्मानसमास्त्वया प्रभवता तस्याः स्फुलिङ्गोत्कर-
५ व्यापाराय भवन्ति हन्त किमनेनोक्तेन न ब्रूमहे ॥५८०॥

उपमानाक्षेपो यथा—

तस्यास्तन्मुखमस्ति सौम्य सुभगं किं पार्वणेनेन्दुना
सौन्दर्यस्य पदं दृशौ यदि च[1] ते किं नाम नीलोत्पलैः ।
किं वा कोमलकान्तिभिः किसलयैः[2] सत्येव तत्राधरे
१० हा[3] धातुः पुनरुक्तवस्तुरचनारम्भेष्वपूर्वो ग्रहः ॥ ५८१ ॥

यथा वा—

गर्वमसंवाह्यमिमं लोचनयुगलेन वहसि किं भग्ने[+] ।
सन्तीदृशानि दिशि दिशि सरस्सु ननु नीलनलिनानि ॥५८२॥
[ रु. का. ८. ७८ ]

१५ अत्र लोचनयुगलस्योपमानीकृतस्याक्षेपः । यथा वा—

अहमेव गुरुः सुदारुणानामिति हालाहल तात मा स्म दृप्यः ।
ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन् वचनानि दुर्जनानाम् ५८३
[ ]

अत्र हालाहलस्योपमानस्याक्षेप इति न प्रतीपमलङ्कारान्तरम् ।

---

२० **किमनेनेति** । त्वदप्राप्तौ ज्योत्स्नादयः स्फुलिङ्गव्यापारहेतवस्तस्या भवन्तीत्यप्रसिद्धोऽयमर्थ इत्यस्य प्रतिपादनाय ।

---

1. I. °शौ च यदि ते 2. I. L किशलयैः 3. P. I ही

+ भद्रे in Rudrata's Kāvayālamkāra, which seems to be the correct reading.

## १२४) अर्थानां विरोधाभासो विरोधः ॥ १२ ॥

जातिगुणक्रियाद्रव्यरूपाणां पदार्थानां सजातीयेन विजातीयेन वा वस्तुवृत्त्याऽविरोधेऽपि परस्परप्रतिबन्धलक्षणो व्याघातलक्षणो वा यो[1] विरोधस्तद्वदाभासमानो विरोधः । तत्र जातेर्जात्या यथा—

एकस्यामेव तनौ बिभर्ति युगपन्नरत्वसिंहत्वे । ५
मनुजत्ववराहत्वे तथैव यो विभुरसौ जयति ॥५८४॥
[ रु. का. ९. ३७ ]

गुणेन यथा—

द्रोणाश्वत्थामरामेषु[2] श्रुत्वा श्रुत्वा द्वयं स्थितम् ।
ब्राह्मण्यमथ शौर्यं[3] च को न चित्रीयते पुमान् ॥५८५॥ १०
[ ]

क्रियया यथा—'सिंहोऽपि परिभूयते' ।

द्रव्येण यथा—

सृजति च जगदिदमवति च संहरति च हेलयैव यो नियतम् ।
अवसरवशतः शफरो जनार्दनः सोऽपि चित्रमिदम् ॥५८६॥ १५
[ ]

गुणस्य गुणेन यथा—

सत्यं त्वमेव सरलो जगति जराजनितकुब्जभासो[4]ऽपि ।
ब्रह्मन् परमसि विमलो विततध्वरधूममलिनोऽपि ॥५८७॥
[ रु. का. ९–३९ ] २०

---

**व्याघात इति** । एकतरप्रतिबन्धरूपः ।

**तद्वदाभासमान इति** । अयं भावः–विशेषविवक्षयैत्यत्राप्यनुवर्तमानत्वात्, यत्र भावान्तरेभ्यो वैशिष्ट्यं ख्यापयितुमामुखे विरोधप्रतीतिकारि न तु विरोधपर्यवसायि वचस्तत्रायं विरोधालङ्कारः, यत्र पुनः परिहारासंभवस्तत्र व्याहतत्वदोष इति । २५

**सत्यं त्वमेवेति** । अत्र सरलविमलशब्दयोरेकार्थत्वात्, श्लिष्टता न समस्तीति संकराशङ्का न कार्या । चेतसो हि सरलत्वाद्विमलत्वाच्च सोऽपि सरलविमलः ।

---

1. I. वायो 2. I. °यमेशु 3. I. सु 4. N °भावो

क्रियया यथा—

पेशलमपि खलवचनं दहतितरां मानसं सतत्त्वविदाम् ।

परुषमपि सुजनवाक्यं मलयजरसवत् प्रमोदयति ॥५८८॥

[ ]

५ द्रव्येण यथा—

क्रौञ्चाद्रिरुद्दामदृषद्दृढोऽसौ यन्मार्गणानर्गलशातपाते ।

अभूनवाम्भोजदलाभिजातः स भार्गवः सत्यमपूर्वसर्गः ॥५८९॥

क्रियायाः क्रियया यथा—

बालमृगलोचनायाश्चरितमिदं चित्रमत्र यदसौ माम् ।

१० जडयति सन्तापयति च दूरे हृदये च मे वसति ॥५९०॥

[ रुद्रट. ९. ३६ ]

द्रव्येण यथा—

सीतां ददाह नैवाग्निर्हिमं दहति भूरुहः ।

ताप्यन्ते शशिना चित्रं विरहे कामिनो भृशम् ॥५९१॥

१५ [ ]

द्रव्यस्य द्रव्येण यथा—

समदमतङ्गजमदजलनिःस्यन्द[1]तरङ्गिणीपरिष्वङ्गात् ।

क्षितितिलक त्वयि तट[2]जुषि शंकरजटापगापि कालिन्दी ॥५९२॥

[ ]

२० एवं दश भेदाः । एषु परस्परप्रतिबन्धो विरोधः ।

व्याघातो यथा—

अप्यसज्जनसांगत्ये न वसत्येव वैकृतम् ।

अक्षालितविशुद्धेषु हृदयेषु मनीषिणाम् ॥५९३॥ [ ]

अत्र क्षालनाभावे विशुद्धिर्व्याहन्यते । यथा वा—

1. I. निःसङ्ग 2. I. तट°

महर्धिनि कुले जन्म रूपं स्मरसुहृद्वयः ।
तथापि न सुखप्राप्तिः कस्य चित्रीयते न धीः ॥५९४॥
[ ]

तथा—
स एकस्त्रीणि जयति जगन्ति कुसुमायुधः । ५
हरतापि तनुं यस्य शंभुना न हृतं बलम् ॥५९५॥ [ ]

तथा—
कर्पूर इव दग्धोऽपि शक्तिमान् यो जने जने ।
नमोऽस्त्ववार्यवीर्याय तस्मै कुसुमधन्वने ॥५९६॥
[ बा. रा. अं. ३. श्लो. ११ ] १०

एषु कारणसामग्र्ये फलाभावो व्याहन्यते । यथा वा—
सा बाला वयमप्रगल्भमनसः सा स्त्री वयं कातराः
सा पीनं परिणाहिनं स्तनभरं धत्ते सखेदा वयम् ।
साक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं
दोषैरन्यजनाश्रितैरपटवो जाताः स्म इत्यद्भुतम् ॥५९७॥ १५
[ अ. श. श्लो. ३४ ]

अत्रान्यदेशस्थेन[1] कारणेनान्यदेशस्थकार्योत्पादो व्याहन्यते ।

यथा वा—
दिशामलीकालकभङ्गतां गतस्त्रयीवधूकर्णतमालपल्लवः ।
चकार यस्याध्वरधूमसंचयो मलीमसः शुक्लतरं निजं यशः ।५९८। २०
[ कादम्बरी श्लो. १८. ]

अत्र मलीमसेन शुक्लतरीकरणं व्याहन्यते । तथा—
आनन्दममन्दमिमं कुवलयदललोचने ददासि त्वम् ।
विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे ॥५९९॥
[ रु. का. ९–४७. ] २५

अत्रानन्ददानं शरीरतापेन व्याहन्यते ।

1. I. °स्थितेन

शिरीषादपि मृद्वङ्गी क्वेयमायतलोचना[1] ।
अयं क्व च कुकूलाग्निकर्कशो मदनानलः ॥६००॥
[ नवसा. च. स. १६. श्लो. १८ ]

अत्र मार्दवं कार्कश्येन व्याहन्यते । तथा—

५ विपुलेन सागरशयस्य कुक्षिणा भुवनानि यस्य पपिरे युगक्षये ।
मदविभ्रमासकलया पपे पुनः स पुरस्त्रियैकतमयैकया दृशा ॥६०१॥
[ शि. व. स. १३. श्लो. ४० ]

अत्र हीनेन गुरुकार्यकरणं व्याहन्यते । तथा—

किं ददातु किमश्नातु भर्तव्यभरणाकुलः ।
१० उदारमतिरास्तेऽपि जगत्त्रितयमात्रके ॥६०२॥ [ ]

अत्राधिकेन स्वल्पकार्याकरणं व्याहन्यते । यथा वा—

अहो विशालं भूपाल भुवनत्रितयोदरम् ।
माति मातुमशक्योऽपि यशोराशिर्यदत्र ते ॥६०३॥
[ का. द. परि. २. श्लो. २१९ ]

१५ अत्र मानाशक्यत्वेन मानं व्याहन्यते । तथा—

भवत्संभावनोत्थाय परितोषाय मूर्च्छते ।
अपि व्याप्तदिगन्तानि नाङ्गानि प्रभवन्ति मे ॥६०४॥
[ कु. सं. स. ६. श्लो. ५९ ]

अत्राङ्गानामतिविपुलतया परितोषामानं व्याहन्यते । यथा वा—

२० दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः
विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः ॥६०५॥
[ वि. शा. भ. अं. १. श्लो. २ ]

अत्र दृशैव दाहो जीवनं च व्याहन्यते । यथा वा—

---

1. I. केयमा°

धवलोसि जइ वि सुंदर तहवि तए मज्झ रंजिअं हिअयं ।
रायभरिए वि हिअए सुहय निहित्तो न रत्तोसि ॥६०६॥
[ स. श. ६६७; गा. स श. ७. ६५ ]

अत्र धवलेन रञ्जनं रागभृतहृदयेनारञ्जनं च व्याहन्यते । एवं च विभावनाविशेषोक्त्यसंगतिविषमाधिकव्याघातातद्गुणाः पृथगलङ्कारत्वेन न वाच्याः । विरोध एवान्तर्भावात् । उक्तवैचित्र्यमात्राद्भेदे च लक्षणकरणेऽलङ्कारानन्त्यप्रसङ्गः । ५

**१२५) सहार्थबलाद्धर्मस्यान्वयः सहोक्तिः ॥१३॥**

धर्मस्य क्रियागुणलक्षणस्य सहार्थसामर्थ्याद्योऽन्वयः प्रतिपाद्यतेऽर्थादनेकेषु वस्तुषु सा सहभावस्योक्तिः सहोक्तिः[1] । यथा— १०

रघुर्भृशं वक्षसि तेन ताडितः पपात भूमौ सह सैनिकाश्रुभिः ।
निमेषमात्रादवधूय च व्यथां सहोत्थितः सैनिकहर्षनिःस्वनैः ॥६०७
[ र. वं. स. ३ श्लो. ६१ ]

---

**विभावनेऽपि** । 'अप्यसज्जनसांगत्ये' इत्यादौ विभावना, 'महर्षिनि' इति 'स एकः' इति 'कर्पूर इव' इति च त्रिषु विशेषोक्तिः, 'सा बाला' १५ इत्यादावसङ्गतिः, 'विप्रामलीकाक्क—' इति 'आनन्दममन्दमिमम्' इति 'शिरीषादपि'[2] इति 'विपुलेन' इति 'किं ददातु' इति च पञ्चसु विषमम्, 'अहो विशालम्' इति 'भवत्संभावनोत्थाय' इति च द्वयोरधिकम्, 'दृशा दग्धम्' इति व्याघातः, 'धवलोऽसि' इत्यत्रातद्गुणश्चेति पृथगलङ्कारा न वाच्या इति ।

**रघुर्भृशमिति** । अत्र रघुगता पतनक्रिया शाब्दी । अश्रुगता तु सहार्थसामर्थ्यादवसीयते । एवं गुणोदाहरणेऽप्यभ्यूह्यम् । अत्र चाभिधाव्यापाराद् धर्मा नोभयान्वयिनः प्रतीयन्ते, प्राकरणिकत्वाप्राकारणिकत्वाभ्यां चोपमानोपमेयभावः, तेनास्याः सहोक्तेर्नोपमादावन्तर्भावः । तथा ह्युपमायामुभयोरुपमानोपमेय- २०

---

1. I. drops सहोक्तिः, N. drops सहभावस्योक्तिः

2 In A. B. C. N. 'शिरीषादपि' precedes 'आनन्दममन्दमिमम्' I have changed the order to suit the order of verses in the original.

सह दीर्घा मम श्वासैरिमाः संप्रति रात्रयः ।
पाण्डुराश्च ममैवाङ्गैः सार्धं ताश्चन्द्रभूषणाः ॥६०८॥
[ का. द. परि ३. श्लो. ३५२ ]

**१२६) श्लिष्टविशेषणैरुपमानधीः समासोक्तिः ॥१४॥**

५ श्लेषवद्भिरुपमेयविशेषणैर्योपमानस्य प्रतीतिः सा समासेन संक्षेपेणार्थद्वयकथनात् समासोक्तिः । यथा[1]—

उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् ।
यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद्गलितं न लक्षितम् ।६०९।
[ ध्व. उ. १. पृ. ३९ (पाणिनेः) ]

---

१० योरनुयायित्वं धर्माणामिववत्याद्यभिधाव्यापारात्प्रतीयते, इह तु तादृशोऽभिधाव्यापारो नोपलभ्यत तेनात्रोपम्मात्वाभावः । कश्चित्तु—

(153) समासोक्तिः सहोक्तिश्च नालङ्कारतया मता ।
अलङ्कारान्तरत्वेन शोभाशून्यतया तथा ॥ [ ]

इति सहोक्तिरलङ्कारो न भवतीति प्रतिपादयति । तत्र शोभाशून्यत्वं

१५ अहृद्यत्वं[2], तत्र चोपमादयोऽप्यलङ्कारा न भवन्तीति सर्वसम्मतमेव । अहृद्यत्वे च 'शिष्येण सहोपाध्यायः पठति,' 'पुत्रेण सह पिता तिष्ठति'इत्यादौ सहोक्तिर्मा भवतु ।

सह दिअसनिसाहिं दीहरा सासदण्डा सह मणिवलएहिं वाहधारा गलन्ति ।
तुह सुहअ विओए तीए उव्वेविरिए, सह य तणुलदाए दुब्बला जीविदासा ।५४८।
[ क. मं. जवनिका. २. श्लो. ९ ]

२० इत्यादौ तु हृद्यत्वे किमिति नेष्यते । अथ तत्र परस्परसाम्यसमन्वयो मनोहारितानिबन्धनमिति प्रतीयमानोपमास्वरूपं नातिवर्तत इत्युपमैवेष्यते । हन्त तर्हि रूपकापह्नुत्यप्रस्तुतप्रशंसादयोऽपि पृथङ् न वक्तव्याः । तत्राप्युपमानोपमेयभावप्रतीतेरुपमैवैकालङ्कारो वाच्यो नालङ्कारान्तरम् । यदाह **वामनः**—
(154) 'प्रतिवस्तुप्रभृतिरुपमाप्रपञ्चः' इति । [ काव्यालंकार सू. अधि. ४.
२५ अ. ३. सू. १. ]

अथ रूपकादिषु तत्त्वारोपादिलक्षणं विशेषमङ्गीकृत्य रूपकादिव्यवहारः प्रवर्त्यते, तर्हि सहोक्त्यादावपि सहार्थसामर्थ्यावसितसाम्यसमन्वयलक्षणो विशेषः समस्तीति सहोक्त्यादिभिः किमपराद्धमित्यलं बहुना ।

**उपोढरागेणेति** । उपोढो धृतो रागः सान्ध्योऽरुणिमा, प्रेम च येन ।

---

1. I. drops यथा 2. C. drops अहृद्यत्वं

अत्र निशाशशिनोरुपमेययोरुपोढरागादिश्लिष्टविशेषणबलान्नायकयोरुपमानयोः प्रतीतिः ।

१२७) स्वभावाख्यानं जातिः ॥१५॥

अर्थस्य तादवस्थ्यं स्वभावः । स च संस्थानस्थानकव्यापारादिस्तस्य वर्णनं जातिः । ५

---

विलोलास्तारका ज्योतींषि, नेत्रविभागाश्च यत्र । तथेति झटित्येव, प्रेमरभसेन चागृहीतमाभासितम्, परिचुम्बितुमाकान्तं[1] च । निशाया मुखं प्रारम्भः, वदनकोकनदं च । यथेति । झटितिग्रहणेन, प्रेमरभसेन च । तिमिरं च अंशुकाश्च सूक्ष्मा अंशवस्तिमिरांशुकं रश्मिशबलीकृतं तमःपटलम्, तिमिरं वांशुकं नीलजालिका नवोढा प्रौढवधूचिता । न तु तिमिरमेवांशुकमिति व्याख्येयम् । एक- १० विषयरूपकत्वापत्तेः । रागाद्रक्तत्वात्सन्ध्याकृतात्[2], तदनन्तरं प्रेमरूपाच्च हेतोः । पुरोऽपि पूर्वस्यां दिशि, अग्रे च । गलितं प्रशान्तं, पतितं च । तया रात्र्या करणभूतया। समस्तं मिश्रितमुपलक्षणत्वेन वा । न लक्षितं रात्रिप्रारम्भोऽसौ इति न ज्ञातम् । तिमिरशबलितांशुदर्शने हि रात्रिमुखमिति लोकेन लक्ष्यते, न तु स्फुट आलोके । नायिकापक्षे तु तयेति कर्तृपदं रात्रिपक्षेऽपिशब्दो १५ लक्षितमित्यस्यानन्तरम् । अत्र च नायकेन पश्चाद्गतेन चुम्बनोपक्रमे पुरो नीलांशुकस्य गलनं पतनम् । यदि वा पुरोऽग्रे तथागृहीतं नायकेन मुखमिति संबन्धः । एतस्याश्च समासोक्तेर्न श्लेषमन्तरेण विविक्तविषयतोपलभ्यत इति श्लेषेण सह संकराशङ्का न[3] कार्या । येषां ह्यलङ्काराणां विविक्तविषयतयाप्यात्मलाभः संभवति तेषामेव परस्परसंकीर्यमाणतायां संकरता युक्ता । यथा विरोध- २० व्यतिरेकयोः श्लेषस्य च । श्लेषाभावेऽपि हि 'एकस्यामेव तनौ—' इत्यादौ विरोधो, 'यस्यावर्जयतो नित्यम्' इत्यादौ व्यतिरेकश्च दृश्यते । विरोधव्यतिरेकाभावे च 'असावुदयमारूढः' इत्यादौ श्लेषश्चेति । भवतु विरोधश्लेषयोः श्लेषव्यतिरेकयोश्च संकरत्वम् । समासोक्तिस्तु समानविशेषणाभिधायिभिः श्लेषपदैरेवात्मानं प्रतिलभत इति नास्या विविक्तो विषय उपलभ्यते । श्लेषाप- २५ वादेनैवास्याः प्रवृत्तेरिति ।

**नायकयोरिति** । नायकश्च नायिका चेत्येकशेषः ।

**तादवस्थ्यमिति** । सानुभवैकगोचरा अवस्था यस्य स तस्य

---

1. C. परिचुम्बित्त° 2. A. B. drop °कृतादनन्तरं C. कृनंतरं The reading of N. adopted in the text. 3. A. drops न

तत्र संस्थानं यथा—

पर्याणस्खलितस्फिजः करतलोत्क्षिप्तोत्तरीयाञ्चला
वल्गद्भिस्तुरगैर्गता विधुरतामज्ञातवल्गाग्रहाः ।
नेपथ्यैः कथयन्ति भूपतनया दुःश्लिष्टसंपादितै-
र्निर्लक्ष्यार्पितचक्षुषः परिचयोपात्तां श्रियं श्रोत्रियाः ॥६१०॥ ५
[ ]

स्थानकं यथा—

स दक्षिणापाङ्गनिविष्टमुष्टिं नतांसमाकुञ्चितसव्यपादम् ।
ददर्श चक्रीकृतचारुचापं, प्रहर्तुमभ्युद्यतमात्मयोनिम् ॥६११॥
[ कु. सं. स. ३ श्लो. ७० ] १०

---

भावस्तादवस्थ्यमिति । अयमर्थः–कविप्रतिभया निर्विकल्पकप्रत्यक्षकल्पया विषयीकृता वस्तुस्वभावा यत्रोपवर्ण्यन्ते स जातेर्विषयः । एवं च—

(155) अलङ्कारकृतां येषां स्वभावोक्तिरलङ्कृतिः ।
अलङ्कार्यतया तेषां किमन्यदवशिष्यते ॥ [ ]

इति यत्कैश्चित्प्रत्यपादि तन्निरस्तमेव । वस्तुनो हि सामान्यस्वभावो लौकिकोऽर्थोऽलङ्कार्यः । कविप्रतिभासंरम्भविशेषविषयस्तु लोकोत्तरोऽर्थालङ्करणमिति । १५
तथा चाह—

(156) उच्यते वस्तुनस्तावद्द्वैरूप्यमिह विद्यते ।
तत्रैकमन्यसामान्यं यद्विकल्पैकगोचरः ॥ [ ]

(157) स एव सर्वशब्दानां विषयः परिकीर्तितः । २०
अत एवाभिधीयन्ते ध्यामलं बोधयन्त्यलम् ॥

(158) विशिष्टमस्य यद्रूपं तत्प्रत्यक्षस्य गोचरः ।
स एव सत्कविगिरां गोचरः प्रतिभाभुवाम् ॥

यतः—

(159) स्वानुगुणशब्दार्थचिन्तास्तिमितचेतसः । २५
क्षणं स्वरूपस्पर्शोत्था प्रज्ञैव प्रतिभा कवेः ॥

(160) सा हि चक्षुर्भगवतस्तृतीयमिति गीयते ।
येन साक्षात्करोत्येष भावांस्त्रैकाल्यवर्तिनः ॥

(161) अस्य स्वभावस्योक्तिर्या सालंकारतया मता ।
यतः साक्षादिवाभान्ति तत्त्वार्थाः प्रतिभार्पिताः ॥

व्यापारो यथा—

ऋजुतां नयतः स्मरामि ते शरमुत्सङ्गनिषण्णधन्वनः ।

मधुना सह सस्मिता[1]: कथा नयनोपान्तविलोकितं च तत् ।६१२।

[ कु. सं. स. ४ श्लो. २३. ]

१२८) स्तुतिनिन्दयोरन्यपरता व्याजस्तुतिः ॥१६॥ ५

स्तुतेर्निन्दापरता । निन्दायाश्च स्तुतिपरता यत्रोच्यते सा व्याजरूपा व्याजेन वा स्तुतिर्व्याजस्तुतिः । यथा—

दिनमवसितं विश्रान्ताः स्मस्त्वया मरुकूप हे

परमुपकृतं शेषं वक्तुं ह्रिया वयमक्षमाः ।

भवतु सुकृतैरध्वन्यानामशोषजलो[2] भवान् । १०

इयमपि घनच्छाया भूयात्तवोपतटं शमी ॥६१३॥ [ ]

---

यथा । ऋजुतामित्यादि ।

(162) सामान्यस्तु स्वभावो यः सोऽन्यालङ्कारगोचरः ।
श्लिष्टमर्थमलंकर्तुमन्यथा को हि शक्नुयात् ॥

(163) वस्तुमात्रानुवादस्तु पूरणैकफलो हि यः । १५
अर्थदोषः स दोषज्ञैरपुष्ट इति गीयते ॥

व्याजरूपेति । छद्मरूपा निन्दाद्वारिकेत्यर्थः ।

व्याजेनेति । परमार्थेन तु निन्दैवेत्यर्थः । यत्तु निन्दापूर्विकायां स्तुतौ केनचिदुदाहृतम्—

आसीन्नाथ पितामही तव[3] मही माता ततोऽनन्तरं २०
जाता संप्रति साम्बुराशिरशना जाया कुलोद्भूतये ।
पूर्णे वर्षशते भविष्यति पुनः सैवानवद्या स्नुषा
युक्तं नाम समग्रनीतिविदुषां किं भूपतीनां कुले ॥५५४॥ इति ।

तदस्माकं ग्राम्यं प्रतिभाति । अत्यन्तासभ्यस्मृतिहेतुत्वात् । का चानेन स्तुतिः, सहृदयगोष्ठीषु निन्दितैवेत्युपेक्ष्यैव ।

---

1 I. सम्मिता 2. I. °मशेष° २५

3. A. drops तव मही

किं वृत्तान्तैः परगृहगतैः किन्तु नाहं समर्थ-
स्तूष्णीं स्थातुं प्रकृतिमुखरो दाक्षिणात्यस्वभावः ।
गेहे गेहे विपणिषु तथा चत्वरे पानगोष्ठ्या-
मुन्मत्तेव भ्रमति भवतो वल्लभा हन्त कीर्तिः ॥६१४॥
[ सुभा. २५४४ मातङ्गदिवाकरस्य ]

५

**१२९) वाक्यस्यानेकार्थता श्लेषः ॥१७॥**

पदानामेकार्थत्वेऽपि यत्र वाक्यस्यानेकार्थता स श्लेषः । यथा–
दिशः प्रसादयन्नेष तेजोभिः प्रसृतैः सदा ।
न कस्यानन्दमसमं विदधाति विभाकरः ॥६१५॥ [ ]

१० अत्राभिधाया अनियन्त्रणाद् द्वावप्यर्कभूपौ वाच्यौ ।

**१३०) उत्कर्षापकर्षहेत्वोः साम्यस्य चोक्तावनुक्तौ चोपमेयस्याधिक्यं व्यतिरेकः ॥१८॥**

उपमेयस्य प्राकरणिकस्य यदाधिक्यमर्थादुपमानात् स व्यतिरेकः । स चोत्कर्षापकर्षहेत्वोः क्रमेण युगपद्वोपादाने त्रिविधायामुक्तौ युगपद-

---

१५ **अनेकार्थतेति** । विभां करोतीत्येकमेव हि यौगिकमर्थं प्रतिपादयन् विभाकरशब्दः साधारणार्कभूपलक्षणार्थद्वयप्रतिपादको भवतीति दिगादिशब्दा अप्येकार्थप्रतिपादका एव सन्तोऽनेकार्थाः । तथा हि–दिग्लक्षण एक एवार्थ एकत्र ककुभोऽन्यत्र तत्स्थाः प्रजाः । प्रसादनं प्रकाशनम्, हर्षाधानं च । तेजो ज्योतिः प्रतापश्च ।

२० **अभिधाया अनियन्त्रणादिति** । द्वयोरप्यर्थयोः प्राकरणिकतया विवक्षितत्वादिति भावः ।

**उपमेयस्याधिक्यमिति** । न तूपमानस्य । यत्तु–
क्षीणः क्षीणोऽपि शशी भूयो[1] भूयोऽभिवर्धते सत्यम् ।
विरम प्रसीद सुन्दरि यौवनमनिवर्ति यातं तु ॥५५५॥
[ रु. का. अ. ७. श्लो. ९० ]

२५ इत्यादावुपमानस्योपमेयादाधिक्यमिति केनचिदुक्तम्, तदयुक्तम् । यौवनगतास्थैर्यस्य ह्यत्राधिक्यं विवक्षितमिति यथोक्तमेव श्रेयः ।

---

1. A. C. drop one भूयो; Rudrata has विवर्धते

नुपादानेऽनुक्तौ[1] चैकविधायां चतुर्विधः । पुनश्च साम्यवाचकस्योक्तावनुक्तौ वाष्टभेदः । यथा–

यस्यावर्जयतो नित्यं रिपूनप्युज्ज्वलैर्गुणैः ।
लक्ष्यते नेतरस्येव गाम्भीर्यैकनिधेः स्मयः ॥६१६॥ [ ]

अत्र गाम्भीर्यैकनिधित्वमुपमेयोत्कर्षहेतुरुक्तः । ५

'तुच्छस्यान्यजनस्येव न स्मयो हन्त लक्ष्यते' ।

इत्यत्रैव एवं[2] पाठे तुच्छत्वमुपमानापकर्षहेतुर्भवति ।

असिमात्रसहायोऽयं प्रभूतारिपराभवे ।
नैवान्यतुच्छजनवत्सगर्वोऽयं धृतेर्निधिः ॥६१७॥ [ ]

अत्रोपमानोपमेयगतौ युगपदुत्कर्षापकर्षहेतू उक्तौ । १०

शीर्णपर्णाम्बुवाताशकष्टेऽपि तपसि स्थिताम् ।
समुद्वहन्ती नापूर्वं गर्वमन्यतपस्विवत् ॥६१८॥
[ उ. लं. व. र. पृ. ३७. ]

अत्रोत्कर्षापकर्षहेत्वोर्द्वयोरप्यनुक्तिः । एवं साम्योक्तौ चत्वारो भेदाः । १५

साम्यानुक्तौ यथा–

नवीनविभ्रमोद्भेदतरङ्गितगतिः सदा ।
मुखेन स्मितमुग्धेन जयत्येषा सरोरुहम् ॥६१९॥ [ ]

अत्रोपमेयोत्कर्षः । इवादिपदविरहात्तु साम्यस्यानुक्तिः । अत्रैव 'विडम्बयति वक्त्रेण निश्येव स्मितमम्बुजम्' इति पाठपरिणामे उपमानापकर्षः । २०

'आननेनाकलङ्केन जयन्तीन्दुं कलङ्कितम्' ।६२०।

अत्र युगपदुत्कर्षापकर्षौ ।

---

1. I. युगपदपादाने There are marks of dropping like this'' over पादाने. 2 I. drops एवं

अहो विडम्बयत्येषा वदनेन सरोरहम् ।६२१।

अत्रोत्कर्षापकर्षहेत्वोरनुक्तिः । साम्यं त्वाक्षेपात्सर्वत्र प्रतीयते । श्लेषव्यतिरेकस्तु सङ्करालङ्कारविषय इति तत्रैवोदाहरिष्यते ।

**१३१) विशेषस्य सामान्येन साधर्म्यवैधर्म्याभ्यां समर्थ-**
५ **नमर्थान्तरन्यासः ॥ १९ ॥**

साधर्म्येण वैधर्म्येण वा विशेषो यत्र सामान्येन समर्थ्यते सोऽर्था-न्तरस्येव न्यसनमर्थान्तरन्यासः । तत्र साधर्म्येण यथा—

---

**संकरालङ्कारविषय इति** इति । श्लेषव्यतिरेकयोरन्यत्रापि लब्धस-माकत्वादिति भावः । ततश्च तद्भेदा अत्र न प्रदर्शयितुमुचिताः ।

१० यद्यप्यनुपमचरितस्तथापि तव नाच्युतस्तुलां लभते ।
स हरिर्नाम्ना देवः स हरिर्वरस्तुरगनिवहेन ॥५५६॥

इत्यादयस्तु श्लिष्टोक्तियोग्यस्य पदस्य पृथगुपादाने ये भेदाः संभवन्ति त उक्तलक्षणेनैव संगृतहीताः, तत्र ह्येकस्य पदस्य द्विरुपादानाच्च श्लेषः । उपमानात्तूपमेयस्याधिक्यमस्तीति व्यतिरेको भवत्येव ।

१५ **अर्थान्तरस्येवेति** । यत्र हेतोर्हेतुमता सह व्याप्तिर्गूढत्वात्कथञ्चित्प्रतीयते, न तु स्पष्टमवभासते, तत्रार्थान्तरस्येवासमानजातीयस्येव वस्तुनो यन्न्य-सनमसावर्थान्तरन्यासः । तत्तु यद्यत्कृतकं तत्तदनित्यमित्येवं प्रायमित्यर्थः ।

नन्वन्योक्तिनिदर्शनाभ्यां नायं भिद्यते । तथा हि—' ऐरावणं स्पृशति '—इत्यादावन्योक्तौ विशेषेण महेन्द्रवृत्तान्तेन वाच्येन त्वय्युयुक्ते[1] न कश्चित्सुखं शेते
२० इति सामान्यं गम्यमानं समर्थ्यते । तथा ' होइ न गुणाणुराओ ' इत्यादौ निदर्शने दृष्टान्तेन दार्ष्टान्तिकं समर्थ्यते, तेनास्य लक्षणस्यातिव्याप्तिः । सत्यम् । उभयत्रापि तत्र समर्थ्यसमर्थकभावो[2]ऽवगम्यते किं तु यथार्थान्तरन्यासे न तथा तयोः । अर्थान्तरन्यासे हि समर्थ्यस्य स्वकण्ठेनोपात्तस्य समर्थनम् । अन्योक्तौ तु न तत्तथा । निदर्शने च यद्यपि स्वकण्ठेनोपादानं समर्थ्यस्य
२५ तथापि न तत्र विशेषं प्रति सामान्यस्य समर्थकभावः । अपि तु सामान्य-विशेषौ प्रति विशेषस्य । यतो दृष्टान्तस्य विशेषरूपतयैव प्रतिबिम्बभावः संगच्छत इति पृथगवस्थित एवायम् ।

---

1. A. B. युक्तेन 2. A. B. सामर्थ्यसमर्थक॰

रथस्थमालोक्य रथाङ्गपाणिं स्थाने स्थिता श्रीरिति सोऽभिदध्यौ ।
वैराणि कार्योपनिबन्धनानि निर्मत्सरा एव गुणेषु सन्तः ॥६२२॥
[ ]

वैधर्म्येण यथा—

अन्ययान्यवनितागतचित्तं चित्तनाथमभिशङ्कितवत्या ।   ५
पीतभूरिसुरयापि न मेदे निर्वृतिर्हि मनसो मदहेतुः ॥६२३॥
[ ]

## १३२) स्तुत्यै संशयोक्तिः ससन्देहः ॥२०॥

स्तुत्या अलङ्कारान्तरगर्भीकारेण प्रस्तुतवस्तुवर्णनार्थं संशयस्योक्ति-
निर्णयान्ताऽनिर्णयान्ता वा भेदकस्यानुक्तावुक्तौ वा ससन्देहः । यथा—   १०

---

**स्तुत्यै इति** । स्तुतये यत्संशयवद्वचः प्रयुज्यते तत्र ससन्देहालङ्कार-
संज्ञा । सह सन्देहेन[1] अनिश्चयेन वर्तत इति कृत्वा । त्रिधा खलु सन्देहवद्वचो
भवति । सन्देहस्य प्रतिपादकत्वेन उत्पादकत्वेन अलङ्कारान्तरच्छायां गर्भी-
कृत्यासन्देहेऽपि सन्देहस्येव जननेन चेति । संशयश्च शुद्धसंकीर्णमूढभेदात्त्रेधा ।
तत्र शुद्धः प्रतिपाद्यो यथा—   १५

वामेक्षणे स्फुरति धीः पुरुषस्य कष्टं
स्याद्वा न वेति विदधाति गतागतानि ।
नार्याः पुनः प्रमदनिर्भररूपमास्ते
तन्नास्ति यद्विनिमयादशुभं शुभं वा ॥५५७॥ [ ]

अत्र सन्देहनिष्ठत्वमेवेति शुद्धः सन्देहः ।   २०

संकीर्णो यथा—

गिरिरयममरेन्द्रेणाद्य निर्लूनपक्षः क्षतगरुदसुरेशैः किं कृतो वैनतेयः ।
अपरमिह मनो मे यः पितुः प्राणभूतः किमुत बत स एष व्याततायुर्जटायुः ॥५५८॥
[ ]

अत्र स्थाणुर्वा पुरुषो वेतिवत्पश्चात्पारमार्थिकेऽपि वस्तुनि परामर्श उदेतीति   २५
संकीर्णः सन्देहः । यथा किमेष जटायुरिति । पूर्वत्र तु कष्टस्य भविष्यत्त्वेन
भावाभावावुभावपि सन्दिग्धौ । कदाचन तृतीयस्याप्युपक्षेपणीयन्यायेन मध्य-
रूपस्य प्रादुर्भावसंभावनमित्यनयोर्विवेकः ।

---

1. A. drops संदेहवद्वचो भवति

सरोजपत्रे परिलीनषट्पदे विशालदृष्टेः स्विदमू विलोचने ।
शिरोरुहाः स्युर्नतपक्ष्मसंततेर्द्विरेफवृन्दं नु निशब्दनिश्चलम् ॥६२४॥
अगूढहासस्फुटदन्तकेसरं मुखं स्विदेतद्विकचं नु पङ्कजम् ।
इति प्रलीनां नलिनीवने सखीं विदांबभूवुः सुचिरेण योषितः॥६२५।

५ [ कि. स. ८. श्लो. ३५–३६ ]

---

मूढो यथा—

स्पन्दते दक्षिणं चक्षुः फलकाङ्क्षा न मे क्वचित् ।
न च मिथ्या मुनिवचः कथयिष्यति किं त्विदम् ॥५५९॥

अत्र न सन्देहनिष्ठता नापि विद्यमानस्य वस्तुनोंऽशेन परामर्श इति मूढः
१० सन्देहः । यथा ह्यगृहीतसंकेतस्यापूर्वपदार्थदर्शने[1] सति किमिदं स्यादिति
पदार्थानध्यवसानमित्येवंरूप इत्यर्थः । तदेवं प्रतिपाद्यः सन्देहो निदर्शितः ।

उत्पाद्यो यथा—

व्यालवन्तो दुरारोहा रत्नवन्तः फलान्विताः ।
विषमा भूभृतस्तेभ्यो भयमाशु प्रमादिनाम् ॥५६०॥ [ ]

१५ व्यालाः सर्पाः दुर्जनाश्च । दुरारोहा दुःखोत्कलनीयाः चिरकालप्रत्यासत्तिलाभाश्च । रत्नान्युपलविशेषाः, गुणवन्तश्च । भूभृतः पर्वताः, राजानश्च । इत्येतस्माद्वचसः प्रतिपत्तुः पर्वतराजविषयः सन्देह उपजायते । अलङ्कारान्तरच्छायागर्भीकारेण जन्यस्तु 'सरोजपत्रे' इत्यादिनोदाहृतः । एतेषु सन्देहवस्तु वचनेषु बहुधा प्रवृत्तेषु प्रथमस्य प्रतिपाद्यसन्देहपक्षस्य रसभावतदाभासा-
२० लङ्कारेष्वन्तर्भावः । वितर्कस्य हि व्यभिचारिणः सद्भावादवश्यं क्वचिद्रसेऽङ्गता भवत्यत एव रसादिसद्भावे नान्तरीयकत्वेन तदाभासतापि भवतीति । द्वितीयस्य तु जन्यसन्देहपक्षस्य प्रतिनियतप्रकरणाभावात्प्रकृतस्य[2] कस्यचिदभावात्कस्य स्तुतिरुत्कर्षाभिधायिकेति सन्देहो दोष एवेति दोषरूपतेति । तृतीयस्तु जन्यसन्देहाभासलक्षणः पक्षोऽस्य ससन्देहा[3]लङ्कारस्य विषयोऽवगन्तव्यः ।

२५ **सरोजपत्रे** इत्यादि । अत्र प्रकृतं विलोचनादि वक्त्रा निश्चितमेव, यदि परं रूपकालङ्कारापादनमाहात्म्यात्सन्देहस्येव शाब्देन रूपेणावगतिः । तात्पर्यपर्यालोचनावशेन तूपमादावेव विश्रान्तिः । सन्देहवर्णनभङ्ग्या तु तस्यैवालङ्कारता ।

---

1. N. °पदार्थादर्शने 2. A. Very corrupt readings of some words after this. 3. A. B. संदेहालंकार

अत्र रूपकगर्भीकारेण निर्णयान्तः संशयः । यथा वा—

अथ जयाय नु मेरुमहीभृतो रभसया नु दिगन्तदिदृक्षया ।
अभिययौ स हिमाचलमुच्छ्रितं समुदितं नु विलङ्घयितुं नभः॥६२६॥
[ कि. स. ५, श्लो. १. ]

अत्रातिशयोक्तिगर्भीकारेणानिर्णयान्तः । यथा वा— ५

अयं मार्तण्डः किं स खलु तुरगैः सप्तभिरितः
कृशानुः किं सर्वाः प्रसरति दिशो नैष[1] नियतम् ।
कृतान्तः किं साक्षान्महिषवहनोऽसाविति चिरं
समालोक्याजौ त्वां विदधति विकल्पान् प्रति भटाः ॥६२७॥

अत्र रूपकगर्भीकारेण भेदकस्योक्तौ[2] संशयः । १०

**१३३) प्रकृताप्रकृताभ्यां प्रकृतापलापोऽपह्नुतिः ॥२१॥**

---

**अथ जयायेति** । प्रतिकोट्यन्यायेन मेरुजयसंभावना ।

**रभसयेति** । त्वरितया । अन्यथा दिग्विजयेनोत्तरकालं सर्वदिगवलोकनमर्जुनस्य भविष्यत्येव । **हिमाचलमिति** । हिमाचलैकदेशमिन्द्रप्रस्थाख्यं तपोऽर्थमिति तात्पर्यम् । **समुदितमिति** । पिण्डीभूतम् । अथवा जयादिव्यापारकर्तृत्वं हिमाचलस्य व्याख्येयम् । १५

**अतिशयोक्तिगर्भीकारेणेति** । तथा हि योऽसौ पौरुषेयव्यापारतिरस्कारेण नुशब्दत्रितयावद्योत्यमानतया कोटित्रयोल्लेखेनावास्तवः संशयः प्रतिपादितः स स्वसिद्धिनिर्वाहाय तथाविधोत्कटोच्छ्रायशून्येऽपि पर्वते मेरुजयादिव्यापारत्रयसंपादनक्षमतयोच्छ्रायातिशयमाक्षिपन्नसंबन्धेऽपि संबन्धात्मिकामतिशयोक्तिमवगमयति । २०

**अयं मार्तण्डः किमिति** । अत्रोपमेयस्य तद्भावमुपमानेनोक्त्वा पश्चाद्भेदे उच्यमाने यद्यप्यामुखे रूपकावभासः पश्चाद्व्यतिरेकाकारता, तथापि नास्मिन्नलङ्कारद्वये विश्रान्तिः। अपि तु किमित्यादिशब्दोपादानात्सन्देह एव वाक्यार्थतया पर्यवस्यति । तस्य परिकरबन्धार्थं रूपकव्यतिरेकावामुखे प्रतिभासेते इति तत्संकराशङ्का न कार्या । २५

**भेदकस्योक्ताविति** । पूर्वोदाहरणद्वये तु भेदकस्यानुक्तिरित्यर्थः ।

---

1. I. वैष 2. I. भेदस्यो°

प्रकृतेन प्रकृतस्यापलाप एका अपह्नुतिः । अप्रकृतेन प्रकृतस्यापलापोऽन्या । तत्राद्या यथा–

शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लस-
द्रोमाञ्चादिविसंस्थुलाखिलविधिव्यासङ्गभङ्गाकुलः ।
५ हा शैत्यं तुहिनाचलस्य करयोरित्यूचिवान्सस्मितं
शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद्वः शिवः ॥६२८॥
[ ]

अत्र गिरिजाकरस्पर्शकारणौ पुलकवेपथू सात्त्विकरूपौ प्रकृतौ प्रकृतेनैव तुहिनाचलशैत्येनापह्नुतौ ।

१० द्वितीया यथा—

नेयं विरौति भृङ्गाली मदेन मुखरा मुहुः ।
अयमाकृष्यमाणस्य कन्दर्पधनुषो ध्वनिः ॥६२९॥
[ भामहालङ्कार परि. ३. श्लो. १२ ]

---

**अप्रकृतेन प्रकृतस्यापलापोऽन्येति** । अत्र पारमार्थिकस्यासत्यकरणमपारमार्थिकस्य सत्यतया स्थापनं स्थूलदृष्ट्या बोद्धव्यम् । तात्पर्यं तु वाक्यस्य सादृश्ये एव । तथा ह्यत्र पदार्थस्वरूपविपर्यासोऽभिधीयते । न च तत्र स्वेच्छया पुरुषाणां सामर्थ्यमस्ति तेनोन्मत्तवाक्यता, दशदाडिमादिश्लोकवदेव प्राप्नोति । यदा त्वनेन वाक्येनाभिधेययोरर्थयोरसत्यसत्यत्वयोरविवक्षया सादृश्यं[1] लक्षणात्मना व्यापारेण प्रतिपाद्यते तदास्य नोन्मत्तवाक्यता, प्रत्युत सौन्दर्यशालितया सहृदयहृदयचमत्कारिता भवति । सोऽयं वाच्यार्थापेक्षयापह्नुत्यलङ्कारो लाक्षणिकार्थपरिग्रहः । उपमेयस्यापह्नुतत्वान्न स्फुटेन रूपेणोपमानोपमेयभावश्चकास्तीति रूपकाशङ्का न कार्या ।

**व्यासङ्गो** निरोधस्त[2]स्माद्भङ्गो भयम् ।

**नेयं[3] विरौतीति** । अत्र मदमुखरमधुकरावलीविरुतं विरहिणां हृदयभेदित्वाविशेषेण कामकार्मुककेङ्कृतेन समानमध्यवसाय तदैक्याध्यारोपेण तेनैवापह्नूयत इति ।

---

1. A. B. सादृश्या 2. B. drops from धस्त to तीति
3 A. drops. नेयं

यथा वा—

विलसदमरनारीनेत्रलीलाब्जषण्डा-

न्यधिवसति सदा यः संयमाधःकृतानि ।

न तु ललितकलापे वर्तते यो मयूरे

वितरतु स कुमारो ब्रह्मचर्यश्रियं वः ॥६३०॥ [ ]    ५

यथा वा—' इदं ते केन' इति । एवमियं भङ्ग्यन्तरैरप्यूह्या ।

१३४) पर्यायविनिमयौ परिवृत्तिः ॥२२॥

एकस्यानेकत्रानेकस्य वैकत्र क्रमेण वृत्तिः पर्यायः । समेन समस्योत्कृष्टेन निकृष्टस्य निकृष्टेनोत्कृष्टस्य वा व्यतिहारो विनिमयः । तावेतौ परिवृत्तिः । यथा—    १०

जो तीएँ अहरराओ रत्तिं उव्वासिओ पिअयमेण ।

सो च्चिअ दीसइ गोसे सवत्तिनयणेसु संकंतो ॥६३१॥

[ स. श. १०६, गा. स. श. २. ६. ]

अत्रैकस्यानेकत्र वृत्तिः । रागस्य च वस्तुतो भेदेऽपि एकतयाध्यवसितत्वादेकत्वमविरुद्धम् ।    १५

' तद्गेहं नतभित्ति ' इति । अत्रानेकगृहाद्येकत्र द्विजे वर्तते ।

विनिमयः समेन समस्य । यथा—

आदाय कर्णकिसलयमियमस्मादत्र चरणमर्पयति ।

उभयोः सदृशविनिमयादन्योन्यमवञ्चितं मन्ये ॥६३२॥

[ ]    २०

---

जो तीए इति । अत्र स एवेति ताम्बूलादिजनितरागकोपनिवृत्तरागयोरभेदोपचारः । यथा वा—

नन्वाश्रयस्थितिरियं तव कालकूट केनोत्तरोत्तरविशिष्टपदोपदिष्टा ।

प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ कण्ठेऽधुना वससि वाचि पुनः खलानाम् ॥५६१॥

[ भल्लट. श. श्लो. ४ ]    २५

यो बलौ व्याप्तभूसीम्नि मखेन द्यां जिगीषति ।
अभयं स्वर्गसद्मभ्यो दत्त्वा जग्राह खर्वताम् ॥६३३॥ [ ]

अत्रोत्कृष्टेनाभयेन निकृष्टस्य खर्वत्वस्य ।

तस्य च प्रवयसो जटायुषः स्वर्गिणः किमिव शोच्यतेऽधुना ।
येन जर्जरकलेवरव्ययात्क्रीतमिन्दुकिरणोज्ज्वलं यशः ॥६३४॥
[ ]

अत्र निकृष्टेनोत्कृष्टस्य ।

**१३५) हेतोः साध्यावगमोऽनुमानम् ॥२३॥**

अन्यथानुपपत्त्यैकलक्षणाद्धेतोः साध्यस्य जिज्ञासितस्यार्थस्य प्रतीतिर्यत्र वर्ण्यते तदनुमानम्, यथा—

सानुज्ञमागमिष्यन्नूनं पतितोऽसि पादयोस्तस्याः ।
कथमन्यथा ललाटे यावकरसतिलकपङ्क्तिरियम् ॥६३५॥
[ ]

यथा वा—

निर्णेतुं शक्यमस्तीति मध्यं तव नितम्बिनि ।
अन्यथानुपपत्त्यैव पयोधरभरस्थितेः ॥६३६॥
[ का. द. परि. २. श्लो. २१८ ]

---

**खर्वतामिति** । वामनताम् ।
**स्वर्गिण इति** । यशः शेषतां गतस्येत्यर्थः ।
**अर्थस्येति** । भावरूपस्याभावरूपस्य वा । तत्र [1] भावरूपसाध्यार्थप्रतीतिः [2] **'सानुज्ञम्'**—इत्यत्र निदर्शिता । अभावरूपसाध्यार्थप्रतीतिस्तु यथा—
[3] वणवसिअ व्व [4] अच्छसि सच्चं विअ सो [5] तए ण सच्चविओ ।
ण हु होन्ति तम्मि दिट्ठे सत्थावत्थाइं अंगाइं ॥५६२॥
[ स. श. गा. ४७८. गा. स. श. ५. ७८. ]
अत्रादर्शनं साध्यते ।

---

1. अत्र भाव°　2. C. drops सानुज्ञं to °तीतिस्तु
3. N. पण्णवसि　4. C. drops अच्छ　5. C. drops तं

यथा वा—

सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया ।

हसन्नेत्रार्पिताकूतं[1] लीलापद्मं निमीलितम् ॥६३७॥ [ ]

अत्र कमलनिमीलनेन निशासमयः प्रतिपाद्यत इत्यनुमानमेवेदम् ।

**१३६) सदृशदर्शनात्स्मरणं स्मृतिः ॥२४॥** ५

पूर्वोपलब्धस्यार्थस्य तादृशदर्शनात्संस्कारोद्बोधे सति यत्स्मरणं सा स्मृतिः । यथा—

अदृश्यन्त पुरस्तेन खेलाः खञ्जनपङ्क्तय ।

अस्मर्यन्त च निःश्वस्य प्रियानयनविभ्रमाः ॥६३८॥ [ ]

**१३७) विपर्ययो भ्रान्तिः ॥२५॥** १०

सदृशदर्शनाद् विपर्ययज्ञानं भ्रान्तिः । यथा—

नीलेन्दीवरशङ्कया नयनयोर्बन्धूकबुद्ध्याधरे

पाणौ पद्मधिया मधूककुसुमभ्रान्त्या तथा गण्डयोः ।

लीयन्ते कबरीषु बान्धवकुलव्यामोहजातस्पृहा

दुर्वारा मधुपाः कियन्ति भवती स्थानानि रक्षिष्यति ॥६३९॥ १५

[ ]

न चैतद्रूपकं प्रथमा वातिशयोक्तिः । तत्र वस्तुतो भ्रमस्याभावात् ।

**१३८) क्रियाफलाभावोऽनर्थश्च विषमम् ॥२६॥**

---

**निर्णेतुं शक्यमस्तीति** । अत्र स्तनभरनितम्बयोर्मध्ये मध्यं नोपलभ्यते, स्तनभरावस्थानं च दृश्यते, तत्र येयं पयोधरभरस्थितिः सान्यथा- २० नुपपद्यमानाधारकं मध्यमनुपलभ्यमानं बोधयति । उदाहरणान्तरस्य चास्यायमभिप्रायः । यथा केनचिदर्थापत्तिलक्षणोऽलङ्कारः पृथग्लक्षितस्तथा न लक्षणीयोऽर्थापत्तिलक्षणत्वादनुमानस्येति ।

**अनुमानमेवेदमिति** । न तु सूक्ष्मम्, अनुमानान्तर्भूतत्वात्सूक्ष्मस्येति भावः । २५

---

1. I. कूलं

न केवलं क्रियाफलाभावेऽर्थात्कर्तुर्यावदनर्थश्च भवति यत्र तद्वि-
षमम् । यथा–

उत्कण्ठा परितापो रणरणको जागरस्तनोस्तनुता ।
फलमिदमहो मयाप्तं सुखाय मृगलोचनां दृष्ट्वा ॥६४०॥

५ [ रुद्रट. का. लं. अ. ७. श्लो. ५५ ]

अत्र मृगलोचनादर्शनेन केवलं सुखं न प्राप्तम्, यावत्तद्विच्छेदे उत्कण्ठादिरनर्थः प्राप्तः ।

**१३९) योग्यतया योगः समम् ॥२७॥**

उत्कृष्टं उत्कृष्टस्य निकृष्टं निकृष्टस्य योग्यमिति योग्यतया योगः
१० समम् । यथा–

धातुः शिल्पातिशयनिकषस्थानमेषा मृगाक्षी
देवो रूपेऽप्ययमनुपमे दत्तपत्रः स्मरस्य ।
जातं दैवादुचितमनयोः संगतं यत्तदस्मिन्
शृङ्गारस्योपनतमधुना राज्यमेकातपत्रम् ॥६४१॥ [ ]

१५ यथा वा—

चित्रं चित्रं बत बत महच्चित्रमेतद्विचित्रं
जातो दैवादुचितरचनासंविधाता विधाता ।
यन्निम्बानां परिणतफलस्फातिरास्वादनीया
यच्चैतस्याः कवलनकलाकोविदः काकलोकः ॥६४२॥

२० **१४०) हेतौ कार्ये चैकत्र हेतुकार्यान्तरोक्तिर्युगपद्गुणक्रियाश्च समुच्चयः ॥२८॥**

कस्यचित्कार्यस्य एकस्मिन् हेतौ साधके सति हेत्वन्तराभिधानं कार्ये चैकस्मिन् प्रस्तुते कुतश्चिन्निमित्तात् कार्यान्तराभिधानं च समुच्चयः। युगपद्गुणौ च क्रिये[1] च गुणक्रियाश्च समुच्चयः। बहुवचनं व्याप्त्यर्थम् ।
२५ हेतौ हेत्वन्तरम्, यथा–

---

**समुच्चय इति** । अत्र तुल्यकक्षतामनपेक्ष्यैव समुच्चयनं समुच्चय इति सामान्येन व्युत्पत्तिः करणीया । एवं हि 'समाधिः सुकरं कार्यं कारणान्तर-

---

1 गुणक्रिये

दुर्वाराः स्मरमार्गणाः प्रियतमो दूरे मनोऽत्युत्सुकं
गाढं प्रेम नवं वयोऽतिकठिनाः प्राणाः कुलं निर्मलम् ।
स्त्रीत्वं धैर्यविरोधि मन्मथसुहृत्कालः कृतान्तोऽक्षमी
नो सख्यश्चतुराः कथं नु विरहः सोढव्य इत्थं मया ॥५४३॥
[ सुभा. ११५६. भट्टशङ्कुकस्य ] ५

योगतः' इत्येवं लक्षणलक्षितः समाधिरपि समुच्चय एवान्तर्भवति । अन्यथा 'मानमस्या निराकर्तुम्' इत्युदाहरिष्यमाणे तुल्यकक्षत्वाभावान्न समुच्चयः स्यादिति । एष एव च समुच्चयः सद्योगेऽसद्योगे च पर्यवस्यतीति न पृथग्लक्ष्यते । तथा हि—

कुलममलिनं भद्रा मूर्तिर्मतिः श्रुतशालिनी १०
भुजबलमलं स्फीता लक्ष्मीः प्रभुत्वमखण्डितम् ।
प्रकृतिसुभगा ह्येते भावा अमीभिरयं जनो
व्रजति सुतरां दर्पं राजंस्त एव तवाङ्कुशाः ॥५६३॥ [ ]

अत्र सतां योगः । 'दुर्वाराः' इत्यादौ त्वसतां योगः । नववयप्रभृतेर्हि सत्यपि शोभनत्वे सर्वेषामप्यशोभनत्वकथनम्, अशोभनत्वेनैव[1] विरहिण्या भावितत्वात् । १५

शशी दिवसधूसरो गलितयौवना कामिनी सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ।
प्रभुर्धनपरायणः सततदुर्गतः सज्जनो नृपाङ्गणगतःखलो मनसि सप्त शल्यानि मे।५६४।
[ भ. नी श. श्लो. ४५. ]

अत्र शशिनि धूसरे शल्ये शल्यान्तराणीति शोभनाशोभनयोगः । तथा हि—शशिनः शोभनत्वं प्रकृतिसौन्दर्यात्, अशोभनत्वं च धूसरत्वोत्पादात् । एवं चास्य सदसद्रूपस्य तादृशेनैवापरेण योगादिह सदसद्योगः । २०

गुणक्रियाश्चेत्यत्र च यथा रुद्रटेन (164) 'व्यधिकरणे वा यस्मिन्' [ रु. का. लं. अ. ७ सू. २२–२७. ] इत्यादिना व्यधिकरणे इत्येकस्मिन् देश इति च प्रतिपादितम्, न तथा प्रतिपादनीयम् ।

'धुनोति चासिं तनुते च कीर्तिम्' ॥५६५॥ २५

इत्यादेः

कृपाणपाणिश्च भवान् रणक्षितौ[2]
ससाधुवादाश्च सुराः सुरालये ॥५६६॥

इत्यादेश्चान्यथापि दर्शनादिति ।

1. A. has च between त्वे and नैव 2. रणे

अत्र विरहासहत्वं स्मरमार्गणा एव कुर्वन्ति। तेषु सत्सु प्रियतम-दूरस्थित्याद्युपात्तम्। यथा वा–

मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः।
उपकाराय दिष्ट्येदमुदीर्णं घनगर्जितम् ॥६४४॥

५ [ का. द. परि. २. श्लो. २९९. ]

कार्ये कार्यान्तरं यथा—

स्फुरदद्भुतरूपमुत्प्रतापज्वलनं त्वां सृजतानवद्यविद्यम्।
विधिना ससृजे नवो मनोभूर्भुवि सत्यं सविता बृहस्पतिश्च ॥६४५॥

[ ]

१० अत्र त्वां सृजतेत्येकस्मिन् कार्ये प्रस्तुते मनोभवादीनां कार्यान्तराणामुपनिबन्धः[1]।

युगपद्गुणौ[2] यथा—

विदलितसकलारिकुलं तव बलमिदमभवदाशु विमलं च।
प्रखलमुखानि नराधिप मलिनानि च तानि जातानि ॥६४६॥

१५ [ रु. का. लं. अ. ७. श्लो. २८ ]

क्रिये यथा—

प्रतिग्रहीतुं प्रणयिप्रियत्वात्त्रिलोचनस्तामुपचक्रमे च।
संमोहनं नाम च पुष्पधन्वा धनुष्यमोघं समधत्त बाणम् ॥६४७॥

[ कु. सं. स. ३. श्लो. ६६ ]

२० गुणक्रिये यथा—

कलुषं च तवाहितेष्वकस्मात्सितपङ्केरुहसोदरश्रि चक्षुः।
पतितं च महीपतीन्द्र तेषां वपुषि प्रस्फुटमापदां कटाक्षैः ॥६४८॥

[ ]

1. L. °णामनुबन्धः 2 L. °द्गुणैर्यथा

**१४१) पृष्टेऽपृष्टे वा अन्यापोहपरोक्तिः परिसंख्या ॥२९॥**

पृष्टेऽपृष्टे वा सत्यन्यव्यवच्छेदपरा योक्तिः सा परिसंख्यानात्परिसंख्या । उभयत्रोपमानस्य वाच्यत्वं प्रतीयमानता चेति चत्वारोऽस्या भेदाः ।

पृष्टे यथा— ५

कोऽलङ्कारः सतां शीलं न तु काञ्चननिर्मितम् ।
किमादेयं प्रयत्नेन धर्मो न तु धनादिकम् ॥६४९॥ [ ]

का विसमा दिव्वगई किं लद्धं जं जणो गुणग्गाही ।
किं सुक्खं सुकलत्तं किं दुग्गेज्झं खलो लोओ ॥६५०॥ [ ]

अत्र 'दैवगतिरेव विषमा' इत्यादिरन्यापोहः प्रतीयते । १०

अपृष्टे यथा—

धेहि धर्मे धनधियं मा धनेषु कदाचन ।
सेवस्व सद्गुरूपज्ञां शिक्षां मा तु नितम्बिनीम् ॥६५१॥
[ ]

कौटिल्यं कचनिचये करचरणाधरदलेषु रागस्ते । १५
काठिन्यं कुचयुगले तरलत्वं नयनयोर्वसति ॥६५२॥
[ रुद्रट. का. लं. अ. ७ श्लो. ८१ ]

यथा वा—

राज्ये सारं वसुधा वसुंधरायां पुरं पुरे सौधम् ।
सौधे तल्पं तल्पे वराङ्गनानङ्गसर्वस्वम् ॥६५३॥ २०
[ रुद्रट. का. लं. अ. ७ श्लो. ९७ ]

दानं वित्तादृतं वाचः कीर्तिधर्मौ तथायुषः ।
परोपकरणं कायादसारात्सारमुद्धरेत् ॥६५४॥ [ ]

पोढमहिलाण जं सुट्ठु सिक्खिअं तं रए सुहावेइ ।

---

**राज्ये सारमिति** । अत्र सारालङ्कारः कैश्चिदुक्तः, स चान्यापोहमन्तरेण न चमत्कारकारीति परिसंख्यैव युक्तोऽलङ्कारः । २५

**दानं वित्तादिति, पोढमहिलाणे**त्यत्रापि केनचित्सारालङ्कार उक्तस्तत्रापि अन्यापोहकृतं चारुत्वमितीयमपि परिसंख्यैव युक्तेति ।

जं जं असिक्खिअं[1] नववहूण तं तं दिहिं देइ ॥६५५॥

[ ]

एषु कौटिल्यं कचनिचय एव इत्यादि, राज्ये सारं वसुधा एव इत्यादि, वित्तात्सारं दानमेवेत्यादि, प्रौढमहिलानां सुशिक्षितमेवेत्याद्य-
५ पोह्यमानस्य प्रतीयमानत्वम् । अन्यापोहाभावे प्रश्नोत्तरोक्तौ न वैचित्र्यं किञ्चिदिति नोत्तरं पृथग्लक्षितम् । उत्तरात्प्रश्नादिप्रतिपत्तिस्त्वनुमानमेव । यथा—

'वाणिअय[2] हत्थिदंता' ॥ ६५६ ॥ इति ।

अत्र विशिष्टोत्तरान्यथानुपपत्त्या प्रश्नानुमानम् ।

१० तथा—

जं भणह तं सहीओ आम करेहामि तं तहा सव्वं

जइ तरह[3] रुंभिउं मे धीरं समुहागए तम्मि ॥६९७॥

[ स. श. ८९७. ]

अत्र[4] 'भ्रुकुट्यादिभिर्मानं कुरु' इति सख्याः पूर्ववाक्यमनुमीयते।

१५ **१४२) यथोत्तरं पूर्वस्य हेतुत्वे कारणमाला ॥३०॥**

उत्तरमुत्तरं प्रति पूर्वस्य पूर्वस्य कारणत्वे कारणमाला । यथा—

---

**अनुमानमेवेति** । न तु **रुद्रटोक्तः**— (165) 'प्रश्नादप्युत्तरं यत्र' [रु. का. ल. अ. ७. ९३] इत्युत्तरालङ्कारः । एवं जं भणहेत्यत्रापि वाच्यम् ।

---

1. I. °क्खियं

२० 2. I. वाणियय° I. gives the whole line वाणियय हत्थिदंते कत्तो अम्हाण वग्घकत्तीओ त्ति । The second line as given in N. is जाव लुलियालयमुही घरम्मि परिसुक्कते सुण्हा ।

3. I. सरह 4. I. तत्र

निर्द्रव्यो ह्रियमेति ह्रीपरिगतः प्रभ्रश्यते तेजसो
निस्तेजाः परिभूयते परिभवान्निर्वेदमागच्छति ।
निर्विण्णः शुचमेति शोकविवशो बुद्ध्या परित्यज्यते
निर्बुद्धिः क्षयमेत्यहो निधनता सर्वापदामास्पदम् ॥६५८॥
[ मृ. क. अं. १. श्लो. १४ ] ५

कारणमात्रं तु न वैचित्र्यपात्रमिति न हेतुरलङ्कारान्तरम् ।

---

**कारणमात्रं त्विति** । अग्नेर्धूम इत्येवंरूपमित्यर्थः ।
नन्वीदृशस्य हेतोर्हृद्यत्वाभावादलंकारत्वं मा भवतु । यत्र तु—
वपुःप्रादुर्भावादनुमितमिदं जन्मनि पुरा
पुरारे नैवास्मि क्षणमपि भवन्तं प्रणतवान् । १०
नमन्मुक्तः संप्रत्यतनुरहमग्रेऽपि भविता
महेश क्षन्तव्यं तदिदमपराद्धद्वयमपि ॥५६७॥ [ ]
भस्मोद्धूलन भद्रमस्तु भवते रुद्राक्षमाले शुभम्
हा सोपानपरम्परां गिरिसुताकान्तालयालंकृतिम् ।
अद्याराधनरोषितेन विभुना युष्मत्सपर्यासुखा- १५
लोकोच्छेदिनि मोक्षनामनि महामोहे निधीयामहे ॥५६८॥
[ ]

इत्यादौ चापराधद्वये पूर्वापरजन्मनोरनुमानलक्षणो हेतुर्वाक्यार्थीभूतो महामोहे सुखालोकोच्छेदित्वलक्षणश्च पदार्थीभूतो हृद्यतयावसीयते तत्र कथं नालङ्कारत्वमिति । सत्यम्, अस्ति हृद्यता, परं न हेतोः, किं तर्हि, अलङ्कारा- २० न्तरस्य । तथा हि प्रथम उदाहरणेऽनुमानस्य रामणीयकम्, द्वितीये तु मोक्षस्य महामोहतया रूपणमिति रूपकस्येति हेतुर्नालङ्कारः । तन्निराकरणेन तद्रूपं काव्य- लिङ्गमपि निराकृतमेवेति । एवं च (166) 'हेतुमता सह हेतोरभिधानमभेदतो हेतुः' । [ भट्टोद्भट ] इत्येवंरूपोऽपि हेतुर्न वाच्यः ।
आयुर्घृतं नदी पुण्यं भयं चौरः सुखं प्रिया । २५
वैरं द्यूतं गुरुर्ज्ञानं श्रेयो ब्राह्मणभोजनम् ॥५६९॥ [ ]
इत्येवंरूपो ह्येष न भूषणतां कदाचिदर्हति वैचित्र्याभावात् । गौणे ह्युपचारे सादृश्यसंप्रत्ययाद्वैचित्र्यम् । यत्र तु न सादृश्यसंप्रत्ययस्तत्र नेति ।
अविरलकमलविकासः सकलालिमदश्च कोकिलानन्दः ।
रम्योऽयमेति संप्रति लोकोत्कण्ठाभरः कालः ॥५७०॥ [ ]

**१४३) स्वातन्त्र्याङ्गत्वसंशयैकपद्यैरेषामेकत्र स्थितिः संकरः ॥३१॥**

परस्परं निरपेक्षत्वं स्वातन्त्र्यम् । उपकारकत्वमङ्गत्वम् । एकस्य ग्रहेऽन्यस्य त्यागे साधकबाधकप्रमाणाभावादनिर्णयः संशयः । एक-
५ स्मिन् पदेऽर्थाच्छब्दालङ्कारयोः समावेश एकपद्यम् । एभिरेषां पूर्वोक्तानामलङ्काराणामेकत्र वाक्ये वाक्यार्थे वाऽवस्थानं संकीर्यमाणस्वरूपत्वात्संकरः । स्वातन्त्र्येण शब्दालङ्कारयोः संकरो यथा—

कुसुमसौरभलोभ[1]परिभ्रमद्भ्रमरसंभ्रमसंभृतशोभया ।
चलितया विदधे कलमेखलाकलकलोऽलकलोलदशान्यया ॥६५९॥
१० [ शि. व. स. ६. श्लो. १४ ]

अत्र यमकानुप्रासयोः । अर्थालङ्कारयोर्यथा—

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥६६०॥
[ मृ. क. अं. १. श्लो. ३४ ]

१५ अत्रोत्प्रेक्षोपमयोः ।

शब्दार्थालङ्कारयोर्यथा—

सो नत्थि एत्थ गामे जो एयं महमहन्तलायण्णम् ।
तरुणाण हिअयलूडिं परिसक्कन्तिं निवारेइ ॥६६१॥

अत्रानुप्रासरूपकयोः।

२० अङ्गत्वेन संकरो यथा—

इत्यत्र तु कालरूपतां कोमलानुप्रासमहिम्नैव समाम्नासिषुः, न तु हेत्वलङ्कारकल्पनयेति । यद्यप्यव्यभिचारितयैव विकासादीनां नैरन्तर्येण जननमिहोपचारप्रयोजनं व्यङ्ग्यम्, तदसुन्दरमपि काव्यस्य मध्यमत्वनिबन्धनं भवति ।
२५ तथाप्यलङ्कारचिन्तायाः प्रक्रान्तत्वात्तदपह्नुत्यैव हेतोरलङ्कारत्वं निराक्रियत इति ।

1. I. drops लोभ शि. व. ( N. S. ) वदनसौरभ°

कर्कन्धूफलमुच्चिनोति शबरी मुक्ताफलाकाङ्क्षया
क्रद्धोलूककदम्बकस्य पुरतः काकोऽपि हंसायते ।
कीर्त्या ते धवलीकृते त्रिभुवने क्ष्मापाल लक्ष्मीः पुनः
कृष्णं वीक्ष्य बलोयमित्युपहितव्रीडं शनैर्जल्पति ॥६६२॥

[ ] ५

अत्रातिशयोक्तिमपेक्ष्य भ्रान्तिरुद्भूता । तदाश्रयेण चातिशयोक्तिश्चमत्कारहेतुरित्येतयोरङ्गाङ्गिभावः ।

त्वं समुद्रश्च दुर्वारौ महासत्त्वौ सतेजसौ ।
इयता युवयोर्भेदः स जडात्मा पटुर्भवान् ॥६६३॥ [ ]

अत्र श्लेषो व्यतिरेकस्याङ्गम् । १०

कृष्णार्जुनानुरक्तापि दृष्टिः कर्णावलम्बिनी ।
याति विश्वसनीयत्वं कस्य ते कलभाषिणी ॥६६४॥

[ का. द. परि. २. श्लो. ३३९ ]

अत्र श्लेषो विरोधस्याङ्गम् ।

आक्षिपन्त्यरविन्दानि मुग्धे तव मुखश्रियम् । १५
कोशदण्डसमग्राणां किमेषामस्ति दुष्करम् ॥६६५॥

[ का. द. परि. २. श्लो. ३६१. ]

अत्र श्लेषोऽर्थान्तरन्यासस्याङ्गम् ।

---

**दुर्वाराविति** । दुर्वारोऽव्याहतप्रसरः, दुष्टं क्षारं वार्जलं च यस्य स दुर्वाः । सत्त्वं धैर्यम्, सत्त्वाश्च प्राणिनः । तेजः प्रभावः, वडवानलश्च । जडात्मेति, उदकस्वभावोऽपि । २०

**कृष्णार्जुनेति** । कृष्णा असिताः । अर्जुनाः शुक्लाः । अनुरक्ता लोहिताः । कर्णावलम्बिनी विपुलतया श्रोत्रसमीपसंश्रिता । विरोधे तु कृष्णो हरिः, अर्जुनः पार्थः, तत्र सानुरागा सा कर्णं राधेयं कथमालम्बत इति । अनयैव च विरोधभङ्गया ऽविश्वास्यत्वं निबद्धम् । २५

**कोशदण्डसमग्राणामिति** । कोशो भाण्डागारोऽपि । दण्डश्चतुर्थोपायोऽपि ।

संशयेन संकरो यथा—

निग्गंडदुरारोहं मा पुत्तय पाडलं समारुहसु ।
आरूढनिवडिया के इमीए न कया इह ग्गामे ॥६६६॥
[ ]

५ अत्र शठतरपोटापाटलयोरन्यतरस्याः प्राकरणिकत्वाभावान्न ज्ञायते किमियं समासोक्तिरुतान्योक्तिरिति संशयः । तथा—

नयनानन्ददायीन्दोर्बिम्बमेतत्प्रसीदति ।
अधुना विनिरुद्धाशमपि शीर्णमिदं तमः ॥६६७॥ [ ]

अत्र मुखेन सहाभेदारोपात्किमतिशयोक्तिः, किमेतदिति मुखं १० निर्दिश्येन्दुसमारोपणाद्रूपकम्[1], किं मुखनैर्मल्यप्रस्तावेऽन्योक्तिः, अथैतयोः समुच्चयविवक्षायां दीपकम्, किं प्रदोषवर्णने विशेषणसाम्यात् समासोक्तिः, किं मदनोद्दीपकः कालो वर्तत इति तात्पर्यात्पर्यायोक्तमित्येनकालङ्कारसंशयः । तथा—

शशिवदना सितसरसिजनयना सितकुन्ददशनपङ्क्तिरियम् ।
१५ गगनजलस्थलसंभवहृद्याकारा कृता विधिना ॥६६८॥ [ ]

अत्र रूपकमुपमा वेति संशयः । यत्र तु—

मोहमहाचलदलने साशनिशित[2]कोटिरेकापि ॥ ६६९ ॥

इत्यादावारोपितकुलिशकोटिरूपाया भक्तेर्मोहस्य महाचलेनोपमितमात्रस्य दलने कर्तृत्वं न हृदयावर्जकं स्यादिति रूपकस्य ।

२० ‘ज्योत्स्नेव हास्यद्युतिराननेन्दोः’ । ६७० ।

इत्यादौ मुख्यतयावगम्यमाना हसितद्युतिर्वक्त्र एवानुकूल्यं भजत इत्युपमायाः साधकं प्रमाणमस्ति ।

---

**निर्गण्डेति [ निग्गण्डेति ]**। कठिनदुरारोहाम्[3] ।

---

1. P. °समारोपणाद्रूपकं 2. I. सासुनिशितवज्रको°
3. N °दुरारोहम्

स्मरन्ति ज्योत्स्नायाः शशिमुखि चकोरास्तव दृशि ।६७१।

इत्यादौ तत्त्वारोपे स्मरणानुपपत्ते रूपकस्य ।

राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम् ॥६७२॥

इत्यादौ सदृशं प्रति प्रेयसीप्रयुक्तस्यालिङ्गनस्यासंभवादुपमायाश्च बाधकं प्रमाणमस्ति न तत्र संशयः । ५

ऐकपदेन सङ्करो यथा—

मेरूरुकेसरमुदारदिगन्तपत्र-

मामूललम्बिचलशेषशरीरनालम् ।

येनोद्धृतं कुवलयं लसता[1] सलील-

मुत्तंसकार्थमिव पातु स वो वराहः ॥६७३॥ १०

अत्रैकपदानुप्रविष्टौ रूपकानुप्रासौ । यद्यप्यनेकविषयमिदं रूपकमखिलवाक्यव्यापि तथापि प्रतिपदं रूपकसद्भावादेकपदानुप्रवेशो न विरुध्यते । इत्युक्ताः शब्दार्थालङ्काराः ॥

कः पुनरङ्गाश्रितत्वाविशेषेऽप्ययं शब्दस्यालङ्कारोऽयमर्थस्येति विशेषः । उच्यते—दोषगुणालङ्काराणां शब्दार्थोभयगतत्वव्यवस्थायामन्वयव्यतिरेकावेव निमित्तम् । निमित्तान्तरस्याभावात् । ततश्च योऽलङ्कारो यदीयौ भावाभावावनुविधत्ते स तदलङ्कारो व्यवस्थाप्यत इति । यद्यपि पुनरुक्तवदाभासार्थान्तरन्यासादयः केचिदुभयान्वयव्यतिरेकानुविधायिनोऽपि दृश्यन्ते तत्रापि शब्दस्यार्थस्य वा वैचित्र्यमुत्कटमित्युभयालङ्कारत्वमनपेक्ष्यैव शब्दालङ्कारत्वेनार्थालङ्कारत्वेन चोक्ताः । इह चापुष्टार्थत्वलक्षणदोषाभावमात्रं साभिप्रायविशेषणोक्तिरूपः परिकरो ( १५ २० )

---

**साभिप्रायविशेषणोक्तिरूप** इति । तथा च (167) विशेषणैर्यत्साकूतैरुक्तिः परिकरस्तु सः [ का. प्र. उ. १०. का. ११८ ] इति । यथा—

कर्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी

कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य दासाः । २५

---

1. I. छलता

भग्नप्रक्रमतादोषाभावमात्रं यथासंख्यं दोषाभिधानेनैव गतार्थम् । विनोक्तिस्तु तथाविधहृद्यत्वविरहात् । भाविकं तु भूतभाविपदार्थप्रत्यक्षी-

राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रं
क्वास्ते दुर्योधनोऽसौ कथयत पुरुषा[1] द्रष्टुमभ्यागतौ स्वः ॥५७१॥
[ वे. सं. अं. ५. श्लो. २६ ]

इति । अत्र हि द्यूतच्छलकर्तृत्वादीनां विशेषणानां क्रोधोद्दीपनविभावतया साभिप्रायत्वमित्यपुष्टार्थत्वदोषाभाव एवायम् ।

**यथासंख्यमिति** । तथा चाह—(168) यथासंख्यं क्रमेणैव क्रमिकाणां समन्वयः [ का. प्र. उ. १०. का. १०८ ] इति । यथा—

एकस्त्रिधा वसति चेतसि चित्रमेतद्-
देव द्विषां च विदुषां च मृगीदृशां च ।
तापं च संमदरसं च रतिं च पुष्णन्
शौर्योष्मणा च विनयेन च लीलया च ॥५७२॥ इति । [ ]

अत्र न यथासंख्यकृतं किमपि वैचित्र्यं किन्तु एकस्त्रिधा वसतीति–आमुखे विरोधप्रतीतिकृतमेवेति ।

**विनोक्तिस्त्विति** । तथा चाह—(169) विनोक्तिः सा विनान्येन यत्रान्यः सन् तथेतरः[2] [ का. प्र. उ. १०. का. ११३ ] इति । सन् शोभनः, इतरोऽशोभनः । यथा—

मृगलोचनया विना विचित्रव्यवहारप्रतिभाप्रभाप्रगल्भः ।
अमृतद्युतिसुन्दराशयोऽयं सुहृदा तेन विना नरेन्द्रसूनुः ॥५७३॥ [ ]

अरुचिर्निशया विना शशी शशिना सापि विना महत्तमः ।
उभयेन विना मनोभवस्फुरितं नैव चकास्ति कामिनोः ॥५७४॥
[ ]

इति–उदाहरणद्वयेऽपि वदन्तु सहृदयाः–यदि किमपि[3] विनोक्तिकृतं वैचित्र्यमवभासते, सहोक्तौ तु सहार्थबलात्साम्यसमन्वयप्रतीतेर्युक्तमेव वैचित्र्यमिति । किं च—शब्दमात्रयोगेनालङ्कारत्वकल्पने हा धिगादियुक्तावप्यलङ्कारत्वप्रसङ्गः प्राप्नोतीति ।

**भाविकमिति** । (170) 'भावः कवेरभिप्रायः' [ का. द. परि. २. श्लो. ३६४ ] स यत्रास्ति तद्भाविकम् ।

**भूतभाविपदार्थप्रत्यक्षीकारात्मकमिति** । प्रध्वंसाभावप्रागभावाक्रान्ता अपि भावाः स्वमहिम्ना वचःप्रसादवशाच्च यत्पुरः स्फुरन्त इव दृश्य-

1. N. न रुषा 2. N सन्न नेतरः 3. A. B. किञ्चित्

कारात्मकमभिनेयप्रबन्ध एव भवति । यद्यपि मुक्तकादावपि दृश्यते तथापि न तत्स्वदते । उदात्तं तु ऋद्धिमद्वस्तुलक्षणं अतिशयोक्तेर्जातेर्वा न भिद्यते । महापुरुषवर्णनारूपं च यदि रसपरं तदा ध्वनेर्विषयः ।

---

माना बध्यन्त इत्यर्थः । भूतभाविशब्दस्य परोक्षोपलक्षणपरत्वे परोक्षाणां पुरःस्फुरद्रूपत्वहेतुवर्णनमिति तु व्याख्याने स्वभावोक्तेर्न भिद्यते[1] । ५

**अभिनेयप्रबन्ध एवेति** । प्रवेशकविष्कम्भकादिभिस्तथैव तत्र वर्ण्यमानत्वादिति भावः ।

ननु—

आसीदञ्जनमत्रेति पश्यामि तव लोचने ।
भाविभूषणसंभारां साक्षात्कुर्वे तवाकृतिम् ॥५७५॥ [ ] १०

अत्राद्येऽर्धे भूतस्य, द्वितीये भाविनो दर्शनमिति मुक्तकविषयमपि भाविकं दृश्यते, ततः कुतो न लक्ष्यत इत्याशङ्कयाह–**यद्यपीति** ।

**ऋद्धिमद्वस्तुलक्षणमिति** । यदाह (171) उदात्तं वस्तुनः सम्पत् इति । यथा— [ का. प्र. उ. १० का. ११५ ]

मुक्ताः केलिविसूत्रहारगलिताः संमार्जनीभिर्हृताः १५
प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रि(ङ्ग्रि)लाक्षारुणाः ।
दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुकाः
यद्विद्वद्भवनेषु भोजनृपतेस्तत्त्यागलीलायितम् ॥५७६॥

न ह्यतिशयैश्वर्येऽपि मुक्तारत्नानामवकरप्रायत्वेन पुञ्जीकरणं संभवति । उक्तं च—(172) असम्बन्धे सम्बन्धात्मिकामतिशयोक्तिमवगमयति । तदाह– २० **अतिशयोक्तेरिति** । अतिशयोक्तेरलङ्कारान्न भिद्यत इत्यर्थः ।

अथ यत्र ऋद्धिमद्वस्तु संभवदेव वर्णयिष्यते तत्रोदात्तं भविष्यतीत्याशङ्कयाह स्वभावोक्ते [र्जाते] र्वेति । किं च । यदि ऋद्धिमद्वस्तुवर्णनमलङ्कारस्तदा ऋद्धिरहितवस्तुवर्णनमप्यलङ्कारः कश्चित्प्रसजतीति ।

**महापुरुषवर्णनारूपमिति** । यदाह—(173) महतां[2] चोपलक्षणम् २५ इति । यथा— [ का. प्र. उ. १०. का. ११५ ]

तदिदमरण्यं यस्मिन् दशरथवचनानुपालनव्यसनी ।
निवसन् बाहुसहायश्चकार रक्षःक्षयं रामः ॥५७७॥

---

1. A. B. नाभिद्येत 2. A. drops मह

अथ तथाविधवर्णनीयवस्तुपरं तदा गुणीभूतव्यङ्गचस्येति नालङ्कारः। रसवत्प्रेयसी ऊर्जस्विभावसमाहितानि गुणीभूतव्यङ्गचप्रकारा एव। आशीस्तु प्रियोक्तिमात्रं, भावज्ञापनेन गुणीभूतव्यङ्गचस्य वा[1] विषयः।

---

रामो हि पितृवचनमनुतिष्ठन्नयपराक्रमादिधर्मयोगादुत्साहयोगाच्च वीररस-
५ वानेवेति रसध्वनिरेवायम्। ननु–उपलक्षणमङ्गभावोऽर्थादुपलक्षणीयेऽर्थे, ततश्चो-
पलक्षणीभूतस्य रामचरितस्य वाक्यार्थीभावाभावादङ्गत्वमेव। दण्डकारण्योत्कर्ष-
प्रतिपत्तिर्हि वाक्यार्थः सैव प्रधानं ततः कथं ध्वनिविषयतेत्याशङ्कयाह–**अथेति**।

**गुणीभूतव्यङ्गचप्रकारा एवेति**। मध्यमकाव्यप्रभेदविषयत्वेन ये प्रतिपादिताः।

१० **आशीस्त्विति**। आशासनमप्राप्तप्राप्तीच्छारूपमाशीः प्रयोक्तृधर्मः। अथवा आशास्यमानो योऽसावर्थोऽर्थप्राप्त्यनर्थोपरमात्मकः स एव प्राप्तकाल-तयाभ्यनुज्ञात आशीर्विषयत्वादाशीरिति। तत्र पक्षद्वयेऽपि स्नेहाभावे लोक-व्यवहारमात्रानुसरणार्थत्वेनाशीर्यदि प्रयुज्यते तदा 'गतोऽस्तमर्कः' इत्यादिवद्वार्ता-वर्णनमात्रत्वाद्रापेतैवालङ्कारतेत्याह—

१५ **प्रियोक्तिमात्रमिति**। सहृदयानां किमप्येतदिति चमत्काराभावादि-त्यर्थः। अथ स्नेहातिशयेनोच्यते, तदा ध्वनेर्विषयः। तथा हि–कश्चित्कस्मै-चित्स्नेहनिर्भरहृदयतया आशिषं प्रयुङ्क्ते तत्र च तस्य चेतोवृत्तिविशेषः स्ने-हात्मा रतिभावविशेषरूप आशीर्द्वारेण प्रतीयत इति भावध्वनिरेवायम्। यथा–

अस्मिञ्जहीहि सुहृदि प्रणयाभ्यसूयामाश्लिष्य गाढमनुमानतमादरेण।
२० विन्ध्यं महानिव घनः समयेऽभिवर्षन्नानन्दजैर्नयनवारिभिरुक्षतु त्वाम् ॥५७८॥
[ भामहालंकार. परि. ३. श्लो. ५६ ]

कयोश्चिन्मैत्रीसंबन्धे पिशुनजनानुप्रवेशेन विच्छायीकृते सति कस्यचिन्नाय-कस्य तत्स्नेहदाढर्यसंपादनायेयमुक्तिः। अथ च सौहृदमप्यर्थप्राप्तिरूपं मैत्री-संबन्धस्य प्रवर्धमानतयोपनिबद्धम्। जहीहीति आश्लिष्येति च प्रार्थनापञ्चम्यन्तौ।
२५ उक्षत्विति प्राप्तकालतायां पञ्चमी। तेनात्राशास्यमानस्य मैत्रीसम्बन्धस्योपनि-बन्धो न त्वप्राप्तप्राप्तीच्छात्मिकाया आशिषः। तथा—

मदान्धमातङ्गविभिन्नशाला हतप्रवीराद्भुतभीतपौराः।
त्वत्तेजसा दग्धसमस्तलीला द्विषां पुरीः पश्यतु राजलोकः ॥५७९॥
[ भा. लं. परि. ३. श्लो. ५७ ]

---

1 I gives वा but has maked it with the sign of dropping.

प्रत्यनीकं च प्रतीयमानोत्प्रेक्षाप्रकार एवेति नालङ्कारान्तरतया वाच्यम् ।

इति । **आचार्यश्रीहेमचन्द्रविरचितायामलङ्कारचूडामणिसंज्ञस्वोपज्ञ-काव्यानुशासनवृत्तौ** अर्थालङ्कारवर्णनः षष्ठोऽध्यायः समाप्तः ॥

---

अत्र शत्रुनगरी[1]विनाशोपनिबद्धद्वारेणानर्थोपरमस्य दर्शितत्वादाशास्यमानार्थोपनिबन्ध एव । न त्विदं भूयादित्येवमात्मिकायाः प्रयोक्तृधर्मत्वेनावस्थिताया आशिषोऽत्रोपदर्शनम् । तथा ह्येवंविधाः शत्रुनगरी राजलोको दृश्यादिति नायमत्रार्थः संपन्नत्वादेतस्यार्थस्य, किन्तु तथाविधानां शत्रुनगरीणां दर्शनमत्र प्राप्तकालतयाभ्यनुज्ञायते । अत्रापि शत्रुविनाशलक्षणविभावद्वारेण हर्षात्मनो भावस्योपनिबन्धात्पूर्ववद्भावध्वनिरेवेति । तदाह–**भावज्ञापनेनेति** ।

**प्रत्यनीकमिति** । अनीकप्रतिनिधितुल्यत्वात्प्रत्यनीकम् । यथानीकेऽभियोज्ये तत्प्रतिनिधिभूतमपरं मूढतया केनचिदभियुज्यते तथेह प्रतियोगिनि विजेये तदीयोऽन्यो विजीयत इत्यर्थः । तथा चाह—

(174) प्रतिपक्षमशक्तेन प्रतिकर्तुं तिरस्क्रिया ।
या तदीयस्य तत्स्तुत्यै प्रत्यनीकं तदुच्यते ॥
[ का. प्र. उ. १०. का. १२९ ]

यथा—

त्वं विनिर्जितमनोभवरूपः सा च सुन्दर भवत्यनुरक्ता ।
पञ्चभिर्युगपदेव शरैस्तां ताडयत्यनुशयादथ कामः ॥५८०॥ [ ]

तां त्वय्यनुरक्तां मनोभवः शरैस्ताडयतीति वास्तवोऽर्थः । तत्र च मनोभवस्य त्वद्रूपेण विनिर्जितत्वाद्योऽसावनुशयः स कारणत्वेनोत्प्रेक्षित इत्युत्प्रेक्षा । सा च प्रतीयमाना इवादिशब्दाप्रयोगात् । जातिगतिरीतिवृत्तिच्छायामुद्रोक्तियुक्तिभणितिगुम्फनाशय्यापठितिवाक्यवाक्या+ध्येयप्रेक्ष्यगेयाभिनेयानि शब्दालङ्काराः संभवप्रत्यक्षागमोपमानार्थापत्त्यभावलक्षणाश्चार्थालङ्कारा ये **भोजराजेन** प्रतिपादिताः [ स. कं. परि. २, ३. ] ते केचिदुक्तेष्वेवान्तर्भवन्ति, केचिच्च कंचनापि चमत्कारं नावहन्ति, केचिच्च काव्यशरीरस्वभावा एवेति न सूत्रिताः ॥

॥ इति **आचार्यश्रीहेमचन्द्रविरचिते विवेके** षष्ठोऽध्यायः ॥

---

1. A B. शत्रुनारी.  + वाकोवाक्य. सं. क.

## ॥ सप्तमोऽध्यायः ॥

इह च काव्यं नायकादिप्रतिबद्धं भवतीति नायकादिलक्षण-मुच्यते । तत्र तावदुत्तममध्यमाधमभेदेन पुंसां स्त्रीणां च तिस्रः प्रकृतयो भवन्ति । तत्र केवलगुणमप्युत्तमा । स्वल्पदोषा बहुगुणा मध्यमा ।
५ दोषवत्यधमा । तत्राधमप्रकृतयो नायकयोरनुचरा विटचेटीविदूषकादयो भवन्ति । उत्तममध्यमप्रकृतियुक्तस्तु——

**१४४) समग्रगुणः कथाव्यापी नायकः ॥१॥**

समग्रगुणो नेतृत्वादिगुणयोगी वक्ष्यमाणशोभादिगुणान्वितश्च। तत्र नेतृत्वादिगुणबाहुल्यान्मध्यमप्रकृतावपि समग्रगुणता । नेतृ-
१० गुणाश्चेमे——

(17) नेता विनीतो मधुरस्त्यागी दक्षः प्रियंवदः ।
रक्तलोकः शुचिर्वाग्मी व्यूढवंशः स्थिरो युवा ॥
बुद्ध्युत्साहस्मृतिप्रज्ञाकलामानसमन्वितः ।
शूरो दृढश्च तेजस्वी शास्त्रचक्षुश्च धार्मिकः ॥

१५ [ द. रू. प्र. २. का. १-२ ]

कथा प्रबन्धस्तद्व्यापी । नयति व्याप्नोति[1]—इतिवृत्तं फलं चेति नायकः ।

तस्य सात्त्विकान् गुणानाह——

**१४५) शोभाविलास[2]ललितमाधुर्यस्थैर्यगाम्भीर्यौदार्यतेजां-**
२० **स्यष्टौ सत्त्वजास्तद्गुणाः ॥२॥**

इह[3] सत्त्वं देहविकारस्तस्माज्जाताः ।

क्रमेण लक्षयति —

**१४६) दाक्ष्यशौर्योत्साहनीचजुगुप्सोत्तमस्पर्धागमिका-शोभा ॥३॥**

---

1. P. प्राप्नोति 2. I. adds मधुर 3. I. drops इह

यतः शरीरविकाराद्दाक्ष्यादि गम्यते सा शोभेत्यर्थः । दाक्ष्यं यथा–

स्फूर्जद्वज्रसहस्रनिर्मितमिव प्रादुर्भवत्यग्रतो
रामस्य त्रिपुरान्तकृद्दिविषदां तेजोभिरिद्धं धनुः ।
शुण्डारः कलभेन यद्वदचले वत्सेन दोर्दण्डक-
स्तस्मिन्नाहित एव गर्जितगुणं कृष्टं च भग्नं च तत् ॥६७४॥   ५

[ म. च. अं. १. श्लो. ५३. ]

शौर्यं यथा—

खरेण खण्डिताशेषगात्रेण रणमूर्धनि
रामव्याजेन लोकेषु शौर्यमुत्सारितं नृणाम् ॥६७५॥ [ ]

उत्साहो यथा—   १०

मूर्ध्ना जाम्बवतोऽभिवाद्य चरणानापृच्छय सेनापती-
नाश्वास्याश्रुमुखान्मुहुः प्रियसखान् प्रेष्यान् समादिश्य च ।
आरम्भं जगृहे महेन्द्रशिखरादम्भोनिधेर्लङ्घने
रंहस्वी रघुनाथपादरजसामुच्चैः स्मरन्मारुतिः ॥६७६॥

[ ]   १५

नीचजुगुप्सा यथा—

उत्तालताडकोत्पातदर्शनेऽप्यप्रकम्पितः ।
प्रयुक्तस्तत् प्रमाथाय स्त्रैणेन विचिकित्सति ॥६७७॥

[ म. च. अं. १. श्लो. ३७ ]

उत्तमस्पर्धा यथा—   २०

एतां पश्य पुरस्तटीमिह किल क्रीडाकिरातो हरः
कोदण्डेन किरीटिना सरभसं चूडान्तरे ताडितः ।
इत्याकर्ण्य कथाद्भुतं हिमनिधावद्रौ सुभद्रापते-
र्मन्दं मन्दमकारि येन निजयोर्दोर्दण्डयोर्मण्डनम् ॥६७८॥

[ ]   २५

१४७) धीरे गतिदृष्टिसस्मितं वचो विलासः ॥४॥

यथा—

दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा
धीरोद्धता नमयतीव गतिर्धरित्रीम् ।
कौमारकेऽपि गिरिवद्गुरुतां दधानो
वीरो रसः किमयमेत्युत दर्प एव ॥६७९॥

[ उ. रा. च. अं. ६. श्लो. १९. ]

१४८) मृदुः[1] शृङ्गारचेष्टा ललितम् ॥५॥

यथा—

कश्चित्कराभ्यामुपगूढनालमालोलपत्त्राभिहतद्विरेफम्[2] ।
रजोभिरन्तःपरिवेषबन्धि लीलारविन्दं भ्रमयांचकार ॥६८०॥

[ र. वं. स. ६. श्लो. १३ ]

१४९) क्षोभेऽप्यनुल्बणत्वं माधुर्यम् ॥६॥

महत्यपि युद्धनियुद्धव्यायामादौ क्षोभहेतौ अनुल्बणत्वं[3] मधुरा चेष्टा माधुर्यम् । यथा—

कपोले जानक्याः करिकलभदन्तद्युतिमुषि
स्मरस्मेरं गण्डोड्डमरपुलकं वक्त्रकमलम् ।
मुहुः पश्यञ् शृण्वन् रजनिचरसेनाकलकलं
जटाजूटग्रन्थिं द्रढयति रघूणां परिवृढः ॥६८१॥

[ हनुमन्नाटक अं. ३. श्लो. ५० ]

१५०) विघ्नेऽप्यचलनं स्थैर्यम् ॥७॥

सत्यपि विघ्ने उद्यमादपरिभ्रंशः स्थैर्यम् ।

यथा—

यथा यथा समारम्भो दैवात्सिद्धिं न गच्छति ।
तथा तथाधिकोत्साहो धीराणां हृदि वर्धते ॥६८२॥ [ ]

---

1 I. L मृदुशृ° 2. I. °त्राभिहितद्विरेफम् 3. I. °ल्बणं

१५१) हर्षादिविकारानुपलम्भकृद्गाम्भीर्यम् ॥८॥

यस्य प्रभावाद् बहिर्हर्षक्रोधादीनां विकारा दृष्टिविकासमुखरागादयो नोपलभ्यन्ते तन्निस्तिमितदेहस्वभावं गाम्भीर्यम् । यथा—

आहूतस्याभिषेकाय विसृष्टस्य वनाय च ।
न मया लक्षितस्तस्य स्वल्पोऽप्याकारविभ्रमः ॥१८३॥ ५

[ ]

१५२) स्वपरेषु दानाभ्युपपत्तिसंभाषणान्यौदार्यम् ॥९॥

अभ्युपपत्तिः परित्राणाद्यर्थिनोऽङ्गीकरणम् । परजनविषयं दानादिचेष्टात्मकमेवौदार्यम् । स्वग्रहणं तु दृष्टान्तार्थम् । स्वेष्विव परेष्वपीत्यर्थः । १०

दानं यथा—

शिरामुखैः स्यन्दत एव रक्तमद्यापि देहे मम मांसमस्ति ।
तृप्तिं न पश्यामि तवैव तावत् किं भक्षणात्त्वं विरतो गरुत्मन्[1] ।१८४।

[ ना. अं. ५. श्लो. १५ [

अभ्युपपत्तिर्यथा— १५

एते वयममी दाराः कन्येयं कुलजीवितम् ।
ब्रूत येनात्र[2] वः कार्यमनास्था बाह्यवस्तुषु ॥१८५॥

[ कु. सं. स. ६. श्लो. ६३ ]

संभाषणं यथा—

उत्पत्तिर्जमदग्नितः स भगवान् देवः पिनाकी गुरुः २०
शौर्यं यत्तु न तद्गिरां पथि न तु व्यक्तं यतः कर्मभिः ।
त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधिः
सत्यब्रह्मतपोनिधेर्भगवतः किं वा न लोकोत्तरम् ॥१८६॥

[ म. च. अं. २. श्लो. ३६]

---

1. I. °त्मान् 2. I. केनात्र

**१५३) पराधिक्षेपाद्यसहनं तेजः ॥१०॥**

पराच्छत्रोर्न तु गुरोर्मित्रादेर्वाधिक्षेपापमानादेरसहनं तेजः । यथा–

ब्रूत नूतनकुष्माण्डफलानां के भवन्त्यमी ।
अङ्गुलीदर्शनाद्येन न जीवन्ति मनस्विनः ॥६८७॥ [ ]

५ नायकभेदानाह—

**१५४) धीरोदात्तललितशान्तोद्धतभेदात्स चतुर्धा ॥११॥**

स इति नायकः । धीरशब्दः प्रत्येकमभिसंबध्यते । तेन धीरोदात्तो धीरललितो धीरशान्तो धीरोद्धत इति । दक्षिणधृष्टानुकूलशठभेदादेकैकश्चतुर्धा । एते शृङ्गाररसाश्रयिणो भेदाः । इति षोडशभेदा १० नायकस्य ।

धीरोदात्तादीँल्लक्षयति—

**१५५) गूढगर्वः स्थिरो धीरः क्षमावानविकत्थनो महासत्त्वो दृढव्रतो धीरोदात्तः ॥१२॥**

गूढगर्वो विनयच्छन्नावलेपो ऽविकत्थनोऽनात्मश्लाघापरः । महा-
१५ सत्त्वः क्रोधाद्यनभिभूतान्तस्तत्त्वः[1] दृढव्रतोऽङ्गीकृतनिर्वाहकः, यथा रामादिः ।

**१५६) कलासक्तः सुखी शृङ्गारी मृदुर्निश्चिन्तो धीरललितः ॥१३॥**

कलासु गीताद्यास्वासक्तः । सुखी भोगप्रवणः शृङ्गारप्रधानः
२० सुकुमाराकारः । सचिवादिसंविहितयोगक्षेमत्वाच्चिन्तारहितः, यथा वत्सराजः ।

**१५७) विनयोपशमवान् धीरशान्तः ॥१४॥**

यथा **मालतीमाधवमृच्छकटिकादौ** माधवचारुदत्तादिः ।

**१५८) शूरो मत्सरी मायी विकत्थनश्छद्मवान् रौद्रोऽव-**
२५ **लिप्तो धीरोद्धतः ॥१५॥**

---

1. I. °न्तःसत्त्वः

मत्सरी असहनः । मन्त्रादिबलेनाविद्यमानवस्तुप्रकाशको मायी । छद्म वञ्चनमात्रम् । रौद्रश्चण्डः । अवलिप्तः शौर्यादिमदवान्, यथा जामदग्न्यरावणादिः ।

(18) देवा धीरोद्धता ज्ञेयाः स्युर्धीरललिता नृपाः ।
सेनापतिरमात्यश्च धीरोदात्तौ प्रकीर्तितौ ॥ ५
धीरप्रशान्ता विज्ञेया ब्राह्मणा वणिजस्तथा ।
इति चत्वार एवेह नायकाः समुदाहृताः ॥

[ ना. शा. अ. ३४. श्लो. १८–१९ (C. S. S.); अ. २४ श्लो. ४–५ ( N. S. ) ]

---

**देवा धीरोद्धता** इति । अत्र हि । १०

धीरोदात्तं जयति चरितं रामनाम्नश्च विष्णोः ॥ ५८१ ॥

इत्यादेर्दर्शनाज्जनकप्रभृतीनां रामादीनां च न धीरललितत्वमुचितमिति धीरललितत्वं राज्ञ एव वर्णनीयं नान्यस्य । सेनापत्यमात्ययोर्धीरोदात्तत्वमेव । देवानां धीरोद्धतत्वमेव । द्विजादीनां धीरप्रशान्तत्वमेवेत्येवं परं व्याख्येयम् ।

+धीरोद्धतादिशब्दाश्च यथोक्तगुणसमारोपितावस्थाभिधायिनो वत्सवृषमहोक्षादिवन्न जात्या कश्चिदवस्थितरूपो धीरोद्धतादिरस्ति । तत्त्वे हि महाकविप्रबन्धेषु विरुद्धानेकरूपाभिधानमसङ्गतमेव स्यात् । जातेरनपायित्वात् । तथा च **भवभूतिना** एक एव जामदग्न्यः 'कैलासोद्धारसार—'इत्यादिभी रामादीन् प्रति प्रथमं धीरोद्धतत्वेन, पुनः 'ब्राह्मणातिक्रमत्यागो भवतामेव भूतये' इत्यादिना रावणं प्रति धीरोदात्तत्वेन, 'पुण्या ब्राह्मणजातिः–' इत्यादिभिश्च धीरशान्तत्वेनोपवर्णितः । न चावस्थान्तराभिधानमनुचितम् । अङ्गभूतनायकानां नायकान्तरापेक्षया महासत्त्वादेरव्यवस्थितत्वात् । अङ्गिनस्तु रामादेरेकप्रबन्धोपात्तावस्थातोऽवस्थान्तरोपादानमन्याय्यम् । यथोदात्ताभिमतस्य रामस्य छद्मना वालिवधादमहासत्त्वतया स्वावस्थापरित्याग इति । वक्ष्यमाणानां च दक्षिणाद्यवस्थानां 'पूर्वा प्रत्यन्यया हृतः' इति नित्यसापेक्षत्वेनाविर्भावादुपात्तावस्थातोऽवस्थान्तराभिधानमङ्गाङ्गिनोरप्यविरुद्धमिति ।+

---

+This whole passage is taken with a few variations from the Avaloka of Dhanika on the DasarUpaka of Dhananjaya. See p. 58-59. द. रू. Guj. Press-Edition.

इत्यन्तरश्लोकौ ।

अथ नायकस्य शृङ्गारित्वेऽवस्थाभेदानाह—

**१५९) ज्येष्ठायामपि सहृदयो दक्षिणः ॥१६॥**

कनिष्ठायां रक्तो ज्येष्ठायामपि समानहृदयो दाक्षिण्यशीलत्वाद्

५ दक्षिणः । यथा—

प्रसीदत्यालोके किमपि किमपि प्रेमगुरवो
रतक्रीडाः कोऽपि प्रतिदिनमपूर्वोऽस्य विनयः ।
सविश्रम्भः कश्चित्कथयति च किञ्चित्परिजनो
न चाहं प्रत्येमि प्रियसखि किमप्यस्य विकृतम् ॥६८८॥

१० [ धनिकस्य, दशरूपकावलोक. प्र. २. सू. ७ ]

**१६०) व्यक्तापराधो धृष्टः ॥१७॥**

यथा—

लाक्षालक्ष्म ललाटपट्टमभितः केयूरमुद्रा गले
वक्त्रे कज्जलकालिमा[1] नयनयोस्ताम्बूलरागोऽपरः ।
१५ दृष्ट्वा कोपविधायि मण्डनमिदं प्रातश्चिरं प्रेयसो
लीलातामरसोदरे मृगदृशः श्वासाः समाप्तिं गताः ॥६८९॥

[ अ. श. श्लो. ९० ]

**१६१) एकभार्योऽनुकूलः ॥१८॥**

यथा—

२० इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो-[2]
रसावस्याः स्पर्शो वपुषि बहलश्चन्दनरसः ।

अन्तरश्लोकाविति । अन्तरे मध्ये वक्तव्यशेषाभिधायकौ श्लोकावन्तरश्लोकौ ।

1. P. °कालिका 2. I. °तर्वृष्टि

अयं कण्ठे बाहुः शिशिरमसृणो मौक्तिकसरः

किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ॥६९०॥

[ उ. रा. च. अं. १. श्लो. ३८ ]

१६२) गूढापराधः शठः ॥१९॥

यथा—   ५

'एकत्रासनसंगते प्रियतमे'। इति। ६९१। [अ. श. श्लो. १९(?)]

नायकविजेयं प्रतिनायकमाह—

**१६३) व्यसनी पापकृल्लुब्धः स्तब्धो धीरोद्धतः प्रतिनायकः ॥२०॥**

यथा-रामयुधिष्ठिरयो रावणदुर्योधनौ ।   १०

नायिकालक्षणमाह—

**१६४) तद्गुणा स्वपरसामान्या नायिकाऽपि त्रेधा ॥२१॥**

तद्गुणा यथोक्तसंभविनायकगुणयोगिनी नायिका। सा च स्वकीया, परकीया, सामान्या चेति त्रेधा।

स्वस्त्रीलक्षणमाह—   १५

**१६५) स्वयमूढा शीलादिमती स्वा ॥२२॥**

आदिग्रहणादार्जवलज्जागृहाचारनैपुणादिपरिग्रहः। शीलं यथा—

कुलबालिआए[1] पेच्छह जोव्वणलायन्न[2]विब्भमविलासा ।

पवसंति व्व पवसिए एन्ति व्व पिए घरमइंते ॥६९२॥

[                    ]   २०

**१६६) वयःकौशलाभ्यां मुग्धा मध्या प्रौढेति सा त्रेधा ॥२३॥**

वयः शरीरावस्थाविशेषः, कौशलं कामोपचारनैपुणम्, ताभ्यां मुग्धा। एवं मध्या प्रौढा चेति। तत्र वयसा मुग्धा यथा—

---

**वयसा मुग्धेति** । वयसाऽसम्पूर्णेत्यर्थः । एवं कौशलेनापि ।

---

1. I. L. °लियाए      2. L लायण

दोर्मूलावधिसूत्रितस्तनमुरः स्निह्यत्कटाक्षे दृशौ
किञ्चित्ताण्डवपण्डिते स्मितसुधासिक्तोक्तिषु भ्रूलते ।
चेतः कन्दलितं स्मरव्यतिकरैर्लावण्यमङ्गैर्धृतं
तन्वङ्गयास्तरुणिम्नि सर्पति शनैरन्यैव काचिद् गतिः ॥६९३॥

५ [ ]

कौशलेन यथा—

उदितोरुसादमतिवेपथुमत्सुदृशोऽभिभर्तृ विधुरं त्रपया ।
वपुरादरातिशयशंसि पुरेः प्रतिपत्तिमूढमपि बाढमभूत् ॥६९४॥
[ शि. व. स. ९. श्लो. ७७ ]

१० वयसा मध्या यथा—

तरन्तीवाङ्गानि स्खलदमललावण्यजलधौ
प्रथिम्नः प्रागल्भ्यं स्तनजघनमुन्मुद्रयति च ।
दृशोर्लीलारम्भाः स्फुटमपवदन्ते सरलता-
महो सारङ्गाक्ष्यास्तरुणिमनि गाढः परिचयः ॥६९५॥

१५ [ ]

कौशलेन यथा—

स्वेदाम्भःकणिकाचितेऽपि वदने जातेऽपि रोमोद्गमे
विस्रम्भेऽपि गुरौ पयोधरभरोत्कम्पे च वृद्धिंगते ।
दुर्वारस्मरनिर्भरेऽपि हृदये नैवाभियुक्तः प्रिय-
२० स्तन्वङ्ग्या हठकेशकर्षणघनश्लेषामृते लुब्धया ॥६९६॥
[ सुभा. श्लो. २०७९ ]

वयसा प्रगल्भा[2] यथा—

**वयसा मध्येति** । किञ्चिदसम्पूर्णेत्यर्थः ।
**वयसा प्रगल्भेति**[3] । सम्पूर्णेत्यर्थः ।

1. पुनः शि. व. N. S. 2. N. प्रौढा. 3. N. वयसा प्रौढेति

नितम्बो मन्दत्वं जनयति गुरुत्वाद् द्रुतगते-
र्महत्त्वादुद्वृत्तस्तनकलशभारः श्रमयति ।
विकासिन्या कान्त्या प्रकटयति रूपं मुखशशी
ममाङ्गानीमानि प्रसभमभिसारे हि रिपवः ॥६९७॥ [ ]

कौशलेन यथा— ५

उद्धतैर्[1]निभृतमेकमनेकैश्छेदवन्मृगदृशामविरामैः ।
श्रूयते स्म मणितं कलकाञ्चीनूपुरध्वनिभिरक्षतमेव ॥६९८॥
[ शि. व. स. १० श्लो. ७६ ]

**१६७) धीराधीराधीराऽधीराभेदादन्त्ये त्रेधा ॥२४॥**

अन्त्ये मध्याप्रौढे । त्रेधा—धीरा मध्या, धीराधीरामध्या, अधीरा मध्या । एवं प्रौढापि त्रेधा । १०

**१६८) षोढापि ज्येष्ठाकनिष्ठाभेदाद् द्वादशधा ॥२६॥**

मध्याप्रौढयोः प्रत्येकं त्रिभेदत्वात्षड्विधापि ज्येष्ठाकनिष्ठाभेदाद्द्वादशधा स्वस्त्री भवति । तत्र प्रथममूढा ज्येष्ठा पश्चादूढा कनिष्ठा ।

अथासां क्रोधचेष्टामाह— १५

**१६९) सोत्प्रासवक्रोक्त्या सबाष्पया वाक्पारुष्येण क्रोधिन्यो मध्या धीराद्याः ॥२७॥**

मध्या धीराद्यास्तिस्रोऽपि यथासंख्यं सोत्प्रासवक्रोक्त्यादिभिः क्रोधं कुर्वन्ति ।

तत्र सोत्प्रासवक्रोक्त्या मध्या धीरा, यथा— २०

न खलु वयममुष्य दानयोग्याः
पिबति च पाति च यासकौ रहस्त्वाम् ।
व्रज विटपममुं ददस्व तस्यै
भवतु यतः सदृशोश्चिराय योगः ॥६९९॥
[ शि. व. स. ७. श्लो. ५३. ] २५

1. P. L. I. उद्गतै° The reading taken in the text is that of शि. व. N. S.

सबाष्पया सोत्प्रासवक्रोक्त्या धीराधीरा, यथा—

'बाले नाथ' इति । ७०० । [ अ. श. ५७ ]

वाक्पारुष्येणाधीरा, यथा—

धिङ् मां किं समुपेत्य चुम्बसि बलान्निर्लज्ज लज्जा क्व ते
५ वस्त्रान्तं शठ मुञ्च मुञ्च शपथैः किं धूर्त निर्बाधसे ।
खिन्नाहं तव रात्रिजागरतया तामेव या च प्रियां
निर्माल्योज्झितपुष्पदामनिकरे का षट्पदानां रतिः ॥७०१॥

[ ]

**१७०) उपचारावहित्थाभ्यामानुकूल्यौदासिन्याभ्यां संत-**
**१० र्जनाघाताभ्यां प्रौढा धीराद्याः ॥२८॥**

प्रौढा धीराद्यास्तिस्रोऽपि यथासंख्यमुपचारावहित्थादिद्विकत्रयेण क्रोधिन्यो भवन्ति । तत्र धीरा प्रौढा सोपचारा, यथा—

एकत्रासनसंगतिः परिहृता प्रत्युद्गमाद् दूरत-
स्ताम्बूलानयनच्छलेन रभसाश्लेषोऽपि संविघ्नितः ।
१५ आलापोऽपि न मिश्रितः परिजनं व्यापारयन्त्यान्तिके
कान्तं प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः ॥७०२॥

[ अ. श. श्लो. १८ ]

सैव सावहित्था यथा—

वरं भ्रूभङ्गास्ते प्रकटितगुरुक्रोधविभवा
२० वरं सोपालम्भाः प्रणयमधुरा गद्गदगिरः ।
वरं मानाटोपप्रसभजनितोऽनादरविधि-
र्न गूढान्तःकोपा कठिनहृदये संवृतिरियम् ॥७०३॥

[ सुभा. श्लो. १६२३ ]

प्रौढा धीराधीरानुकूला यथा—

२५ यत्पाणिर्न निवारितो निवसनग्रन्थिं समुद्ग्रन्थयन्
भ्रूभेदो न कृतो मनागपि मुहुर्यत्खण्ड्यमानेऽधरे ।

यन्निःशङ्कमिहार्पितं वपुरहो पत्युः समालिङ्गने
मानिन्याः कथितोऽनुकूलविधिना तेनैव मन्युर्महान् ॥७०४॥

सैवोदासीना यथा—   [   ]

आयस्ता कलहं पुरेव कुरुते न श्रंसने वाससो
भग्नभ्रूरतिखण्डचमानमधरं धत्ते न केशग्रहे ।   ५
अङ्गान्यर्पयति स्वयं भवति नो वामा हठालिङ्गने
तन्व्या शिक्षित एष सम्प्रति कुतः कोपप्रकारोऽपरः ॥७०५॥
[ अ. श. श्लो. १०६ ]

प्रौढा ऽधीरा संतर्जनेन यथा—

तथाऽभूदस्माकं प्रथममविभिन्ना तनुरियं   १०
ततोऽनु त्वं प्रेयानहमपि हताशा प्रियतमा ।
इदानीं त्वं नाथो वयमपि कलत्रं किमपरं
मयाप्तं प्राणानां कुलिशकठिनानां फलमिदम् ॥७०६॥
[ अ. श. श्लो. ५३ ]

सैव साधाता यथा—   १५

'कोपात्कोमलबाहुलोल—' ॥ ७०७ ॥ इति ।

परस्त्रीलक्षणमाह—

**१७१) परोढा परस्त्री कन्या च ॥२८॥**

परेणोढा परस्य स्त्री परस्त्री । सा च नाङ्गिनि रसे उपकारिणीति नास्याः प्रपञ्चः कृतः । ऊढेत्युपलक्षणम् । अवरुद्धापि परस्त्रीत्युच्यते ।   २०

परोढा यथा—

'दृष्टिं हे प्रतिवेशिनि' । ७०८ । इति ।

कन्या तु पित्राद्यायत्तत्वादनूढापि परस्त्री । यथा—

दृष्टिः शैशवमण्डना प्रतिकलं प्रागल्भ्यमभ्यस्यते
पूर्वाकारमुरस्तथापि कुचयोः शोभां नवामीहते ।   २५
नो धत्ते गुरुतां तथाप्युपचिताभोगा नितम्बस्थली
तन्व्याः स्वीकृतमन्मथं विजयते नेत्रैकपेयं वपुः ॥७०९॥

सामान्यां लक्षयति-

**१७२) गणिका सामान्या ॥२९॥**

कलाप्रागल्भ्यधौर्त्याभ्यां गणयति कलयति गणिका। सामान्या निर्गुणस्य सगुणस्य च साधारणी। केवलधनलाभालम्बनेन कृत्रिम-
५ प्रेमत्वात्। यथा-

गाढालिङ्गित[1]पीडितस्तनतटं स्विद्यत्कपोलस्थलं
संदष्टाधरमुक्तसीत्कृतलसभ्रान्त[2]भ्रु नृत्यत्करम्।
चाटुप्रायवचो विचित्रमणितं घातै रुतैश्चाङ्कितं
वेश्यानां धृतिधाम पुष्पधनुषः प्राप्नोति धन्यो रतम् ॥७१०॥

१० [ शृं. ति. परि. १. का. ६ अनन्तरम् ]

स्वपरस्त्रीणामवस्था आह—

**१७३) स्वाधीनपतिका प्रोषितभर्तृका खण्डिता कलहान्तरिता वासकसज्जा विरहोत्कण्ठिता विप्रलब्धाभिसारिका चेति स्वस्त्रीणामष्टावस्थाः ॥३०॥**

१५ रतिगुणाकृष्टत्वेन पार्श्वस्थितत्वात्स्वाधीन आयत्तः पतिर्यस्याः सा तथा। यथा—

सालोए च्चिय सूरे घरिणी घरसामियस्स घेत्तूण।
नेच्छंतस्स[3] य चलणे धुयइ हसन्ती हसंतस्स ॥७११॥

[ स. श. १३० गा. स. श. २. ३०. ] इति।

२० कार्यतः प्रोषितो देशान्तरं गतो भर्ता यस्याः सा तथा। यथा-

श्वासा बाष्पजलं गिरः सकरुणा मार्गे च नेत्रार्पणं
केनेदं न कृतं प्रियस्य विरहे कस्यासवो निर्गताः।

---

1. I. °लिङ्गन 2. I. °लसद्भ्रान्तभ्रू° 3. I. णेच्छंतस्स

सख्येवं यदि तेन नास्मि[1] कलिता पान्थः कथं प्रोषितः
प्राणाः संप्रति मे कलङ्कमलिनास्तिष्ठन्तु वा यान्तु वा ॥७१२॥
[ ]

वनितान्तरव्यासङ्गादनागते प्रिये दुःखसंतप्ता खण्डिता । यथा—

नवनखपदमङ्गं[2] गोपयस्यंशुकेन ५
स्थगयसि मुहुरोष्ठं पाणिना दन्तदष्टम् ।
प्रतिदिशमपरस्त्रीसङ्गशंसी विसर्पन्
नवपरिमलगन्धः केन शक्यो वरीतुम् ॥७१३॥
[ शि. व. स. ११, श्लो. ३४. ]

ईर्ष्याकलहेन निष्क्रान्तभर्तृकत्वात्तत्संगमसुखेनान्तरिता कलहान्त- १०
रिता । यथा—

निःश्वासा वदनं दहन्ति हृदयं निर्मूलमुन्मथ्यते[3]
निद्रा नैति न दृश्यते प्रियमुखं नक्तं दिनं रुद्यते ।
अङ्गं शोषमुपैति पादपतितः प्रेयाँस्तथोपेक्षितः
सख्यः कं गुणमाकलय्य दयिते मानं वयं कारिताः ॥७१४॥ १५
[ अ. श. श्लो. ९२ ]

(39)+ परिपाटयां फलार्थे वा नवे प्रसव एव वा
दुःखे चैव प्रमोदे च षडेते वासकाः स्मृताः ॥

---

**परिपाट्यामिति** । परिपाटिर्यथाकल्पितानुपूर्वी । अस्या एकेन दिनेन वारः, अस्या द्वाभ्यामित्यादिः । तदपवादमाह—**फलार्थे** इति । ऋताविति यावत् । २०

**नव** इति । नवत्वे प्रसवे वृत्ते चिर[4]विरहखिन्ना सुखयितुम् । दुःखे तदीयबन्धुव्यापत्त्यादौ दुःखिता आश्वसनीयेति ।

**प्रमोद** इति । तदीयपुत्रोत्सवादौ । उत्सवो हि माननीय इत्युक्तम् ।

---

1. I. °दि नास्मि तेन 2. I. °दमङ्कं 3. I. °मुन्मूल्यते

+ In P. this verse is written on the margin which is broken in parts; so some letters cannot be made out.

4. A. B. drop चिर

उचिते वासके स्त्रीणामृतुकालेऽपि वा बुधैः।
द्वेष्याणामथवेष्टानां कर्तव्यमुपसर्पणम् ॥ [ ]

इति नयेन वासके रतिसंभोगलालसतयाङ्गरागादिना सज्जा प्रगुणा वासकसज्जा।

५ यथा—

तल्पकल्पनविधेरनन्तरं भर्तृमार्गमवलोकते मुहुः।
दर्पणे क्षणमुदीक्षते वपुर्हर्षभूषणमनिन्द्यभूषणा ॥७१५॥
[ ]

प्रियंमन्या चिरयति भर्तरि विरहोत्कण्ठिता, यथा—

१० अन्यत्र व्रजतीति का खलु कथा नाप्यस्य तादृक् सुहृद्
यो मां नेच्छति नागतश्च स हहा कोऽयं विधेः प्रक्रमः।
इत्यल्पेतरकल्पनाकवलितस्वान्ता निशान्तान्तरे
बाला वृत्तविवर्तनव्यतिकरा नाप्नोति निद्रां निशि ॥७१६॥
[ ]

१५ दूतीमुखेन स्वयं वा संकेतं कृत्वा केनापि कारणेन वञ्चिता विप्रलब्धा। यथा—

---

वासयन्ति तत्र स्थाने रात्रिमिति वासका रात्र्युचिताः कामोपचाराः। फलार्थ इत्यस्य हेतोः सर्वापवादकत्वं दर्शयितुं धर्मवृत्तिना राज्ञा परिपाट्या दुर्भगापि सेव्येति च निरूपयितुमाह—**उचिते वासके इति**। आर्तवः कालो हि भूयानपि फलतः परिमितीभवति। यथोक्तम्—

२० (175) ऋतुः षोडश तत्राद्याश्चतस्रो दशमात्पराः।
त्रयोदशी च निन्द्याः स्युरयुग्माः कन्यकोद्भवाः॥

(176) षष्ठ्यष्टमी च दशमी द्वाभ्यां वर्णैश्च साधिका।
युग्मा पुत्राय रात्रिः स्यात्' [ ] इति।

तत्रापि नक्षत्रविशेषपरिवर्जनम्। पुत्रश्च राज्ञां मुख्यं फलम्। यथाह—

२५ (177) 'प्रजायै गृहमेधिनाम्' इति ॥ [ र. वं. स. १. श्लो. ७.]

यत्संकेतगृहं प्रियेण कथितं संप्रेष्य दूतीं स्वयं
तच्छून्यं सुचिरं निषेव्य सुदृशा पश्चाच्च भग्नाशया ।
स्थानोपासनसूचनाय विगलत्सान्द्राञ्जनैरश्रुभिः
भूमावक्षरमालिकेव लिखिता दीर्घं रुदत्या[1] शनैः ॥७१७॥

अभिसरत्यभिसारयति वा कामार्ता कान्तमित्यभिसारिका । यथा— ५

उरसि निहितस्तारो हारः कृता जघने घने
कलकलवती काञ्ची पादौ रणन्मणिनूपुरौ ।
प्रियमभिसरस्येवं मुग्धे त्वमाहतडिण्डिमा
यदि किमपरं त्रासोत्क्रान्ता दिशो मुहुरीक्षसे ॥७१८॥

[ अ. श. श्लो. ३१ ] १०

तथा—

न च मेऽवगच्छति यथा लघुतां करुणां यथा स कुरुते च मयि ।
निपुणं तथैनमभिगम्य वदेरभिदूति काचिदिति संदिदिशे ॥७१९॥

[ शि. व. स. ९. श्लो. ५६ ]

अन्वर्थ एवासां लक्षणमित्याहत्य लक्षणं न कृतम् । १५

**१७४) अन्त्यत्र्यवस्था परस्त्री ॥३१॥**

परस्त्रियौ तु कन्योढे । संकेतात्पूर्वं विरहोत्कण्ठिते, पश्चाद्विदूषकादिना सहाभिसरन्त्यावभिसारिके । कुतोऽपि कारणात्सङ्केतस्थानमप्राप्ते नायके विप्रलब्धे इति त्र्यवस्थतैवानयोरिति ।

नायिकानां प्रतिनायिकामाह— २०

**१७५) ईर्ष्याहेतुः सपत्नी प्रतिनायिका ॥३२॥**

यथा रुक्मिण्याः सत्यभामा । दूत्यश्च नायिकानां लोकसिद्धा एवेति नोक्ताः ।

अथ स्त्रीणामलङ्कारानाह—

1 L. रुदंत्या २५

**१७६) सत्त्वजा विंशतिः स्त्रीणामलङ्काराः ॥३३॥**

संवेदनरूपात्प्रसृतं यत्ततोऽन्यद्देहधर्मत्वेनैव स्थितं सत्त्वम् । यदाह-

(40) 'देहात्मकं भवेत्सत्त्वम्' [ ना. शा. अ. २४ श्लो. ७. (C. S. S.), अ. २२. श्लो. ७ (N.S.) ] इति । ततो जाताः सत्त्वजाः। राजसतामसशरीरेष्वसंभवात् । चाण्डालीनामपि हि रूपलावण्यसम्पदो दृश्यन्ते न तु चेष्टालङ्काराः । तासामपि वा भवन्त उत्तमतामेव सूचयन्ति । अलङ्कारा देहमात्रनिष्ठा न तु चित्तवृत्तिरूपाः । ते यौवन उद्रिक्ता दृश्यन्ते बाल्येऽनुद्भिन्ना वार्द्धके तिरोभूताः । यद्यपि चैते पुरुषस्यापि सन्ति तथापि योषितां त एवालङ्कारा इति तद्गतत्वेनैव वर्णिताः । पुंसस्तूत्साहवृत्तान्त एव परोऽलङ्कारः । तथा च सर्वेष्वेव नायकभेदेषु धीरत्वमेव विशेषणतयोक्तम् । तदाच्छादितास्तु शृङ्गारादयो धीरललित इत्यादौ ।

अलङ्काराश्च केचन क्रियात्मकाः केचिद्गुणस्वभावाः । क्रियात्मका अपि केचन प्राग्जन्माभ्यस्तरतिभावमात्रेण सत्त्वोद्रेकेन देहमात्रे सति भवन्ति । तेऽङ्गजा इत्युच्यन्ते । अन्ये त्वद्यतनजन्मसमुचितविभाववशस्फुटीभवद्रतिभावानुविद्धे देहे परिस्फुरन्ति ते स्वाभाविकाः, स्वस्माद्रतिभावाद् हृदयगोचरीभूताद्भवन्ति-इति । तथा हि[1] कस्याश्चिन्नायिकायाः कश्चिदेव स्वभावबलाद्भवति, अन्यस्या अन्यः, कस्याश्चिद् द्वौ त्रय इत्याद्यतोऽपि स्वाभाविकाः । भावहावहेलास्तु सर्वा एव सर्वास्वेव सत्त्वाधिकास्तूत्तमाङ्गनासु भवन्ति । तथा शोभादयः सप्त । एवमङ्गजाः स्वाभाविकाश्च क्रियात्मानः । शोभादयस्तु गुणात्मानस्ते चायत्नजाः । यत्नाज्जाताः क्रियात्मकाः । इच्छातो यत्नस्ततो देहे क्रियेति **पदार्थविदः** । ततोऽन्येऽयत्नजाः ।

तान् क्रमेण लक्षयति—

1. P. drops हि

१७७) भावहावहेलास्त्रयोऽङ्गजा अल्पबहु[1]भूयोविकारात्मकाः ॥३४॥

यद्यपि—

(41) देहात्मकं भवेत्सत्त्वं सत्त्वाद्भावः समुत्थितः ।
भावात्समुत्थितो हावो हावाद्धेला समुत्थिता ॥ ५
[ ना. शा. अ. २४. श्लो. ७ (C. S. S.)
अ. २२ श्लो. ७ (N. S.) ]

इति भरतवचनात्क्रमेणैषां हेतुभावः, तथापि परम्परया तीव्रतमसत्त्वस्याङ्गस्यैव [2]कारणत्वादङ्गजा इत्युक्ताः । एवं च परस्परसमुत्थितत्वेऽप्यमीषामङ्गजत्वमेव । तथा हि—कुमारीशरीरे प्रौढतमकुमार्यन्तरगतहेलावलोकने हावोद्भवो भावश्चेदुल्लासितपूर्वः । अन्यथा तु भावस्यैवोद्भवः । एवं भावेऽपि दृष्टे हावो हेला वा । यदा तु हावावस्थोद्भिन्नपूर्वा परत्र च हेला दृश्यते तदा हेलातोऽपि हेला । एवं हावाद् हावः भावाद्भाव इत्यपि वाच्यम् । एवं परकीयभावादिश्रवणात्सरसकाव्यादेरपि हेलादीनां प्रयोगो भवतीति मन्तव्यम् । एतदन्योन्यसमुत्थितत्वम् । तत्राङ्गस्याल्पो विकारोऽन्तर्गतवासनात्मतया वर्तमानं रत्याख्यं भावं भावयन् सूचयन् भावः । यथा—

दृष्टिः सालसतां बिभर्ति न शिशुक्रीडासु बद्धादरा
श्रोत्रं प्रेषयति प्रवर्तितसखीसंभोगवार्तास्वपि ।
पुंसामङ्कमपेतशङ्कमधुना नारोहति प्राग्यथा
बाला नूतनयौवनव्यतिकरावष्टभ्यमाना शनैः ॥७२०॥ २०
[ ]

बहुविकारात्मा भ्रूतारकचिबुकग्रीवादेर्धर्मः स्वचित्तवृत्तिं परत्र जुह्वतीं ददतीं कुमारीं हावयतीति हावः । सा चाद्यापि स्वयं रतेः प्रबोधं

1. I. drops बहु 2. I. करणत्वा°

न मन्यते केवलं तत्संस्कारबलतस्तथा विकारान् करोति यैर्दृष्टा तथा कल्पयति । यथा—

स्मितं किञ्चिन्मुग्धं तरलमधुरो दृष्टिविभवः
परिस्पन्दो वाचामभिनवविलासोक्तिसरसः ।
५ गतीनामारम्भः किसलयितलीलापरिकरः
स्पृशन्त्यास्तारुण्यं किमिव हि[1] न रम्यं मृगदृशः ॥७२१॥
[ सुभा. श्लो. २२३१ ]

यदा तु रतिवासना प्रबोधार्त्ता प्रबुद्धां रतिमभिमन्यते केवलं समुचितविभावोपग्रहविरहान्निर्विषयतया स्फुटीभावं प्रतिपद्यते तदा १० तज्जनितबहुतराङ्गविकारात्मा हेला, हावस्य सम्बन्धिनी क्रिया । प्रसरत्ता वेगवाहित्वमित्यर्थः । वेगेन हि गच्छन् हेलतीत्युच्यते लोके इति । एवं चोद्भिद्योद्भिद्य विश्राम्यन् हावः । स एव प्रसरणैकस्वभावो हेलेति । यथा–

'कुरङ्गीवाङ्गानि' । ७२२ । इति ।

१५ अत्र ह्यन्तर्गतरतिप्रबोधमात्रमुक्तं न त्वभिलाषशृङ्गार इति मन्तव्यम् । तदेतद्ब्राह्मणस्योपनयनमिव भविष्यत्पुरुषार्थसम्पीठबन्धत्वेन योषितामामनन्ति ।

**१७८) लीलादयो दश स्वाभाविकाः ॥३५॥**

विशिष्टविभावलाभे रतौ सविषयत्वेन स्फुटीभूतायां तदुपबृंहण- २० कृता देहविकारा लीलाविलासविच्छित्तिबिब्बोकविभ्रम[2]किलिकिञ्चित- मोट्टायितकुट्टमित[3]ललितविहृतनामानः । एते च प्राप्तसंभोगत्वे ऽप्राप्तसंभोगत्वे च भवन्ति । शोभादयश्च सप्त वक्ष्यमाणाः प्राप्तसंभोगतायामेव ।

लीलादीँल्लक्षयति—

**१७९) वाग्वेषचेष्टितैः प्रियस्यानुकृतिर्लीला ॥३६॥**

---

1. I. किमिव न हि, L किमिह न हि
2. I. places बिब्बोक after विभ्रम 3. I, P. कुट्टुमित

प्रियगतानां वाग्वेषचेष्टानां प्रियबहुमानातिशयेन न तूद्भटक-रूपेणात्मनि योजनमनुकृतिर्लीला । यथा—

जं जं करेसि जं जं च जंपसे जह तुमं नियंसेसि ।

तं तमणु सिक्खिरीए दिअहो[1] दिअहो न संवडइ ॥७२३॥

[ स. श. ३७८; गा. स. श. ४. ७८. ] ५

१८०) स्थानादीनां वैशिष्ट्यं विलासः ॥३७॥

स्थानमूर्ध्वता । आदिशब्दादुपवेशनगमनहस्तभ्रूनेत्रकर्मपरिग्रहः । तेषां वैशिष्ट्यं विलासः । यथा—

अत्रान्तरे किमपि वाग्विभवातिवृत्तं

वैचित्र्यमुल्लसितविभ्रममायताक्ष्याः । १०

तद्भूरिसात्त्विकविकारविशेषरम्य-

माचार्यकं विजयि मान्मथमाविरासीत् ॥७२४॥

[ मा. मा. अं. १, श्लो. २९. ]

१८१) गर्वादल्पाकल्पन्यासः शोभाकृद्विच्छित्तिः ॥३८॥

सौभाग्यगर्वादनादरेण कृतो माल्याच्छादनभूषणविलेपनरूपस्या- १५ ल्पस्याकल्पस्य न्यासः सौभाग्यमहिम्ना शोभाहेतुर्विच्छित्तिः । यथा—

सिहिपिच्छकण्णऊरा जाया वाहस्स गव्विरी भमइ ।

मुत्ताहलरइअपसाहणाण मज्झे सवत्तीण ॥७२५॥

[ स. श. १७३; गा. स. श. २. श्लो. ७३. ]

१८२) इष्टेऽप्यवज्ञा बिब्बोकः ॥३९॥ २०

सौभाग्यगर्वादिष्टेऽपि वस्तुन्यनादरो बिब्बोकः । यथा—

निर्विभुज्य दशनच्छदं ततो वाचि भर्तुरवधीरणापरा ।

शैलराजतनया समीपगामाललाप विजयामहेतुकम् ॥७२६॥

[ कु. सं. स. ८ श्लो. ४९. ]

---

1. I. दियहो दियहो

१८३) **वागङ्गभूषणानां व्यत्यासो विभ्रमः ॥४०॥**

सौभाग्यगर्वाद्वचनादीनामन्यथा निवेशो व्यत्यासो विभ्रमः+। वचनेऽन्यथा वक्तव्येऽन्यथा भाषणम्। हस्तेनादातव्ये पादेनादानम्। रसनायाः कण्ठे न्यासः। यथा—

५ चकार काचित्सितचन्दनाङ्के
काञ्चीकलापं स्तनभारपृष्ठे।
प्रियं प्रति प्रेषितचित्तवृत्ति-
र्नितम्बबिम्बे च बबन्ध हारम् ॥७२७॥ [ ]

१८४) **स्मितहसितरुदितभयरोषगर्वदुःखश्रमाभिलाषसङ्करः**
१० **किलिकिञ्चितम् ॥४१॥**

सौभाग्यगर्वात्स्मितादीनां सङ्करः किलिकिञ्चितम्। यथा—

रतिक्रीडाद्यूते कथमपि समासाद्य समयं
मया लब्धे तस्याः क्वणितकलकण्ठार्धमधरे।
कृतभ्रूभङ्गासौ प्रकटितविलक्षार्धरुदित-
१५ स्मितक्रुद्धोद्भ्रान्तं पुनरपि विदध्यान्मयि सुखम् ॥७२८॥
[ धनिकस्य. दशरूपकावलोक. प्र. २. सू. ३९. ]

१८५) **प्रियकथादौ तद्भावभावनोत्था चेष्टा मोट्टायितम् ॥४२॥**

प्रियस्य कथायां दर्शने वा तद्भावभावनं तन्मयत्वम्। ततो[1] योद्भूता चेष्टा लीलादिका सा मदनाङ्गपर्यन्ताङ्गमोटनान्मोट्टायितम्। यथा—

२० स्मरदवथुनिमित्तं गूढमन्वेतुमस्याः
सुभग तव कथायां प्रस्तुतायां सखीभिः।
हरति विनतपृष्ठोद्ग्रपीनस्तनाग्रा
नत[2]वलयितबाहुर्जृम्भितैः साङ्गभङ्गैः ॥७२९॥
[ धनिकस्य. दशरूपकावलोक. प्र. २, सू. ४०. ]

---

+ In I. सौभाग्य to विभ्रमः is written on the margin which is much soiled.

1. L drops from ततो to निमित्तं. 2. P. तप°

**१८६) अधरादिग्रहाद् दुःखेऽपि हर्षः कुट्टमितम् ॥४३॥**

अधरस्तनकेशादीनां ग्रहणात् । प्रियतमेनेति शेषः । दुःखेऽपि हर्षः कुट्टमितम् । यथा–

ईषन्मीलितलोललोचनयुगं व्यावर्तितभ्रूलतं
संदष्टाधरवेदनाप्रलपितं मा मेति मन्दाक्षरम् ।  ५
तन्वङ्ग्याः सुरतावसानसमये दृष्टं मया यन्मुखम्
[1]स्वेदार्द्रीकृतपाण्डुगण्डपुलकं तत्केन विस्मार्यते ॥७३०॥

[ ]

**१८७) मसृणोऽङ्गन्यासो ललितम् ॥४४॥**

अङ्गानां हस्तपादभ्रूनेत्राधरादीनां मसृणः सुकुमारो विन्यासो  १० ललितम् । यथा–

सभ्रूभङ्गं करकिसलयावर्जनैरालपन्ती
सा पश्यन्ती ललितललितं लोचनस्याञ्चलेन ।
विन्यस्यन्ती चरणकमले लीलया स्वैरपातै-
र्निःसंगीतं प्रथमवयसा नर्तिता पङ्कजाक्षी ॥७३१॥  १५

[ धनिकस्य. दशरूपकावलोक प्र. २. सू. ४२. ]

**१८८) कर्तव्यवशादायाते एव हस्तादिकर्मणि यद्वैचित्र्यं स विलासः ॥४५॥**

यत्र तु बाह्यव्यापारयोग एव न कश्चिदस्ति नादातव्यबुद्धिरथ च सुकुमारकरादिव्यापारणं तल्ललितम् । अन्ये तु (42) 'लड विलासे' इति  २० पाठं प्रमाणयन्तो विलासमेव सातिशयं ललितसंज्ञमाहुः [ ] ।

**१८९) व्याजादेः प्राप्तकालस्याप्यवचनं विहृतम् ॥४६॥**

व्याजो मौग्ध्यादिप्रख्यापनाशयः । आदिग्रहणान्मौग्ध्यलज्जादिपरिग्रहः । ततो भाषणावसरेऽप्यभाषणं विहृतम् । यथा–

---

1. P. खेदा

पत्युः शिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्वम् ।
सा रञ्जयित्वा चरणं[1] कृताशीर्माल्येन तां निर्वचनं जघान ॥७३२॥
[ कु. सं. स. ७. श्लो. १९. ]

केचित् (43) बाल्यकुमारयौवनसाधारणविहारविशेषं क्रीडितम्, क्रीडितमेव च प्रियतमविषयं केलिं चालङ्कारौ आहुः [ ] । यथा—

मन्दाकिनीसैकतवेदिकाभिः सा कन्दुकैः कृत्रिमपुत्रकैश्च ।
रेमे मुहुर्मध्यगता सखीनां क्रीडारसं निर्विशतीव बाल्ये ॥७३३॥
[ कु. सं. स. १. श्लो. २९ ]

व्यपोहितुं[2] लोचनतो मुखानिलैरपारयन्तं किल पुष्पजं रजः ।
पयोधरेणोरसि काचिदुन्मनाः प्रियं जघानोन्नतपीवरस्तनी ॥७३४॥
[ कि. स. ८. श्लो. १९ ]

**१९०) शोभादयः सप्तायत्नजाः ॥४७॥**

शोभाकान्तिदीप्तिमाधुर्यधैर्यौदार्यप्रागल्भ्यनामानः सप्तालङ्कारा अयत्नजाः ।

क्रमेण लक्षयति—

**१९१) रूपयौवनलावण्यैः पुंभोगोपबृंहितैर्मन्दमध्यतीव्राङ्गच्छाया शोभा कान्तिर्दीप्तिश्च ॥ ४८ ॥**

तान्येव रूपादीनि पुरुषेणोपभुज्यमानानि च्छायान्तरं श्रयन्तीति

---

**अनेनेति** । अलक्तकोपरक्तस्य हि चन्द्रमसि परभागलाभः । अनवरतपादपतनप्रसादनैर्विना न पत्युर्झटिति यथेष्टानुवर्तिन्या भाव्यमिति वोपदेशः । शिरोविधृता च या चन्द्रकला तामपि परिभावयेति[3] सपत्नीलोकावजय[4] उक्तः ॥

॥ इति आचार्यश्रीहेमचन्द्रविरचिते विवेके सप्तमोऽध्यायः ॥

---

1. I. चरणौ 2. I. व्यपोहितं
3. N. परिभवेति 4. N. लोकविजय.

सा च्छाया मन्दमध्यतीव्रत्वं क्रमेण संभोगपरिशीलनादाश्रयन्ती[1] शोभा कान्तिर्दीप्तिश्च भवति । शोभा यथा—

करकिसलयं धूत्वा धूत्वा विमार्गति वाससी
क्षिपति सुमनोमालाशेषं प्रदीपशिखां प्रति ।
स्थगयति मुहुर्पत्युर्नेत्रे विहस्य समाकुला ५
सुरतविरतौ रम्या तन्वी मुहुर्मुहुरीक्षितुः ॥७३९॥

[ अ. श. श्लो. ९० ]

कान्तिर्यथा—

उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा
धृत्वा चान्येन वासो[2] विगलितकबरीभारमंसं वहन्त्याः । १०
भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः
शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥७३६॥

[ वे. सं. अं. १. श्लो. ३. ]

दीप्तिर्यथा—

आलोलामलकावलीं विलुलितां बिभ्रच्चलत्कुण्डलं १५
किञ्चिन्मृष्टविशेषकं तनुतरैः स्वेदाम्बुनः शीकरैः ।
तन्व्या यत्सुरतान्तकान्तनयनं वक्त्रं रतिव्यत्यये
तत्त्वां पातु चिराय किं हरिहरस्कन्दादिभिर्दैवतैः ॥७३७॥

( अ. श. श्लो. ३. )

**१९२) चेष्टामसृणत्वं माधुर्यम् ॥४९॥** २०

ललितेषु व्रीडादिषु यथा मसृणत्वं चेष्टायास्तथा दीप्तेष्वपि क्रोधादिषु यत्तन्माधुर्यम् । यथा——

---

1. L. परिभोगशी° 2. I. °रीकेशमसं

कृतो दूरादेव स्मितमधुरमभ्युद्गमविधिः

शिरस्याज्ञा न्यस्ता प्रतिवचनमत्या नतिमति[1] ।

न दृष्टेः शैथिल्यं मिलत[2] इति चेतो दहति मे

निगूढान्तःकोपा कठिनहृदये संवृतिरियम् ॥७३८॥

[ अ. श. श्लो. १४. ]

५

## १९३) अचापलाविकत्थनत्वे धैर्यम् ॥५०॥

चापलानुपहतत्वमात्मगुणानाख्यानं धैर्यम् । यथा—

ज्वलतु गगने रात्रौ रात्रावखण्डकलः शशी

दहतु मदनः किं वा मृत्योः परेण विधास्यति ।

१० मम तु दयितः श्लाघ्यस्तातो जनन्यमलान्वया

कुलममलिनं न त्वेवायं जनो न च जीवितम् ॥७३९॥

[ मा. मा. अं. २ श्लो. २ ]

## १९४) प्रश्रय औदार्यम् ॥५१॥

अमर्षेर्ष्याक्रोधाद्यवस्थास्वपि प्रश्रय औदार्यम् । यथा—

१५ भ्रूभङ्गे सहसोद्गतेऽपि वदनं नीतं परां नम्रता-

मीषन्मां प्रति भेदकारि हसितं नोक्तं वचो निष्ठुरम् ।

अन्तर्बाष्पजडीकृतं प्रभुतया चक्षुर्न विस्फारितं

क्रोधश्च प्रकटीकृतो दयितया मुक्तश्च न प्रश्रयः ॥७४०॥

[ र. अं. २. श्लो. २० ]

२० 

## १९५) प्रयोगे निःसाध्वसत्वं प्रागल्भ्यम् ॥५२॥

प्रयोगे कामकलादौ चातुःषष्टिके इत्यर्थः । यदाह—

---

1. I. नतिमतिः L प्रतिवचनमतिः i. e. drops मत्यानति
2. I. मिलित L मिलति

(44) अन्यदा भूषणं पुंसः शमो लज्जेव योषितः ।
+
पराक्रमः परिभवे वैयात्यं सुरतेष्विव ॥
[ शि. व. स. २. श्लो. ४४ ]

मनःक्षोभपूर्वकोऽङ्गसादः साध्वसं तदभावः प्रागल्भ्यम् । यथा–

'आशु लङ्घितवतीष्टकराग्रे' । ७४१ । इति । ५

अत्र शोभाकान्तिदीप्तयो बाह्यरूपादिगता एव विशेषा आवेग-चापलामर्षत्रासानां त्वभाव एव । माधुर्याद्या धर्मा न चित्तवृत्तिस्वभावा इति नैतेषु भावशङ्कावकाशः । **शाक्याचार्यराहुलादयस्तु** (45) मौग्ध्यमदभाविकत्वपरितपनादीनप्यलङ्कारानाचक्षते । तेऽ**स्माभिर्भरत**-मतानुसारिभिरुपेक्षिताः । १०

इति ॥ **आचार्यश्रीहेमचन्द्रविरचितायामलङ्कारचूडामणि**संज्ञस्वोपज्ञ-**काव्यानुशासनवृत्तौ** नायकवर्णनः सप्तमोऽध्यायः समाप्तः ॥

---

+ In P this verse is written on the margin which is broken in parts.

अथ प्रबन्धात्मककाव्यभेदानाह—

**१९६) काव्यं प्रेक्ष्यं श्रव्यं च ॥१॥**

नानृषिः कविरिति कवृ वर्णन इति च दर्शनाद्वर्णनाच्च कविस्तस्य
५ कर्म काव्यम्। एवं च दर्शने सत्यपि वर्णनाया अभावादितिहासादीनां[1]
न काव्यत्वमिति तल्लक्षणं न वक्ष्यते। तथा चाह **भट्टतोतः**—

(46) नानृषिः कविरित्युक्तमृषिश्च किल दर्शनात्।
विचित्रभावधर्मांशतत्त्वप्रख्या च दर्शनम्॥
स तत्त्वदर्शनादेव शास्त्रेषु पठितः कविः।
१० दर्शनाद्वर्णनाच्चाथ रूढा लोके कविश्रुतिः॥
तथा हि दर्शने स्वच्छे नित्येऽप्यादिकवेर्मुनेः।
नोदिता कविता लोके यावज्जाता न वर्णना॥ इति॥

प्रेक्ष्यमभिनेयम्[2]। श्रव्यमनभिनेयम्[3]।

प्रेक्ष्यं विभजते—

१५ **१९७) प्रेक्ष्यं पाठ्यं गेयं च ॥२॥**

तत्र पाठ्यं भिनत्ति।

**१९८) पाठ्यं नाटकप्रकरणनाटिकासमवकारेहामृगडिमव्यायोगोत्सृष्टिकाङ्कप्रहसनभाणवीथीसट्टकादि ॥३॥**

तथा च नाटकादीनि वीथ्यन्तानि वाक्यार्थाभिनयस्वभावानि
२० भरतमुनिनोपदर्शितानि, सट्टकश्चकैश्चित्। यथा—

(47) प्रख्यातवस्तुविषयं प्रख्यातोदात्तनायकं चैव।
राजर्षिवंश्यचरितं तथैव दिव्याश्रयोपेतम्॥१०॥

---

**प्रख्यातेति**। प्रख्यातमितिहासाख्यानादिना वस्तुविषयो यस्य। तत्र हि लोकस्य कथापरिचयादादरातिशयो भवति। यद्वा प्रकर्षेण ख्यातं[4] वस्तु चेष्टितं

---

1. I. अन्तर्भावादि° 2. L. drops नेयं
3. I. drops श्रव्यमनभिनेयं 4. A. B. °णाख्यातं

नानाविभूतिभिर्युतमृद्धिविलासादिभिर्गुणैश्चापि ।
अङ्कप्रवेशकाढ्यं भवति हि तन्नाटकं नाम ॥११॥

तथा विषयो **मालवपञ्चालादिर्**यस्मिन् । चक्रवर्तिनोऽपि हि **वत्सराजस्य कौशाम्बी**व्यतिरिक्ते विषये कार्यान्तरोपक्षेपेण विना यन्निरन्तरं निर्वर्णनं तद्वैरस्याय भवति । वस्तुविषययोः प्रख्यातिमुक्त्वा तृतीयां प्रख्यातिमाह— ५ **प्रख्यातोदात्तेति** । उदात्त इति वीररसयोग्य उक्तः । तेन धीरललितधीरप्रशान्तधीरोद्धतधीरोदात्ताश्चत्वारोऽपि गृह्यन्ते । **राजर्षिवंश्येत्य**नेन प्रख्यातमपि यद्वस्तु ऋषितुल्यानां राज्ञां वंशे साधु नोचितं तथा प्रख्यातत्वेऽपि देवचरितं वरप्रभावादिबाहुल्येनोपायोपदेशायायोग्यमिति नैतदुभयं निबन्धनीयमिति फलतः प्रतिषेधो दर्शितः । राजान ऋषय इवेत्युपमितिसमासः । तद्वंशे १० साधु चरितं यस्मिन्निति बहुव्रीहिः । न च सर्वथा देवचरितं तत्र न वर्णनीयम्, किं तु दिव्यानामाश्रयत्वेनोपायत्वेन प्रकरीपताकानायकादिरूपेणोपेतमुपगमोऽङ्गीकरणं यत्र । तथा हि—**नागानन्दे** [1] भगवत्याः पूर्णकरुणाभरनिर्भरायाः साक्षात्करणे व्युत्पत्तिर्जायते । निरन्तरभक्तिभावितानामेवं नाम देवताः प्रसीदन्ति । तस्माद्देवताराधनपुरःसरमुपायानुष्ठानं कार्यमिति । १५

ननु दिव्यनायकाश्रययुक्तकथाशरीरमपि नाटकं भवतीति कस्मान्न व्याख्यायते । व्याख्यायेत यद्येवंलक्षणेन नाटकेन कश्चिदर्थो व्युत्पाद्येत । न चैतदेवं, दिव्यानां दिव्यप्रभावैश्वर्ययोगाद् दुरुपपादेष्वप्यर्थेष्विच्छामात्रमेव प्रयत्नो नैव सिद्धौ [2] व्याहन्यते । तस्मात्तच्चरितं मर्त्यैर्विधातुमशक्यमिति नैवोपदेशयोग्यम् । तथा ह्युक्तम्—

(178) देवानां मानसी सिद्धिर्गृहेषूपवनेषु च । २०
क्रियायत्नाभिनिष्पन्नाः सर्वे भावा हि मानुषाः ॥
तस्माद्देवकृतैर्भावैर्न विस्पर्धेत [3] मानुषः ॥ इति [ना. शा. अ. २. श्लो. २२–२३ (C. S. S.); अ. २. श्लो. २५–२६. (N. S).

तस्मादिष्टानिष्टदैवमानुषकर्मोपपादितशुभाशुभफलभाजां मर्त्यानामेव समुपभोगविपत्प्रतिविधानव्युत्पादकं चरितमाश्रित्य नाटकं निबन्धनीयमिति नृपतय २५ एव नाटकेषु युज्यन्ते । नायिका तु दिव्याप्यविरोधिनी । यथोर्वशी । नायकचरितेनैव तद्वृत्तस्याक्षेपात् ।

प्रसिद्धमपि वस्तु न निष्फलं व्युत्पत्तये भवतीत्यत आह—**नानाविभूतिभिर्युतमिति** । धर्मार्थकाममोक्षविभवैः फलभूतैर्विचित्ररूपैर्युक्तम् । तत्रा-

---

1. A. B. °नंदभवत्याः
2. A. B. सिद्धो  3. A. B. °वै स्पर्धेत मानुष

(48) अत्र कविरात्मशक्त्या वस्तु शरीरं च नायकं चैव ।
औत्पत्तिकं प्रकुरुते प्रकरणमिति तद् बुधैर्ज्ञेयम् ॥९३॥
यदनार्षमथाहार्यं काव्यं प्रकरोत्यभूतगुणयुक्तम् ।
उत्पन्नबीजवस्तु प्रकरणमिति तदपि विज्ञेयम् ॥९४॥

---

५ प्यर्थकामौ[1] सर्वजनाभिलषणीयाविति तद्बाहुल्यं दर्शनीयमिति । **ऋद्धिविलासादिभिरिति** । ऋद्धिरर्थस्य राज्यादेः सम्पत्तिः । विलासेन कामो लक्ष्यते । आदिशब्दः प्रधानवाची । तत्प्रधानाभिः फलसम्पत्तिभिर्युक्तमित्यर्थः । तेन राज्ञा सर्वं राज्यं ब्राह्मणेभ्यो दत्वा वानप्रस्थं गृहीतमित्येवंप्रायं फलं नोपनिबन्द्धव्यं धर्ममोक्षबहुलमिति । दृष्टसुखार्थी हि बाहुल्येन लोक
१० इति तत्रास्य प्रतीतिर्विरसीभवेत् ।

**गुणैरिति** । अप्रधानभूतानि यानि चेष्टितानि हेयानि प्रतिनायकगतान्यपनयप्रधानानि तैर्युक्तम् । तेषां पूर्वपक्षस्थानीयानां प्रतिक्षेपेण सिद्धान्तकल्पस्य नायकचरितस्य निर्वाहाज्जनपदकोशादिसम्पत्तिर्ऋद्धिः । कौमुदीमहोत्सवादयो विलासाः । सन्धिविग्रहादयो गुणा इति **चाणक्य**परिचयावेदनमात्रफलम् ।
१५ वस्तुशब्देन राजर्षिवंश्यचरितशब्देन च सर्वस्याप्यर्थराशेः[2] संग्रहात् । अवान्तरवस्तुसमाप्तौ विश्रान्तये ये विच्छेदा अङ्कास्तैः पद्माद्यैर्देशान्तैर्ये च निमित्तबलादप्रत्यक्षदृष्टानां चेष्टितानामावेदकाः प्रवेशकास्तैश्चाढयं तन्नाटकं नाम रूपकम् ।

**आत्मशक्त्येति** । इतिहासादिप्रसिद्धिं निरस्यति ।

**वस्त्विति** । साध्यं फलम् ।

२० **शरीरमिति** । तदुपायम् ।

**नायकमिति** । साधयितारम् । चकारः सर्वसमुच्चये । द्वितीयस्त्वसमग्रसमुच्चये । एवकारः समुच्चयाभावे । उत्पत्तौ भवमौत्पत्तिकं निर्मितम् ।

तदयमर्थः[3]—त्रितयमपि यत्र कविकृतं द्वयमेकं च । अन्यत्तु पूर्वोपनिबद्धं तत्सर्वं प्रकरणं भेदसप्तकमयम्[4] । वस्त्वादिकं काव्याभिधेयमात्मशक्त्या
२५ प्रकुरुते यत्र काव्ये तत्प्रकरणमिति बुधैर्ज्ञेयमिति सम्बन्धः ।

यत्र न सर्वमुत्पाद्यं भवति तत्र योऽनुत्पाद्योऽशः स कुत्रस्थो ग्राह्य इति दर्शयितुमाह—**यदनार्षमिति** । पुराणादिव्यतिरिक्त**बृहत्कथा**द्युपनिबद्धं मूलदेवतच्चरितादि ।

**आहार्यमिति** । पूर्वकविकाव्याद् वाहरणीयं समुद्रदत्ततच्चेष्टितादि ।

---

1. C. drops कामौसर्व 2. N. अर्थस्य राशेः
3. A. B. drop तदयमर्थः 4. A. drops यं

यन्नाटके मयोक्तं वस्तु शरीरं च वृत्तिभेदाश्च ।
तत्प्रकरणेऽपि योज्यं सलक्षणं सर्वसंधिषु तु ॥९५॥
विप्रवणिक्सचिवानां पुरोहितामात्यसार्थवाहानाम् ।
चरितं यन्नैकविधं तज्ज्ञेयं प्रकरणं नाम ॥९६॥
नोदात्तनायककृतं न दिव्यचरितं न राजसंभोगः । ५
बाह्यजनसंप्रयुक्तं तज्ज्ञेयं प्रकरणं नाम ॥९७॥

---

ननु च तत्रांशे कविकृतत्वाभावात्कथं प्रकरणवाचोयुक्तिरित्याह—**उत्पन्ने** पूर्वसिद्धे **बीजं वस्तु** च यत्र तादृशमपि तद्यदिति यस्मादभूतैर्बृ**हत्कथादौ** काव्यान्तरे वा प्रसिद्धैर्गुणैर्युक्तं प्रकरोति तदिति तस्माद्धेतोरेतदपि **प्रकरणम्** । तेन **बृहत्कथा**दिसिद्धस्य मूलदेवादेरधिकावापं कविशक्तिर्यदा विधत्ते तदा प्रक- १० रणम् । एवं पूर्वकविसमुत्प्रेक्षितसमुद्रदत्तचेष्टितादिवर्णनेऽप्यधिकावापं विदधत्कविः प्रकरणं कुर्यादिति तात्पर्यम् ।

नन्वस्येतिवृत्तस्य कथं योजनेत्याशङ्क्य पूर्वोक्तमेवातिदेशद्वारेण[1] स्मारयितुमाह—**यन्नाटके** इति । 'नानाविभूतिभिर्युतमृद्धिविलासादिभिः' इत्यादिना यत्फलवस्त्वमुक्तं तद्वस्तुशरीरमित्यङ्कप्रवेशकाद्यम् । १५

**वृत्तिभेदाश्चेति** । नानारसभावचेष्टितैर्बहुधा सुखदुःखोत्पत्तिकृतमिति ।

**सलक्षणमिति** । लक्षणमङ्कपरिमाणम् । अङ्कान्तरसन्धानहेतुषु च प्रवेशकेषु यत्प्रयोज्यमुक्तं दिवसावसानकार्यं यद्यङ्केनोपपद्यत[2] इत्यादि तत्सर्वं प्रकरणेऽपि योज्यम् ।

अतिदेशायातमतिप्रसङ्गं वारयत्यार्याद्वयेन—**विप्रे**त्यादि । अमात्योऽधि- २० कृतः । सार्थवाहो दिगन्तरात्पण्यानामाहर्ता । तद्देशक्रयविक्रयकृतो वणिजोऽन्य एव । नैकविधमित्यनेकरसयुक्तमित्यर्थः । नैकरसान्तरयुक्त इति ।

**त**दिति तदतिदेशमात्रमिति सूचितम् । प्रख्यातोदात्तत्यतिप्रसक्तं निषेधयति । **नोदात्तेति** । तन्निषेधे चार्थान्नाटकवैपरीत्यमायातम् ।

नाटके च देवो नायकत्वेन निषिद्ध इति प्रकरणे कर्तव्यत्वेनापाद्यत इत्यत २५ आह—न **दिव्यचरितमिति** । तथा दिव्याश्रयमिति यदतिदेशाद्देवानामुपायत्वेन प्रयोज्यत्वं[3] प्रसक्तम्, तदप्यनेन निषिद्धम् । नाटके देवानामिवेहापि

---

1. A. interpolates 'श्चेतिनारसभाव' between वाति and देश
2. A. B. नोत्पद्यत  3. A. B. प्रयोज्यमाप्रसक्तं

दासविटश्रेष्ठियुतं वेशस्त्र्युपचारकारणोपेतम् ।
मन्दकुलस्त्रीचरितं काव्यं कार्यं प्रकरणे तु ॥९८॥

( 49 ) प्रकरणनाटकभेदादुत्पाद्यं वस्तु नायकं नृपतिम् ।
अन्तःपुरसंगीतककन्यामधिकृत्य कर्तव्या ॥
[ ना. शा. अ. २०, श्लो. ६०-६१ ( C. S. S. ) ]

५ स्त्रीप्राया चतुरङ्का ललिताभिनयात्मिका सुविहिताङ्गी ।
बहुनृत्तगीतवाद्या[1] रतिसंभोगात्मिका चैव ॥१०७॥

राज्ञः प्रवेशं शङ्कमानो निराकरोति—**न राजसंभोग** इति । यदि वात्रौत्पत्तिकत्वेऽपि न राजोचितसंभोगोत्प्रेक्षा विप्रादिषु करणीयेत्यनेन शिक्षयति । १० अत एव राजनि य उचितोऽन्तःपुरजनः कञ्चुकिप्रभृतिस्तद्व्यतिरिक्तो बाह्यजनोऽत्र चेटदासादिः प्रवेशकादौ कार्य इत्यर्थः ।

एतदेव दर्शयति-**दासविटेति** । कञ्चुकिस्थाने दासः, विदूषकस्थाने विटः, अमात्यस्थाने श्रेष्ठीत्यर्थः । वेश्यावाटो वेशस्तत्र या स्त्री तस्या उपचारो **वैशिके** प्रसिद्धः स कारणं यस्य शृङ्गारस्य तेनोपेतम् । कुलस्त्रीविषयं चेष्टितं १५ मन्दं[2] यत्रेति ।

**प्रकरणेति** । बहुषु प्रकरणभेदेषु नाटकभेदेषु च स्त्रीप्राप्तिफलात्संभोगशृङ्गारप्रायात् कैशिकीप्रधानाच्च प्रकरणभेदान्नाटकभेदाच्च नाटिका ज्ञेयेति दूरेण सम्बन्धः ।

उत्पाद्यं वस्तुचरितं नायकं च नृपतिमन्तःपुरकन्यां संगीतकशालाकन्यां २० चाधिकृत्य प्राप्यत्वेनाभिसन्धाय कर्तव्या च । तेन स्त्रीप्राप्तिः संभोगशृङ्गारोऽभ्यन्तरे कैशिकी च वृत्तिः । तथा-अवस्थासन्ध्यङ्गार्थप्रकृतिपताकाप्रकरीपताकास्थानाङ्कविष्कम्भकप्रवेशकादीन्युभयभेदसाधारणानि नाटिकायां प्रयोज्यानि । यदपि किञ्चिदसाधारणं तदपि योज्यते । अतश्च 'उत्पाद्यं वस्तु' इति प्रकरणधर्मः । 'नायकं नृपतिम्' इति नाटकधर्मः । 'अन्तःपुरसंगीतककन्याम्' इति २५ कन्यायोगे ईर्ष्याविप्रलम्भश्च नाटकधर्म एव ।

अथास्या विशेषलक्षणमाह-**स्त्रीप्रायेति** । स्त्रियः प्रायेण बाहुल्येन यत्र ।

1. I. बहुगीतनृत्त° 2. A. B. मदं
+ प्रकरणनायकभेदा° ( ना. शा. C. S. S. )

राजोपचारयुक्ता प्रसादनक्रोधदम्भसंयुक्ता ।
नायक[1]देवीदूती सपरिजना नाटिका ज्ञेया[2] ॥१०८॥

समवकारस्तु—

(50) देवासुर[3]बीजकृतः प्रख्यातोदात्तनायकश्चैव ॥१०९॥

चत्वारोऽङ्का यस्याम् । कस्याश्चिदवस्थायाः सरसेऽवस्थान्तरे[4] समावापः कर्तव्य इति यावत् । सुष्ठुपूर्णतया विहितानि चत्वार्यपि कैशिक्यङ्गानि यत्र । एतेन स्त्रीप्रायेति ललितेति बहुनृत्तेति[5] च कैशिकीवृत्तिबाहुल्यं दर्शयति । रतिपुरःसरः संभोगो राज्यप्राप्त्यादिलक्षण आत्मा प्रधानभूतं फलं यस्याम् । अत एवाह—**राजगतैरुपचारै**र्व्यवहारैर्युक्ता । अन्यां चेदुद्दिश्य तत्र व्यवहारस्तदा पूर्वनायिकागतैः क्रोधप्रसादनवञ्चनैरवश्यं भाव्यमिति दर्शयति—**प्रसादनेति** । आर्यानुरोधात्क्रोधस्य पश्चात्पाठः ।

ननु यस्याः क्रोधो भवति सा न कदाचिदुक्तेत्याशङ्क्याह—**नायकेति** । नायकस्य येयं देवी आद्यनायिका तथाभिलषितनायिकान्तरविषया येयं दूती तत्कृतं सपरिजनं परिजनसमृद्धिर्यस्याम् ।

**देवासुरेति** । देवासुरस्य यद्बीजं फलसम्पादनोपायस्तेन कृतो विरचितः देवासुरा अपि चाप्रख्याता **बृहत्कथादौ** श्रूयन्ते स्वयं वा केनचिदूह्यन्त इति तन्निरासार्थं प्रख्यातपदम् । यद्यपि देवाः पुरुषापेक्षया उद्धतास्तथापि स्वापेक्षया गाम्भीर्यप्रधानतया- उदात्ता उच्यन्ते भगवत्त्रिपुररिपुप्रभृतयः, प्रशान्ता ब्रह्मादयः, उद्धता नृसिंहादयः। अर्थत्रयस्य तावत्येव समापना त्र्यङ्क इत्युक्तम् । कपटो वञ्चना मिथ्याकल्पितः सत्यानुकारी प्रपञ्च इत्यर्थः । स त्रिधा—यत्रानपराद्ध एव वञ्चकेन वञ्च्यते स एकः । यत्र तु वञ्चनीयोऽपि सापराधः स द्वितीयः । यत्र तु द्वयोरपि न कश्चिदभिसंन्धिदोषः काकतालीयेन तु तुल्यफलाभिसन्धानवतोरप्येक उपचयेनापरस्त्वपचयेन युज्यते स दैवकृतस्तृतीयः ।

1. L देव°

2. In the Nātya Ṣāstra the second line is: प्रकरणनाटकनाटीलक्षणमुक्तं समासेन ।

3. L drops from देवासुर to °आरभटीवृत्ति° i e about twenty lines of the verses

4. °स्थानान्तरे 5. N बहुनृत्ये

त्र्यङ्कस्तथा त्रिकपटस्त्रिविद्रवः स्यात्त्रिशृङ्गारः ।
द्वादशनायकबहुलो ह्यष्टादशनालिकाप्रमाणश्च ॥१२०॥ इति

(51) दिव्यपुरुषाश्रयकृतो दिव्यस्त्रीकारणोपगतयुद्धः ।
सुविहितवस्तुनिबद्धो विप्रत्ययकारणश्चैव ॥१२४॥

५ उद्धतपुरुषप्रायः स्त्रीरोषप्रथितकाव्यबन्धश्च ।
संक्षोभविद्रवकृतः संस्फेटकृतस्तथा चैव[1] ॥१२५॥
स्त्रीभेदनापहरणावमर्दनप्राप्तवस्तुशृङ्गारः ।

---

चेतनकृतमन्यकृतमुभयकृतं वा यदनर्थात्मकं वस्तु यतो विद्रवन्ति जना स विद्रव इति । तत्र चेतनं गजेन्द्रादि । अचेतनं जलवाय्वादि । उभयं
१० नगरोपरोधादि । तस्य युद्धाग्निदानादिसम्पाद्यत्वात् । शृङ्गारस्त्रिधा—धर्मार्थकाम-भेदात् । धर्मो यत्र हेतुः साध्यो वा नायिकालाभे स धर्मशृङ्गारः । एवमर्थ-कामयोर्वाच्यम् ।

अथ नायकयोगं कार्यनिष्पत्तिकालविभागं चाह—**द्वादशेति** । द्वादश-नायकबहुल इति प्रत्यङ्कमिति केचित् । अन्ये तु प्रत्यङ्कं नायकप्रतिनायकौ
१५ तत्सहायौ चेति चतुर आहुः । समुदायापेक्षया हि द्वादशेति । बहुलग्रहणाच्च्यू-नाधिकत्वेऽप्यदोषः ।

**अष्टादशेति** । अष्टादशनालिकमेव तत्र कार्यं निबन्धनीयमित्यर्थः ।

**दिव्येति** । दिव्यानां पुरुषाणां च यदाश्रयणं नायकतया तेन कृतः । दिव्यस्त्रीनिमित्तमुपगतं युद्धं यत्र ।

दिव्यानुप्रवेशात्समवकारवदसम्बद्धार्थता मा प्रसाङ्क्षीदित्याह—**सुविहितेन**
२० संश्लिष्टेन **वस्तुना निबद्धः विगतानि प्रत्ययकारणानि** विश्वास-हेतवो यत्र । मध्ये चात्र दिव्यानामपि प्रवेशो भवतीति दर्शयति ।

**उद्धतेति** । उद्धता उद्वृत्ताः पुरुषाः प्रायेण यत्र स्त्रीनिमित्तको रोषः । संक्षोभ आवेगः । विद्रवो व्याख्यातः । संस्फेटो विरोधिनां विद्याविक्रम-
२५ संघर्षजो व्यासङ्गः । तथेत्युक्तसादृश्यार्थः । चः समुच्चये । एवशब्दोऽवधारणे । एतल्लक्षणयुक्त एवेत्यर्थः । स्त्रीनिमित्तं यानि भेदनापहरणावमर्दनानि[2] यथायोगं स्त्रीविषयाण्यन्यविषयाणि वा तैः प्राप्तं वस्त्वधिष्ठानं प्रमदालक्षणं तस्य तादृशः शृङ्गारो यस्मिन् । भेदसामदानादिना । अवमर्दनं दण्डः ।

---

1. I. संस्फोट° 2. A. B. भेदनाप्रहरणा

ईहामृगस्तु कार्यः सुसमाहितकाव्यबन्धश्च[1] ॥१२६॥
यद्व्यायोगे कार्या ये पुरुषा वृत्तयो रसाश्चैव
ईहामृगेऽपि तत्स्यात् केवलमत्र स्त्रिया योगः ॥१२७॥

(52) प्रख्यातवस्तुविषयः प्रख्यातोदात्तनायकश्चैव ।
षड्रसलक्षणयुक्तश्चतुरङ्को वै डिमः कार्यः ॥१३०॥   ५
शृङ्गारहास्यवर्जं शेषैरन्यै रसैः समायुक्तः ।
दीप्तरसकाव्ययोनिर्नानाभावोपसंपन्नः ॥१३१॥

निर्घातोल्कापातैरुपरागेणेन्दुसूर्ययोर्युक्तः ।
युद्धनियुद्धाधर्षणसंस्फेट[2]कृतश्च विज्ञेयः ॥१३२॥

मायेन्द्रजालबहुलो बहुपुस्तोत्थानयोगयुक्तश्च ।   १०
देवभुजगेन्द्रराक्षसयक्षपिशाचावकीर्णश्च ॥१३३॥

---

**ईहा** चेष्टा **मृगस्येव** स्त्रीमात्रार्था यत्र । **सुसमाहितकाव्यबन्ध** इत्यनेन वीथ्यङ्गानि अत्र योज्यानीति दर्शयति[3] । अङ्कपरिमाणं नायकसंख्यां वृत्तिरसविभागं च व्यायोगातिदेशेनाह—**यदिति** । कार्यशब्देनाङ्क उच्यते । तेन एक एवाङ्कः । नायकास्तु द्वादश समवकारातिदेशेन व्यायोगे तल्लाभात् ।   १५
अत्र तु समवकारातिदेशेन सर्वासम्पत्तेर्गौरवं स्यात् ।

**प्रख्यातेति** । षड्रसा यस्मिन् तल्लक्षणं षड्रसं तेन युक्तः । नाटकतुल्यं सर्वमन्यत्केवलं सन्धीनां रसानां चासमग्रतात्र । **शृङ्गारहास्यवर्जं** षड्रसत्वे उक्ते पर्यायेण शान्तस्य प्रयोगः स्यादित्याह–**दीप्तरसेति** । दीप्ता रसा वीररौद्रादयस्ते काव्ययोनिर्यत्र । **नानाविधा भावा** व्यभिचारिणः । **आधर्षणं**   २०
बलात्काररूपः पराभवः । **माया** शब्दरूपादीनामन्यथापादनमसतां वा प्रकाशनम् । **पुस्तं** लेप्यकिलिञ्जचर्मवस्त्रकाष्ठकृतानि रूपाणि ।

---

1. In ना. शा. the latter part is कार्यश्चतुरङ्कविभूषितश्चैव

2. I. संस्फोट°     3. N. drops दर्शयति

षोडशनायकबहुलः सात्त्वत्यारभटिवृत्तिसंपन्नः ।
कार्यो डिमः प्रयत्नान्नानाश्रयभावसंयुक्तः ॥१३४॥

(53) व्यायोगस्तु[1] विधिज्ञैः कार्यः प्रख्यातनायकशरीरः ।
अल्पस्त्रीजनयुक्तस्त्वेकाहकृतस्तथा चैव ॥१३५॥

५ बहवश्च तत्र पुरुषा व्यायच्छन्ते[2] यथा समवकारे
न तु तत्प्रमाणयुक्तः कार्यस्त्वेकाङ्क एवायम् ॥१३६॥
न च दिव्यनायककृतः कार्यो राजर्षिनायकनिबद्धः ।
युद्धनियुद्धाधर्षणसंघर्षकृतश्च कर्तव्यः ॥१३७॥

---

**देवादयो** बाहुल्येनात्र। बहुलग्रहणं व्यभिचारार्थम् । तेन न्यूनाधिका
१० अपि नायकाः प्रयोज्याः । **सात्त्वती चारभटो** चेति (179)
द्वन्द्वेऽप्राणिपश्वादेः' इत्येकवद्भावो (180) 'द्वन्द्वैकत्वाव्ययीभावौ' इति नपुंस-
कलिङ्गता च । वृत्तिसमुदाये च वर्तमानेन वृत्तिशब्देन कर्मधारयः । तया
**सम्पन्नः** । डिम्भो डिम्बो विद्रव इति पर्यायास्तद्योगादयं **डिमः** ।

**नानाश्रयभावसम्पन्न** इति । नानेत्येकस्यान्योऽपरस्यान्य इति नाना-
१५ रूप आश्रयो येषां ते नानाश्रया भावास्तैः सम्पन्नः । बहूनां नायकानां
विभागेन हि भावा व्यवतिष्ठन्ते । अत एवेति वृत्तवैचित्र्यमत्रोपदिशन्ति ।

**व्यायोगस्त्विति** । व्यायोगः पुनर्डिमस्यैव शेषभूतो दिव्यनायका-
भावात् केवलमत्रोदात्तस्य राजोदर्न नायकता, अपि त्वमात्यसेनापतिप्रभृतेर्दीप्त-
रसस्य। अत एव प्रख्यातनायकेत्यत्र उदात्तग्रहणं न कृतम् । शरीरमितिवृत्तम्,
२० प्रख्यातो नायकः शरीरं च यत्र स तथा । अल्पश्च स्त्रीजनश्च तेन युक्तः ।
चेटयादिना न तु नायिकादूत्यादिभिः कैशिकीहीनत्वात् ।

**एकाहकृत** इति । एकदिवसनिर्वर्त्यं यत्कार्यं तत्र कृतः ।
**यथा समवकार** इति । द्वादशेत्यर्थः ।
तावदङ्कपरिमाणाशङ्कामतिदेशात्प्रत्यासत्त्या वा प्रसक्तां वारयितुमाह—

२५ **एकाङ्क एवेति** । एवकारेण एकाहचरितविषयत्वान्न्यायप्राप्तमेवात्रैका-
ङ्कत्वमित्याह—ननु प्रख्यातनायकशब्देन किमत्रगृहीतमित्यतिप्रसङ्गं शमयति[3]—
**न चेति** । चो भिन्नक्रमः । दिव्यैर्देवैर्नृपैर्ऋषिभिश्च नायकैर्न निबद्धोऽयं
भवतीत्यर्थः ।

ननु कस्मादयं व्यायोग इत्याह–**युद्धनियुद्धेति** । व्यायामे[4] युद्धनियुद्ध-

---

1. I. व्यायामस्तु 2. L व्यावर्तवे
3. A. B. वारयति 4. N. व्यायोगे

एवंविधस्तु कार्यो व्यायोगो दीप्तकाव्यरसयोनिः ।

(54) वक्ष्याम्यतः परमहं लक्षणमुत्सृष्टिकाङ्कस्य ॥१३८॥

प्रख्यातवस्तुविषयस्त्वप्रख्यातः कदाचिदेव स्यात् ।

दिव्यपुरुषैर्वियुक्तः शेषैरन्यैर्भवेत् पुंभिः ॥१३९॥

करुणरसप्रायकृतो निवृत्तयुद्धोद्धतप्रहारश्च । ५

स्त्रीपरिदेवितबहुलो निर्वेदितभाषितश्चैव ॥१४०॥

नानाव्याकुलचेष्टः सात्त्वत्यारभटिकैशिकीहीनः ।

कार्यः काव्यविधिज्ञैः सततं ह्युत्सृष्टिकाङ्कस्तु ॥१४१॥

(55) प्रहसनमपि विज्ञेयं विविधं शुद्धं तथा च संकीर्णम् ।

वक्ष्यामि तयोर्युक्त्या पृथक् पृथग् लक्षणविशेषम् ॥१४२॥ १०

---

प्राये युज्यन्ते पुरुषा यत्रेति व्यायोग इत्यर्थः । संघर्षः शौर्यविद्याकुलधनरूपादिकृता स्पर्धा । दीप्तं काव्यमोजोगुणयुक्तम्, दीप्ता रसा वीररौद्राद्याः, तदुभयं योनिः कारणमस्य ।

**प्रख्यातेति** । प्रख्याते भारतादियुद्धे विषये निमित्ते सति यत्र करुणबहुलं चेष्टितं वर्ण्यते तत्प्रख्यातम् । श्रीपर्वतवृत्तान्तवद्भवतु[1] मा वा भूदित्यप्रख्यातग्रहणेनोक्तम् । तेनोभयोपादानस्य परस्परविरुद्धार्थत्वादकिञ्चित्करत्वं नाशङ्कनीयम् । १५

**दिव्यपुरुषैर्वियुक्त** इति । दुःखात्मकत्वात् ।

**शेषैरन्यैरिति** । अर्थापत्तिफलम् । करुणो रसः प्रायो यत्रेति काव्यशरीरमुच्यते तत्र कृतः । निवृत्तयुद्धा उद्धतप्रहारा पुरुषा यस्मिन् । परिदेवितं दैवोपालम्भात्मनिन्दादिरूपमनुशोचनं यत्र । निर्वेदितानि येषु श्रुतेषु निर्वेदो जायते तादृशि[2] भाषितानि यत्र । व्याकुलाश्चेष्टा भूमिनिपातविवर्तिताद्याः । २०

**सात्त्वत्यारभटिकैशिकीहीन** इति । समाहारद्वन्द्वगर्भद्वन्द्वान्तरगर्भ[3]स्तृतीयासमासः । उत्क्रमणोन्मुखा[4] सृष्टिर्जीवितं प्राणा यासां ता उत्सृष्टिकाः शोचन्त्यः स्त्रियस्ताभिरङ्कित इति तथोक्तः । २५

**प्रहसनमपीति** । अपिशब्दो भिन्नक्रमः । **तथेति** । सामान्यलक्षणम् ।

---

1. A. B. स्त्रीपर्वत° 2. I. drops तादृशि; C. तादृचि भाषणानि
3. A. B. drop द्वन्द्वगर्भ; C. °गर्भ 4. A. B. C. उत्क्रमेणोन्मुखा

भगवत्तापसविप्रैरन्यैरपि हासवादसंबद्धम् ।
कापुरुषसंप्रयुक्तं परिहासाभाषणप्रायम् ॥१४७॥
अविकृतभाषाचारं[1] विशेषभावोपपन्नचरितमिदम् ।
नियतगतिवस्तुविषयं शुद्धं ज्ञेयं प्रहसनं तु ॥१४८॥
५ वेश्याचेटनपुंसकविटधूर्ता बन्धकी च यत्र स्युः ।
अनिभृतवेषपरिच्छद[2]वेष्टितकरणं च संकीर्णम् ॥१४९॥
(56) आत्मानुभूतशंसी परसंश्रय[3]वर्णनाप्रयुक्तश्च ।
विविधाश्रयो हि भाणो विज्ञेयस्त्वेकहार्यश्च ॥१५२॥
परवचनमात्मसंस्थैः प्रतिवचनैरुत्तरोत्तरग्रथितैः ।
१० आकाशपुरुषकथितैरङ्गविकारैरभिनयेच्च ॥१५३॥

तदयमर्थः । द्विविधमपि प्रहसनरूपं हास्यरसप्रधानमित्यर्थः । लक्षणविशेषं विशेषलक्षणम् । भगवत्तापसविप्रा यतिवानप्रस्थगृहस्थाः । अन्ये शाक्यादयस्तैरुपलक्षितं हास्यप्रधानवचनसम्बद्धं शीलादिना कुत्सितैः पुरुषैः अत एव प्रहस्यमानैः सामर्थ्यात्तैरेव भगवदादिभिर्युक्तम् । तथापि च भाषाचारौ यत्र न १५ विकृतावसत्याश्लीलरूपौ तथा विशेषेण भावैर्व्यभिचारिभिरुपपन्नानि पदानि कथाखण्डानि यस्मिन् । नियतगति एकप्रकारं यद्वस्तु तद्विषयः प्रहसनीयलक्षणोऽर्थो यत्र तच्छुद्धं प्रहसनम् । अत्र निर्वचनं यतः परिहासप्रधानान्याभाषणान्यत्र बाहुल्येन भवन्ति, तेन यत्रैकस्यैव कस्यचिच्चरितं दुष्टत्वात्प्राधान्येन प्रहस्यते तच्छुद्धमित्यर्थः । यत्र तु वेश्यादिभिर्योगोऽत्युल्बणं चाकल्पादि तदेकद्वारेणा- २० नेकवेश्यादिचरितेन हसनीयेन संकीर्णत्वात्संकीर्णम् ।

**आत्मानुभूतशंसीति** । एकेन पात्रेण हरणीयः सामाजिकहृदयं प्रापयितव्योऽर्थो यत्र स भाणः । एकमुखेनैव भण्यन्ते उक्तिमन्तः क्रियन्ते अप्रविष्टा अपि पात्रविशेषा यत्रेति स भाणः । तत्र स प्रविष्टपात्रविशेष आत्मानुभूतं वा शंसति परगतं वा वर्णयति । तत्र च प्रयोगयुक्तिमाह—

२५ **परवचनमिति** । परसम्बन्धि वचनं स्वयमङ्गविकारैरभिनयेत् । आह–आकाशे यानि पुरुषकथितानि दृष्टानि यत्र ह्यन्ये तं न पश्यन्त्येकश्च पश्यत्याकर्णयति च तत्र तद्वचनं स एवानुवदन् सामाजिकान्बोधयति । यथा **रामाभ्युदये**—

1. I. अधिकृत° 2. I. अनियत° 3. I. परसंश्रय° L परसंश्रय

धूर्तविटसंप्रयोज्यो नानावस्थान्तरात्मकश्चैव ।

एकाङ्को बहुचेष्टः सततं कार्यो बुधैर्भाणः ॥१५४॥

(57) सर्वरसलक्षणाढ्या युक्ता ह्यङ्गैस्तथा त्रयोदशभिः ।

वीथी स्यादेकाङ्का तथैकहार्या द्विहार्या वा ॥१५५॥

[ ना. शा. अ. १८ (N. S.); अ. २०. श्लो. १०-११, ४९-५४, ६०-६३, ६६-६७, ८२-१००, १०६-१०९, ११२-११४, ११६-११७ (C. S. S.) ]　५

---

'तापसः—( आकाशे । ) भोः ! वाद्वले क्वावकाशे रामभद्रस्तिष्ठति । किं ब्रवीषि । तस्या एव पथिकजनमनोहारिण्याः पुष्करिण्याः[1] परिसरे सीतया लक्ष्मणेन च सह न्यग्रोधच्छायायां सुखोपविष्टस्तिष्ठति ।' । ५८२ । इति । [ ]　१०

न केवलं परवचनमभिनयेत् । किं तु प्रतिवचनैः स्वोक्तैः सह एवोत्तरोत्तरग्रथितैर्योजनाभिरुपलक्षितैः । ननु योऽसावेकोऽत्र प्रविशति स क इत्याह—**धूर्तेति** । नानाप्रकारावस्थाविशेषा लोकोपयोगि[2]व्यवहारात्मका आत्मा वाच्यं यस्य । अत एव बहुचेष्टः सततं कार्य इति । सकलसामान्यपृथग्जनोपयोग्यत्र लोकव्यवहारो वेश्याविटादिवृत्तान्तात्मा निरूप्यत इति । बाहुल्येन पृथग्जनव्युत्पत्त्युपयोगिरूपकमिदम् । राजपुत्रादीनामपि शंभलीवृत्तान्तो ज्ञेय एवावञ्चनार्थमिति स प्रयोज्य इत्यर्थः ।　१५

**सर्वरसेति** । सर्वैं रसैः शृङ्गारादिभिर्लक्षणैश्च विभूषणादिभिः षट्त्रिंशता तत्साहचर्याद्गुणालङ्कारादिभिरपि सर्वैराढ्या । तदुपरि चाङ्गैस्त्रयोदशभिर्युक्ता तथा शब्दादुक्तप्रकारव्यतिरिक्तवक्रोक्त्यन्तरसहस्रसंकुलापीत्यर्थः ।　२०

**एकाङ्केति** । इतिवृत्तसंक्षेपमस्यां दर्शयति—**एकहार्येति** । आकाशपुरुषभाषितैरित्यर्थः ।

**द्विहार्येति** । उक्तिप्रयुक्तिवैचित्र्येणेत्यर्थः ।

पुमर्थोपयोगश्चामीषां प्रदर्श्यते । तथा हि—नाटके धर्मार्थकामानामन्यतमस्य गुणीभूतेतरार्थद्वयवृत्तेराराधनं राज्ञां[3] वृत्तं नाट्ये साक्षादिव पश्यन्त उपादेयतया प्रतिपद्यन्ते । तत्रापि धर्माराधने दान[4]तपोयागरूपमनुष्ठानं यशस्करं दृष्टफलमामु-　२५

---

1. A. B. drop पुष्करिण्याः　2. A. drops पयोगि.

3. A. drops राज्ञां वृत्तं ना　4. A. drops दान

(58) विष्कम्भकप्रवेशकरहितो यस्त्वेकभाषया भवति
अप्राकृतसंस्कृतया स सट्टको नाटिकाप्रतिमः ॥ इति ॥
[ ]

ध्मिकफलं च व्युत्पाद्यते । अर्थाराधने तु शत्रूच्छेदपुरःसरा यशोवतंसा लाभ-
५ पालनसमेधनफलविनियोगपर्यन्ता कपटातिसन्धानबहुला सन्धिविग्रहादिमिका राज-
वृत्तिर्व्युत्पाद्यते । कामाराधने चानुपजातसंभोगासु च दिव्यासु कुलजासु कृत-
शौचासु च स्वाधीनपतिकादिष्वष्टासु परस्परावलोकनादिभिर्दिवा संभोगो
रात्रौ वा सोपचार इत्याभ्यन्तरः कामोपभोगो राज्ञस्तासां च[1] राजनि
व्युत्पाद्यते। तथा राज्ञामाभ्यन्तरोपभोगे महादेवीदेवीस्वामिनीस्थापिताभोगिनी-
१० शिल्पकारिकानाटकीयानर्तक्यनुचारिकापरिचारिकासंचारिकाप्रे[2]षणकारिकामहत्तराप्रती-
हारीकुमारीस्थविरायुक्तिकासु यथोचिता राज्ञो वृत्तिस्तासां च यथास्वं
राजनि वृत्तिः । तथा स्थापत्यकञ्चुकिवर्षधरोपस्थायिकनिर्मुण्डादीना-
मन्तर्भवनकक्षासञ्चारः । तथा युवराजसेनापतिमन्त्रिसचिवप्राड्विवाककुमाराधि-
कृतानां बाह्यसंचारिणां वृत्तम् । तथा विदूषकशकारचेटादिवृत्तं व्युत्पाद्यते ।
१५ नायकप्रतिपक्षाणां च राज्ञामुक्तगुणविपर्ययादशुभोदयं वृत्तं त्याज्यतया व्युत्पाद्यते ।

प्रकरणे तु सचिवसार्थवाहादीनां पूर्ववत्स्वोचिता त्रिवर्गप्राप्तिस्तदर्जने स्थैर्यधै-
र्यादि, व्यापत्स्वमूढता, कुलस्त्रियां वृत्तं कुलस्त्रियाश्च भर्तरि वृत्तिर्वेश्यासु संभोगो
वैशिकनायकलक्षणं विटस्य गुणा दूतकर्मणि योज्यविवेको दूतकर्मसमागमे देशकालौ
नायिकाया रागापरागलिङ्गानि नायकयोरपरागकारणानि नायिकाहृदयग्रहणप्रयोगः ।
२० उत्तममध्यमाधमनायिकालक्षणयौवनलाभाः । चतुरोत्तममध्यमा नायकाः साम-
दानभेददण्डोपेक्षाणामुपायानां प्रयोगविभाग इत्यादि प्रयोगतो व्युत्पाद्यते ।

नाटिकायां तु विलासपराणां राज्ञां धर्मार्थाविरोधि रतिफलं वृत्तं नाटक
इव व्युत्पाद्यते ।

समवकारे च देवासुरनिमित्तो युद्धादिसंभवो विद्रवस्तथा कपटः संक्षिप्तश्च
२५ शृङ्गारो हास्यादि सर्वमेव लौकिकीभिरुपपत्तिभिर्हीनं दिव्यप्रभावसाध्यं व्युत्पाद्यते ।
पूर्वापरानुसन्धानशून्यधियां प्रहसनकपटविद्रवादिरुचीनां पुस्तावप्लुतलङ्घनछेद्यमा-
येन्द्रजालचित्रयुद्धादि बहुलयारभ्य्या परितोष उत्पाद्यते । तथा चाह—

(181) शूरास्तु वीररौद्रेषु नियुद्धेष्वाहवेषु च ।
बाला मूर्खाः स्त्रियश्चैव हास्यशोकभयादिषु ॥

1. A B. drop च 2. A. B. drop प्रेषणकारिका

आदिशब्दात् कोहलादिलक्षितास्तोटकादयो[1] ग्राह्याः । गेयं विभजते :—

**१९९) गेयं डोम्बिकाभाणप्रस्थानशिंगकभाणिकाप्रेरणरामाक्रीडहल्लीसकरासकगोष्ठीश्रीगदितरागकाव्यादि ॥४॥**

पदार्थाभिनयस्वभावानि डोम्बिकादीनि गेयानि रूपकाणि चिरंतनैरुक्तानि । तद्यथा— ५

(59) छन्नानुरागगर्भाभिरुक्तिभिर्यत्र भूपतेः ।
आवर्ज्यते मनः सा तु मसृणा डोम्बिका मता ॥

---

तुष्यन्तीति गम्यते । इष्टदेवताकर्मप्रभावानुकीर्तनाच्च तद्भक्तानां प्रीतिः । यात्राजागरादिषु प्रेक्षाप्रवर्तनं च । ईहामृगडिमयोरप्येवमेव । १०

व्यायोगे तु मन्त्रिसेनापतिप्रभृतीनां वृत्तं युद्धनियुद्धाधर्षणसंघर्षबहुलं व्युत्पाद्यते । उत्सृष्टिकाङ्के चोत्तमानां मध्यमानां च वैरस्यार्दितानां स्त्रीपरिदेवितबहुलं वृत्तं प्रेक्षकाणां चित्तस्थैर्यं विधातुं व्युत्पाद्यते । एवंविधव्यसनपतितानां चित्तस्थैर्यात्पुनरुन्नतिर्दृश्यत इति तत्प्रयोगदर्शनात्प्रतिपद्यमाना व्यसनेऽपि न विषीदन्ति । १५

प्रहसने तु स्त्रीबालमूर्खाणां हास्यप्रयोगदर्शनेन नाट्ये प्ररोचना क्रियते । ततः क्रमेण नाट्ये प्रवृत्ताः शेषरूपकैर्धर्मार्थकामेषु व्युत्पाद्यन्ते । प्रसङ्गतश्च भगवत्तापसविप्रादीनां वृत्तच्युतानां कापुरुषाणां वृत्तं शुद्धं तथा वेश्याचेटनपुंसकविटधूर्तबन्धकीप्रभृतीनां प्रवर्तकाख्यस्य च कामिनो वृत्तं संकीर्णं लोकवार्तादम्भधूर्तविवादबहुलं त्याज्यतया व्युत्पाद्यते । २०

भाणे च धूर्तविटवेश्याशंभलीनां परस्य वञ्चनपरं प्रेक्षकाणामवञ्चनीयत्वमवबोधादापादयितुं वर्ण्यते ।

वीथ्यां तु बहुविधा वक्रोक्तिविशेषा व्युत्पाद्यन्ते ।

सट्टके च नाटिकायामिव रतिफलं वृत्तं व्युत्पाद्यते । एवं नाटकादीनां स्वरूपं तत्फलं च दर्शितम् । तच्छरीरभूतसन्धिसन्ध्यङ्गादिलक्षणविस्तरस्तु भरतादेवावसेयः । २५

**मसृणेति** । त्रिविधो हि गेयकाव्यस्य प्रयोगः मसृण उद्धतो मिश्रश्च ।

---

1. I. कोलाहलादि

(60) नृसिंहसूकरादीनां वर्णनं जल्पयेद्यतः ।
नर्तकी तेन भाणः स्यादुद्धताङ्गप्रवर्तितः ॥

(61) गजादीनां गतिं तुल्यां कृत्वा प्रवसनं तथा ।
अल्पाविद्धं सुमसृणं तत्प्रस्थानं प्रचक्षते ॥

५ (62) सख्याः समक्षं पत्युर्यदुद्धतं वृत्तमुच्यते ।
मसृणं च क्वचिद्धूर्तचरितं शिङ्गकस्तु सः ॥

(63) बालक्रीडा[1]नियुद्धादि तथा सूकरसिंहजा ।
धवलादिकृता क्रीडा यत्र सा भाणिका मता ॥

(64) हास्यप्रायं प्रेरणं तु स्यात् प्रहेलिकयान्वितम् ।

१० (65) ऋतुवर्णनसंयुक्तं रामाक्रीडं तु भाष्यते ॥

(66) मण्डलेन तु यन्नृत्तं हल्लीसकमिति स्मृतम् ।
एकस्तत्र तु नेता स्याद्गोपस्त्रीणां यथा हरिः ॥
अनेकनर्तकीयोज्यं चित्रताललयान्वितम् ।
आचतुःषष्टियुगलाद्रासकं मसृणोद्धतम्[2] ॥

---

१५ तथा हि—**डोम्बिकासु**[2] नरपतिचाटुकप्राधान्येन प्रवृत्तासु सुकुमारमेव[3] शुद्धं रूपम् । **भाणकेषु** नृसिंहादिचरितवर्णने उद्धतमेव । यत्पुनर्मसृणेऽप्युद्धतं प्रविशति तदुचितमेव । तत्राप्यल्पत्वबहुलकृतो भेदः । पूर्वः **प्रस्थान**प्रबन्धः । उत्तरः **शिङ्गटक**भेदः । उद्धते तु मसृणानुप्रवेशाद्**भाणिका**भेदः । अन्यदपि **प्रेरणरामाक्रीडरासकहल्लीस**कादिकमल्पत्वबहुत्ववैचित्र्यकृतमिहैव प्रविष्टं वे-
२० दितव्यम् ।

ननु डोम्बिकाशिङ्गटकादौ अन्योन्यानुचितत्वं वाक्यानां ततश्चानन्वये कथं रञ्जकत्वमिति चेत्, न, देवतास्तुतेः स्त्रीपुंभावसमाश्रयस्य च शृङ्गारस्य सर्वत्रानुगमात् । तथा चाह–(182) 'देवस्तुत्याश्रयकृतं स्त्रीपुंभावसमाश्रयम् ।' इति । तत एव **चूडामणिडोम्बिकायां** प्रतिज्ञातम्—

---

1. I. बालाक्रीडा°
2. I. °द्धतें i. e. both mātrā and anusvāra
3. A. B. डोम्बिकासु 2. A. B. कुमार°

है द्वेवि डोम्बी णव्वमिसहिइ होमि हउं ।
चोरियमिहुणहं वंमहसारु कहेमि तउ ॥५८३॥ [ ]

चतुर्वर्गोपदेशस्य **राघवविजया**दिरागकाव्येषु दृष्टत्वात् । डोम्बिकादौ तु कामस्यैव प्रच्छन्नानुरागपरमरहस्योपदेशात् । 'यद्ग्रामामिनिवेशित्वम्' इत्यनेन मन्मथसारत्वेनाभिधानात् । सिंहशूकरधवलादिवर्णनेनापि भाणकप्रेरणभाणिकादावप्रस्तुतप्रशंसार्थान्तरन्यासनिदर्शनादिना पुरुषार्थस्यैवोपदेशदर्शनात् । ५

अथ पाठ्यस्य गेयस्य च रूपकस्य को विशेषः । अयमाख्यायते–पाठ्ये हि–अङ्गं गीतं चेत्युभयमप्रतिष्ठितम्[1] । तथा हि करकरणचारीमण्डलादि यत्तत्राङ्गोपयोगि तत्स्वरूपेण लयादिव्यवस्थया चानियतमेव, यथारसं प्रयुज्यमानत्वेन विपर्यासात् । गेये तु गीतमङ्गं च द्वयमपि स्वप्रतिष्ठम् । तथा हि—यस्य यादृशं लययतिस्वरूपादिकं निरूपितं तन्नविपर्येतिमन्त्रादिवत् । यद्यपि क्वचिद्वर्णाङ्गप्राधान्यं यथा प्रस्थानादौ, क्वचिद्वादप्राधान्यं यथा भाणकादिषु भ्रमतालपरिक्रमणादौ, क्वचिद्गीयमानरूपकाभिधेयप्राधान्यं यथा शिङ्गटकादौ, क्वचिन्नृत्तप्राधान्यं यथा डोम्बिलिकादिप्रयोगानन्तरं हुडुक्कारावसरे[2] । अत एव तत्र लोकभाषया **बहिमार्ग** इति प्रसिद्धिः । तथापि गीताश्रयत्वेन वाद्यादेः प्रयोग इति गेयमिति निर्दिष्टम् । रागकाव्येषु च गीतेनैव निर्वाहः । तथा हि—**राघवविजय**स्य विचित्रवर्णनीयत्वेऽपि ढक्करागेणैव निर्वाहः, मारीचवधस्य तु ककुभग्रामरागेणैवेति । किं च पाठ्ये साक्षात्कारकल्पानुव्यवसायसम्प्रत्युपयोगिनः पात्रं प्रति भाषानियमस्य नियतस्य छन्दोलङ्कारादेश्चाभिधानं दृश्यते । गीयमानं च नाभिनीयते असंगत्यापत्तेरपि तु यादृशा लयतालादिना यादृगर्थसूचनयोग्योऽभिनयः सात्त्विकादिः प्रधानरसानुसारितया प्रयोगयोग्यस्तदुचितार्थपरिपूर्णं ध्रुवागीतेन क्रियते । गेये च सूदादेरिव वस्तुभूतरूपरसादिमध्यपातिविषयविशेषयोजनया कृता प्रीतिः साध्या । डोम्बिकादेर्न नटस्येवालौकिकरूपप्रादुर्भावनया । १० १५ २०

तथा हि—डोम्बिकादौ[3] वर्णच्छटा वर्णादिप्रयोगे तावदभिनयकथैव नास्ति, किं तत्र विचार्यते, केवलनृत्तस्वभावं हि तत् । तदनन्तरं तु धारापरिक्रमपूर्वकलयप्रयोगावसरे । २५

पाआलअलेसेसाहिणि हु जय जय लच्छिवच्छलमलिआ ॥५७१॥

इत्यादि यद्गीयते तत्कस्योक्तिरूपम् । यदि तावन्नर्तितुमागताया लौकिक्या

1. C. वे. 2. N. हुडुत्कारावसरे 3. N. °दौ च

डोम्बिकाप्रभृतेर्नर्तक्यास्तदा सैवेदानीमेवंभूतं वस्तुरूपं लौकिकं वचनमभिधत्ते । गायनादिसंक्रमितस्ववाक्यतयेति कः साक्षात्कारकल्पार्थः । साक्षात्कारकल्पत्वाध्यवसायगोचरीकार्यत्वं[1] च पाठ्यस्य प्रधानोंऽशः । तेन यथा लोके कश्चित्कंचिदन्योपदेशगानादिक्रमेण वस्तूद्बोधनकरणद्वारेण वा छन्दोनुप्रवेशितया वा कस्यचिन्मनस्यावर्जनातिशयं विधत्ते नृत्यन्नपि गायन्नपि, तद्वदेव डोम्बिकाकाव्यादौ द्रष्टव्यम् ।

५

'छेद्दे वि डोम्बी[2]'

इत्यादावपि वचसि सैव डोम्बिका नरपतिपरितोषकार्थाभिधायिवचननिष्ठेन गीतेन वाद्येन नृत्येन च राजानमनुरञ्जयितुं गृहीतोद्यमा वक्रीत्वेन पूर्वं स्थिता मध्ये काचिदीदृशी चौर्यकामुककेलिलालसमानसा, काचित्पुनरेवंविधा, कश्चिदेवंभूतश्चौर्यकामुकः, कोऽप्येवंभूतस्तत्र काचिदेवं प्रौढदूतीत्येवमादि राजपुत्रहृदयानुप्रवेशयोग्यं तत्प्रसादनेन धनाद्यर्जनोपायमभिदधती तमेव राजपुत्रं परत्वेन तथैव[3] वा समुद्दिश्य अन्यदपि चेष्टितमभिधायान्ते डोम्बिकाकृत्यमेवोपसंहरति । गुणमालायां—

१०

जामि तारा अनुडिअ पुणु णव्वीसमि ' ॥ ५८५ ॥ [ ]

१५

इत्यादौ तत्र तु सा नृत्यन्ती डोम्बिका बहुतरोपरञ्जकगीतादिपटुपेटकपरिवृता त्वां प्रत्येवमहमुपश्लोकितवतीति तन्मध्यवर्तिगायनमुखसंक्रमितनिजवचना लौकिकेनैव रूपेण तद्गीयमानरूपकगतलयतालसाम्येन तावन्नृत्यति । तद्गीयमानपदार्थस्य च सातिशयमावर्जनीये राजादौ हृदयानुप्रवेशितां दर्शयितुं लौकिकव्यवहारगतहस्तभ्रूकर्मरोमाञ्चाक्षिविकारतुल्ययोगक्षेमतयैवाङ्गविकारादिसंभवमप्याक्षिपति । एवं गीतेन रञ्जनं प्राधान्येन विधाय तदुपयोगिनं चाङ्गव्यापारं प्रदर्श्य नृत्तेन पुनश्चित्तग्रहणं कुर्वती नृत्तं प्रधानभावं गीतं च तदुपसर्जनभावं नयन्ती तत एव तदभिनयमनाद्रियमाणा तद्गीयमानाङ्गभावाक्षिप्ततत्समुचितभावमेवाङ्गविक्षेपं करोति लयपरिष्वक्वणादौ[4] । तत्रेयत्यंशे लौकिकमात्रस्वभाव एव रामनटादिव्यवहारवत्का प्रयोज्यप्रयोजकभावाशङ्का । तदनन्तरं च यथैव सा गीतनृत्तादि प्रायुङ्क्त तथैव तत्सदृशं नर्तकी प्रयुङ्क्ते । न तु डोम्बिकां साक्षात्कारकल्पेन दर्शयति तदीयाहार्यादिना स्वात्मरूपप्रच्छादनाद्यभावात् । तत एव न डोम्बिकां साक्षात्कारकल्पेन सा दर्शयति, अपि तु तथैव[5] नृत्तं साभिनयं केवलं

२०

२५

1. A. B. गोचरीकार्यं 2. A. B. डोस्थि 3. A. B. तथैवा समु°
4. C. °परिष्कक्वणादौ N. परिष्वत्कणादौ 5. N. तदैव

गोष्ठे यत्र विहरतश्चेष्टितमिह कैटभद्विषः ।
रिष्टासुरप्रमथनप्रभृति तदिच्छन्ति गोष्ठीति ॥
यस्मिन् कुलाङ्गना पत्युः सख्यग्रे वर्णयेद्गुणान् ।
उपालम्भं च कुरुते गेये[1] श्रीगदितं तु तत् ॥
लयान्तरप्रयोगेण रासैश्चापि[2] विचित्रितम्[3] । ५
नानारसं सुनिर्वाह्यकथं काव्यमिति स्मृतम् ॥इति॥ [ ]

आदिग्रहणात् शम्पाच्छलितद्विपद्यादिपरिग्रहः । प्रपञ्चस्तु ब्रह्म-भरतकोहल[4]ादिशास्त्रेभ्योऽवगन्तव्यः ।

प्रेक्ष्यमुक्त्वा श्रव्यमाह—

**२००) श्रव्यं महाकाव्यमाख्यायिका कथा चम्पूरनिबद्धं च ॥५॥** १०

एतान् क्रमेण लक्षयति—

**२०१) पद्यं प्रायः संस्कृतप्राकृतापभ्रंशग्राम्यभाषानिबद्ध-भिन्नान्त्यवृत्तसर्गाश्वाससंध्यवस्कन्धकबन्धं सत्सन्धि शब्दार्थ-वैचित्र्योपेतं महाकाव्यम् ॥६॥**

छन्दोविशेषरचितं प्रायः संस्कृतादिभाषानिबद्धैर्भिन्नान्त्यवृत्तैर्यथा- १५संख्यं सर्गादिभिर्निर्मितं सुश्लिष्टमुखप्रतिमुखगर्भविमर्शनिर्वहण[5]संधिसुंदरं शब्दार्थवैचित्र्योपेतं महाकाव्यम् ।

मुखादयः संधयो भरतोक्ता इमे—

---

च प्रदर्शयतीति नालौकिकरूपान्तरप्रादुर्भावनेति । व्युत्पत्त्यभिसन्धानं च गेये नास्ति । पाठ्ये तु तदेव प्रधानं **भरतमुनि**प्रमृतीनां तथैव मूलतः प्रवृत्ते- २० रित्यलं बहुना अप्रस्तुतप्रपञ्चेनेति ।

**भिन्नान्त्यवृत्तैरिति** । उपक्रान्तवृत्तव्युदासेन सर्गादीनां वृत्तान्तरैरुपसंहारः कर्तव्य इत्यर्थः । यथा **कुमारसंभवे**—

---

1. I. यत्र 2. I. रागै 3. I. विवेष्टितं
4. I. °कोलाहलादि 5. P. L. निबर्हण°

(67) यत्र बीजसमुत्पत्तिर्नानार्थरससंभवा ।
काव्ये शरीरानुगता तन्मुखं परिचक्षते ॥३७॥

अथ स ललितयोषिद्भ्रूलताचारुशृङ्गं रतिवलयपदाङ्के चापमासज्य कण्ठे ।
सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः शतमखमुपतस्थे प्राञ्जलिः पुष्पधन्वा ॥५८६॥
[ कु सं. स. ३. श्लो. ६४ ]

५

यथा वा **हरिप्रबोधे** आर्यागीतिच्छन्दोबद्धाश्वासकान्ते पुष्पिताग्रा—
भगवति शयिते विभावरीणां द्युतिमपहृत्य यशोविभावरीणाम् ।
गतमशशितया विभावरीणां सघनमहः समतां विभावरीणाम् ॥५८७॥
[ ]

१० सन्धिबन्धेषु च नाराचतोटकादीनि विचित्राणि छन्दांसि दृश्यन्ते ।

**यत्र बीजेति** । बीजस्य यत्र समुत्पत्तिः कविप्रयत्नतो निबन्धः । नानारूपोऽर्थः प्रयोजनं येषां ते नानार्थाः संभवन्तीति संभवः । नानार्थरसाः संभवो यस्याः सा तथा । काव्ये नाटकादौ । तत्रैव सन्धीनां व्यक्ततयावभासात् ।

अत एव तत्रैवोदाहरिष्यते–**शरीरानुगता** इति । वृत्तानुगता–इति वृत्तव्यापिनी । तन्मुखम् । यथा **वेणीसंहारे** कुरुपाण्डवानामुभयेषां क्षेमप्रतिपादकं स्थापकस्य वचनं सहदेवः क्रुद्धस्य भीमसेनस्यानुकूल्येन शमनाय कुरुनिधनपरं व्याचचक्षे– १५

निर्वाणवैरदहनाः प्रशमादरीणाम् ॥५८८॥ [ वे. सं. प्रस्तावना. श्लो. ७]

इति । अत्र प्रशमोऽवसानमुदयनिरोधात् । यथा शान्तो वायुः शान्तोऽग्निरवसित इत्यर्थः । तदेवमरीणामवसानेन दाह्याभावान्निर्वाणवैरामयः पाण्डुतनया नन्दन्तु सह माधवेन । कुरुराजसुतास्तु सभृत्या रुधिरप्रसाधितभुवः क्षतशरीराः स्वर्गस्था भवन्त्विति शत्रुक्षयपूर्वकस्य पाण्डवानां समृद्धिरूपस्य फलस्य बीजं कविप्रयत्नादुत्पन्नम् । नानार्थरससंभवा चास्योत्पत्तिः । नाटकानेकत्वेन पात्रानेकत्वविवक्षया[1] वा नानार्थता रसानाम् । तथा हि–अत्र २०

एष कुरुसन्धानममृष्यमाणः पृथुललाटतटघटितभीषणभ्रुकुटिरापिबन्निव नः सर्वान् दृष्टिपातेन सहदेवानुयातः क्रुद्धो भीम इत एवाभिवर्तते ॥५८९॥ २५
[ वे. सं. प्र. ]

इति पारिपार्श्वकवचनात् सूचितक्रोधस्थायिभावानुभावो लाक्षागृहानलविषान्नसभाप्रवेशैस्त्यादिस्ववचनप्रकाशितस्वविभावो भीमसेनस्य रौद्रो रसः कुरुक्षयप्रयोजनो बीजेन प्रकाशितत्वाद्बीजोत्पत्तेरेव संभवन्निबद्धः । कुरूणां च कुलक्षय- ३०

1. A. B. °कत्वेन पात्रानेकत्वविवक्षाया

बीजस्योद्घाटनं[1] यत्र दृष्टनष्टमिव क्वचित् ।
मुखन्यस्तस्य सर्वत्र तद्धि प्रतिमुखं स्मृतम् ॥३८॥

निमित्तकः करुणः पाण्डवसिद्धिप्रयोजनो बीजोत्पत्तेरेव संभवन्निबद्धः । यथा दुर्योधनः शोचन्नाह—

अद्यैवावां रणमुपगतौ तातमम्बां च दृष्ट्वा
घ्रातस्ताभ्यां शिरसि विनतो हन्त दुःशासनश्च ।
तस्मिन् बाले प्रसभमरिणा प्रापिते तामवस्थां
पार्श्वे पित्रोरपगतघृणः किं नु वक्ष्यामि गत्वा ॥५९०॥ ५

[ वे. सं अं. ४. श्लो. १५ ]

तदेवं भीमसेनस्येव क्रोधात्मकं चेष्टितं शत्रुक्षयफलमित्युपादेयम् । दुर्योधनस्येव च दौरात्म्यभूयिष्ठं चेष्टितं शोकफलत्वात्त्याज्यमिति विधिनिषेधविषयव्युत्पत्तेर्नानार्थता पात्रानेकत्वाश्रया रसानाम् । १०

नाटकानेकत्वाद्यथा–सागरिकाप्राप्त्यर्थो वत्सराजस्य शृङ्गारः बीजसमुत्पत्तिरिति । बीजं समुत्पन्नमुक्तैर्विशेषणैर्विशिष्टमिष्यते । तथा हि बीजमेव काव्यशरीरव्यापि यतो मुखसन्धौ तस्योत्पत्तिः । प्रतिमुखे दृष्टनष्टमिव तस्योद्वाहनं गर्भे चोद्भेदस्तस्य अवमर्शे च गर्भनिर्भेदः । निर्वहणे च समानयनमिति काव्यशरीरव्यापिता । १५

बीजस्योद्घाटनमिति । अयमर्थः–दृष्टनष्टमिव कृत्वा तावन्मुखे 'द्वीपादन्यस्मात्–' इत्यादिना न्यस्तं भूमाविव बीजम्, अमात्येन सागरिकाचेष्टितं वसन्तोत्सवकामदेवपूजादिना तिरोहितत्वान्नष्टमिव, न हि तन्नष्टमेव । सागरिकाचेष्टितस्य हि बीजस्येव तदाच्छादकमप्युत्सवादिरूपं भूमिवत्प्रत्युत कार्यजननशक्त्युद्बोधकम्, तस्य दृष्टनष्टतुल्यं कृत्वा न्यस्तस्यात एव कुङ्कुमबीजस्य यदुद्घाटनं तत्कल्पं यत्रोद्घाटनं सर्वत्रैव कथाभागसमूहे स प्रतिमुखम् । प्रतिराभिमुख्ये । मुखस्याभिमुख्येन[2] यतोऽत्र वृत्तिः । पराङ्मुखता हि दृष्टनष्टकल्पता । तथा हि रत्नावल्याम्— २०

' परपेसणदूसिदं[3] पि सरीरमेदस्स दंसणेण अज्ज मे बहुमदं[4] संपण्णम्' ॥५९१॥ २५

[ र. अं. १. पृ. ४७ (N. S.)

1. I. °स्योत्पाटनं
2. A. drops स्याभिमुख्येन 3. N. °करिसिदं 4. A. B. बहुमुदं

उद्भेदस्तस्य बीजस्य प्राप्तिरप्राप्तिरेव वा ।
पुनश्चान्वेषणं यत्र स गर्भ इति संज्ञितः ॥३९॥

इत्यादिसागरिकोक्तेरनन्तरं सुसंगतारन्वितराजतत्समागमपर्यन्तं काव्यं द्वितीयाङ्कगतं प्रतिमुखसन्धिरुद्घाटितत्वात्वाद्बीजार्थस्य ।

५ **उद्भेदस्तस्येति** । प्राप्तिरप्राप्तिरन्वेषणमित्येवंभूताभिरवस्थाभिः पुनः पुनर्भवन्तीभिर्युक्तो गर्भसन्धिः । प्राप्तिसंभवाख्ययावस्थया युक्तत्वेन फलस्य गर्भीभावात् । तथा हि रत्नावल्यां द्वितीयाङ्के सुसंगता—

'सहि अदक्खिण्णा दाणि तुवं[1] जा एवं भट्टिणा हत्थेण गहिदा अज्ज वि कोवं न मुञ्चसि[2] ' ॥५९२॥ [ र. अं. २. पृ. ९७ ]

१० इति प्राप्तिरूप उद्भेदः । ततोऽत्र

सागरिका–( सभ्रूभङ्गम् । ) सुसंगदे इआणिं पि न विरमसि ॥५९३॥
[ र. अं. २. पृ. ९८ ]

इति कुमारीभावसमुचितकृतककोपेनापि परि[3]पूर्णरतिप्रकाशनादन्वेषणम् । ततो 'भो एसा खु अवरा देवी वासवदत्ता' ॥५९४॥ [ र. अं. २. पृ. ९९ ]

१५ इति विदूषकोक्ते राजनि सचकितं सागरिकां मुञ्चति सागरिकासुसंगतयोश्च निष्क्रमाद्वासवदत्ताप्रवेशाच्चारभ्य तृतीयाङ्के प्रवेशके—

साहु रे अमच्च वसन्तय[4] साहु । अदिसइदो तह अमच्चजोअन्धराअणो इमाए संधिविग्गहचिन्ताए[5] ॥ ५९५ ॥ [ र. अं. ३. पृ. १०९ ]

इति काञ्चनमालयोक्तं यावदप्राप्तिस्ततोऽस्याः

२० अज्जं क्खु मए राअउलाओ पडिणीअत्तन्तीए[6] चित्तसालिआदुआरे वसन्तअस्स सुसंगदाए सह आलावो सुदो' [ र. अं. ३ पृ. ११० ] इति आरभ्य

ह्रिया सर्वस्यासौ हरति विदितास्मीति वदनं
द्वयोर्दृष्ट्वालापं कलयति कथामात्मविषयाम् ।
सखीषु स्मेरासु प्रकटयति वैलक्ष्यमिति मे
२५ प्रिया प्रायेणास्ते हृदयनिहितातङ्कविधुरम् ॥५९६॥
[ र. अं. ३. श्लो. ४. पृ. ११५ ]

1. A. B. तुमं 2. A. B. मुंचदि. 2. A. drops पूर्णर
4. A. B. वसन्तया 3. B. drops from संधि to मए
6. A. B. पडिअन्तीए

तद्वार्तान्वेषणाय गतः चिरयति वसन्तकः [ र. अं. ३. पृ. १२५ ]

इति राजोक्तियावदन्वेषणम्[1] । ततश्च—

ही ही ! भो कोसम्बीरज्जलम्भेणावि न तादिसो पिअवअस्सस्स परिदोसो आसि,[2] जादिसो मम सआसादो पियवअणं सुणिअ भविस्सदि त्ति' ॥५९७॥

[ र. अं. ३. पृ. १३५ ] ५

इत्यादि विदूषकोक्तेन प्रासितोऽस्यां समागमसङ्केतस्थानप्राप्तिं यावदन्वेषणम् । ततः—

प्रिये पश्य पश्य

उदयोर्वीभृत एष त्वद्वदनापहृतकान्तिसर्वस्वः ।

पूत्कर्तुमिवोर्ध्वकरः स्थितः पुरस्तान्निशानाथः ॥५९८॥ [र. अं. ३ श्लो. १२] १०

इति राजोक्तिपर्यन्तं परिपूर्णा प्राप्तिः । ततः—

दर्पः स्यादमृतेन चेदिह तदप्यस्त्येव बिम्बाधरे ॥५९९॥

[ र. अं. ३. श्लो. १३ ]

इति वासवदत्तामुखोद्घाटनादनन्तरम्[3]—

कथं देवी वासवदत्ता । वयस्य किमेतत् । विदूषकः—(सभयं) अम्हाणं जीविदसंसओ ॥६००॥ [ र. अं. ३. पृ. १३३-३४ ] १५

इत्यादिना अप्राप्तिः । अस्यां च

'दिट्ठिआ इमिणा विरइदभट्टिणीवेसेण अणभिण्णादा केणवि इदो च दुस्साला दो णिक्खंतम्हि[4] ॥६०१॥ [ र. अं. ३. पृ. १३८ ]

इति सागरिकोक्त्या अन्वेषणम् । ततश्च सागरिकया[5] लतापाशे कृते २०

कहं एसा देवी वासवदत्ता उब्बन्धिय णअं वावादेदि ॥६०२॥

[ र. अं. ३. पृ. १४१ ]

इति विदूषकोक्ते राजनि च समुपेत्य कण्ठपाशमपनयति-

सागरिका-अज्जउत्त, मुञ्च मुञ्च[6] । पराहीणो क्खु अअं जणो ण पुण मरिदुं

1. N. वत्सराजो°

2. A. drops आसि जादिसो 3. N. °नन्तरं राजा

4. N. केणवि इमादो चित्तसालादो णिक्कमन्ती ण लक्खिदह्मि

5. A. drops °गरिकया लतापशे कृते कहं र°

6. A. B. drop one मुंच

२५

गर्भनिर्भिन्नबीजार्थो विलोभनकृतोऽपि वा
क्रोधव्यसनजो वाऽपि स विमर्शः प्रकीर्तितः ॥४०॥

ईदिसं अवसरं पावेदि । (पुनः कण्ठे पाशं दातुमिच्छति । ) राजा—(निर्वर्ण्य सहर्षम् । ) कथं प्रिया मे सागरिका ।

५ अलमलमतिमात्रं साहसेनामुना ते त्वरितमयि विमुञ्च त्वं लतापाशमेनं ।
चलितमपि निरोद्धुं जीवितं जीवितेशे क्षणमिह मम कण्ठे बाहुपाशं निधेहि।६०३।
[ र. अं. ३. श्लो. ९७ ]

इत्यादिना स्फुटमेव प्राप्तिरित्येवं गर्भः । अप्राप्त्यंशश्चात्रावश्यंभावी । अन्यथा हि संभावनात्मा प्राप्तिसंभवः कथं निश्चय एव हि स्यात् । विमर्शे

१० त्वप्राप्तेरेव प्रधानता, प्राप्त्यंशस्य च न्यूनतेति विशेष[1]: ।

**गर्भनिर्भिन्नेति** । बीजशब्देन बीजफलम् । अर्थशब्देन निवृत्तिरुच्यते । तेन गर्भान्निर्भिन्नं प्रदर्शितमुखं बहिर्निःसरणोन्मुखं यद्बीजफलं तस्य योऽर्थो निवृत्तिः पुनस्तत्रैव च प्रवेश इव यत्र स विमर्शसन्धिः ।

**स इति** । तच्छब्देन यत्रेत्याक्षिप्तम् । सा च निवृत्तिः क्रोधेन वा

१५ निमित्तेन लोभेन वा व्यसनेन वा शापादिना वा। अपिशब्दाद्विघ्ननिमित्तान्तराणां प्रतिपदमशक्यनिर्देशानां संग्रहः । तत्र क्रोधाद्यथा **रत्नावल्यां** तृतीयेऽङ्के क्रोधावेशेन वासवदत्तया कारानिक्षिप्तायां सागरिकायाम् । तथा हि तत्र चतुर्थेऽङ्के प्रवेशकः सागरिकाप्राप्तिसन्देहेन करुणरसात्मकः । अत्रैव सागरिकाप्राप्तिसन्देहं मन्यमान आह राजा–

२० अम्भोजगर्भसुकुमारतनुस्तदासौ कण्ठग्रहे प्रथमरागघने विलीय ।
सद्यः पतन्मदनमार्गणरन्ध्रमार्गैर्मन्ये मम प्रियतमा हृदयं प्रविष्टा ॥६०४॥
[ र. अं. ४. श्लो. २ ]

योऽपि मे विश्वासस्थानं वसन्तकः सोऽपि देव्या संयतः । तत्कस्याग्रतो बाष्पमोक्षं करिष्ये' ॥६०५॥ पुनरत्रैव—

'अप्पिअं तेण पारेमि आचक्खिदुम्' इति विदूषकोक्ते 'राजा–(समाश्वस्य)

२५ प्राणाः परित्यजत मां ननु सत्पथोऽयं
हे दक्षिणा भवत मद्वचनं कुरुध्वम् ।
शीघ्रं न यात यदि तन्मुषिताः स्थ मूढा
याता सुदूरमधुना गजगामिनी सा ॥६०६॥ [ र. अं. ४. श्लो. ३ ]

1. A. शेषः

समानयनमर्थानां मुखाद्यानां सबीजिनाम्[1] ।

नानाभावोत्तराणां यद्भवेन्निर्वहणं[2] तु तत् ॥ इति ॥४१॥

[ना. शा.अ. १९. (N. S.); अ. २१, श्लो. ३९–४३ (C. S. S.)]

शब्दवैचित्र्यं यथा–असंक्षिप्तग्रन्थत्वं, अविषमबन्धत्वं, अनति-

---

इति राज्ञः सागरिकाप्राप्तिर्नैराश्यरूपैव ।  ५

'भो, मा अण्णहा संभावेहि । सा खु देवीए उज्जेणिं पेसिदा । अदो मए अप्पिअं ति भणिदम्' ॥६०७॥ इति[3] विदूषकोक्त्या सन्देहमानीता । तथा हि तद्विसृष्टां रत्नमालां हृदये विन्यस्य पुनराह—

अहह !

कण्ठाश्लेषं समासाद्य तस्याः प्रभ्रष्टयानया ।  १०

तुल्यावस्था सखी चेयं तनुराश्वास्यते मम ॥६०८॥ [र. अं. ४ श्लो. ४]

इतीन्द्रजालप्रयोगे यावद्विघ्ने वासवदत्ताक्रोधो निमितम् । एवं लोभादावुदाहार्यम् ।

**समानयनमर्थानामिति** । मुखाद्यानां चतुर्णां सन्धीनां येऽर्थाः प्रारम्भयत्नप्रत्याशा[? प्राप्त्याशा]नियताप्तिलक्षणास्तेषां सह बीजिभिर्बीजविकारैः क्रमेणावस्थाचतुष्टये भवद्भिरुत्पत्त्युद्घाटनोद्भेदगर्भनिर्भेदलक्षणैर्वर्तमानानां नानाविधैः सुखदुःखात्मकै रतिहासशोकक्रोधादिभिर्भावैरुत्तराणां चमत्कारास्पदत्वेन जातोत्कर्षाणां यत्समानयनं यस्मिन्नर्थराशौ समानीयन्ते फलनिष्पत्तौ योज्यन्ते तन्निर्वहणं फलयोगावस्थया व्याप्तम् । तत्र यदा सुखप्राप्तेः फलत्वं तदा रतिहासोत्साहविस्मयस्थायिबाहुल्यं धृतिहर्षगर्वौत्सुक्यमदादिव्यभिचारिभावबाहुल्यं च[4] प्रारम्भादीनाम् । दुःखहानेस्तु[5] फलत्वे क्रोधशोकभयजुगुप्सास्थायिभावबाहुल्यम्, आलस्यौग्र्यव्यभिचारिभावबाहुल्यं[6] च दृष्टव्यम् । उदाहरणम्—**रत्नावल्या**मैन्द्रजालिकप्रवेशात्प्रभृत्यासमाप्तेरेषामवस्थासन्ध्यादीनां नायकप्रतिनायकतदमात्यतत्परिवारनायिकादिमुखेनापि नियोजनम् । न त्वेकमुखेनैवेति ।  १५ २०

**असंक्षिप्तग्रन्थत्वमिति** । अनेन ग्रन्थगौरवमाचक्षाणः कथारसविच्छेदशङ्किनां मनांस्यावर्जयति ।  २५

---

1. I. सजीविना  2. P. निबर्हणं L निर्वहण

3. A. B. drop इति  4. C. drops च

5. C. drops from हाने to एषा  6. A. drops भाव

विस्तीर्णपरस्परसंबद्धसर्गादित्वं[1],आशीर्नमस्कारवस्तुनिर्देशोपक्रमत्वं वक्तव्यार्थप्रतिज्ञानतत्प्रयोजनोपन्यासकविप्रशंसा[2]दुर्जनसुजन[3]स्वरूपवदादिवा-

**अविषमबन्धत्वमिति**। अनेन शब्दसन्दर्भवेदिनां मनो मुदमादधाति।

**अनतिविस्तीर्णपरस्परसम्बद्धसर्गादित्वमिति**। अनेन ग्रन्थविस्तरभीरूणां चित्तमाकर्षति । सर्गादीनां परस्परमेकवाक्यतया महावाक्यात्मकस्य प्रबन्धस्योपकारितां च दर्शयति ।

**आशीर्नमस्कारवस्तुनिर्देशोपक्रमत्वमिति** । तत्र आशीर्यथा **हरविलासे**—

ओमित्येतत्परं[4] ब्रह्म श्रुतीनां मुखमक्षरम् ।
प्रसीदतु सतां स्वान्तेष्वेकं त्रिपुरुषीमयम् ॥६०९॥ [ हरविलास. ]

नमस्कारो यथा **रघुवंशे**—

'वागर्थाविव' ॥६१०॥ [ र. वं. स. १. श्लो. १ ]

इत्यादि । वस्तुनिर्देशो यथा **हयग्रीववधे**—

आसीद्दैत्यो हयग्रीवः ॥६११॥ इत्यादि ।

**वक्तव्यार्थे**त्यादि । वक्तव्यार्थप्रतिज्ञानं यथा **सेतुबन्धे**—

तं तिअसबन्दिमोक्खं समत्तलोअस्स हिअअसल्लुद्धरणम् ।
सुणह[5] अणुरायइधं सीयादुक्खक्खयं दसमुहस्स वहम् ॥६१२॥
[ से. ब. आश्वास १. श्लो. १२ ]

प्रयोजनोपन्यासो यथा तत्रैव—

परिवड्ढइ विन्नाणं संभाविज्जइ जसो विढप्पन्ति गुणा ।
सुव्वइ सुपरिसचरिअं किं तं जेण न हरन्ति कहालावा[6] ॥६१३॥
[ से. ब. आश्वास १. श्लो. १० ]

कविप्रशंसा यथा **रावणविजये**—

सयलं चेव निबन्धं दोहिं पणहिं कलुसं पसण्णं च ठिअं ।
जाणन्ति कईण कई सुद्धसहावेहिं लोअणेहिं च हिअअम् ॥६१४॥

दुर्जनसुजनस्वरूपं यथा **हरविलासे**—

1. N. °निबद्ध° 2. I. °र्थतत्प्रति° 3. I. सुजनदुर्जन°
4. N. °त्येकाक्षरं ब्रह्म 5. A. B. सुहं 6. N. कव्वालावा

श्रयत्वं, दुष्करचित्रादिसर्गत्वं, स्वाभिप्रायस्वनामेष्टनाममङ्गलाङ्कितसमाप्तित्वमिति ।

अर्थवैचित्र्यं यथा—चतुर्वर्गफलोपायत्वं, चतुरोदात्तनायकत्वं, रसभावनिरन्तरत्वं, विधिनिषेधव्युत्पादकत्वं, सुसूत्रसंविधानकत्वं,

---

इतस्ततो भषन्[1]भूरि न पतेत् पिशुनः शुनः ।
अवदाततया किं च न भेदो हंसतः सतः ॥६१५॥ [ ह. वि. ]

**दुष्करचित्रादिसर्गत्वमिति** । आदिग्रहणेन यमकश्लेषादयो गृह्यन्ते । ते च **किरातार्जुनीयादौ** दृश्यन्त एव ।

**स्वाभिप्रायेत्यादि** । तेष्वभिप्रायाङ्कता यथा—धैर्यं **मायुराजस्य**, उत्साहः **सर्वसेनस्य**, अनुरागः **प्रवरसेनस्ये**ति । स्वनामाङ्कता यथा— **राजशेखरस्य हरविलासे** । इष्टनामाङ्कता यथा—लक्ष्म्यङ्कता **किराते भारवेः**, श्र्यङ्कता **शिशुपालवधे माघस्य** । मङ्गलाङ्कता यथा–अभ्युदयः **कृष्णचरिते**,[2] जय **उषाहरणे**,[3] आनन्दः **पञ्चशिखशूद्रकथायाम्**[4] इति ।

**चतुर्वर्गफलोपायत्वमिति** । अनेन चत्वारो वर्गा धर्मार्थकाममोक्षाः त एव व्यस्ताः समस्ता वा फलं तस्योपायतया महाकाव्यं ज्ञापयन् मुक्तकादिभ्यो भेदमाचष्टे ।

**चतुरोदात्तनायकत्व**मिति । अनेन कथाशरीरव्यापिनो नायकस्य धर्मार्थकाममोक्षेषु वैचक्षण्यमभिदधान आश्रय[5]विभूत्योरप्युत्कर्षमभिदधाति ।

**रसभावनिरन्तरत्व**मिति । अनेन रसग्रहणेनापि तत्कारणभूतानां भावानां परिग्रहे पृथग्भावग्रहणेन रसभावानां परस्परं कार्यकारणभावमभिदधद्रसेभ्यो भावा भावेभ्यो रसा रसेभ्यश्च रसा इति नैरन्तर्यस्य रसभावसाध्यत्वेन भोजनस्येवैकरसस्य प्रबन्धस्यापि वैरस्यमपाकरोति ।

**विधिनिषेधव्युत्पादकत्व**मिति । अनेन गुणवतो नायकस्योत्कर्षप्रकाशनेन दोषवतश्चोच्छेदप्रदर्शनेन जिगीषुणा गुणवतैव भाव्यं न दोषवतेति व्युत्पादयति ।

**सुसूत्रसंविधानकत्व**मिति । अनेन प्रोक्तलक्षणाः पदार्थास्तथा निबन्धनीया यथा प्रबन्धस्य शोभायै भवन्तीति कवीन् शिक्षयति ।

---

1. A. B. भषन्　2. C. °चरितेन
3. C. उदाहरेण　4. N. °शूद्रककथायां　5. C. आशय

नगराश्रमशैलसैन्यावासार्णवादिवर्णनं, ऋतुरात्रिंदिवार्कास्तमयचन्द्रोदयादिवर्णनं, नायकनायिकाकुमारवाहनादिवर्णनं, मन्त्रदूतप्रयाणसंग्रामा-

**नगराश्रमे**त्यादिना देशप्रशंसामुपदिशति। नगरवर्णनं यथा **हरिविजय-रावणविजय-शिशुपालवध-कुमारसंभवादौ**। आश्रमवर्णनं यथा **रघुवंश-कीरातार्जुनीयादौ**। शैलवर्णनं **किरातार्जुनीयादौ**। सैन्यावासवर्णनं **माघे**। **अर्णव**वर्णनं **सेतुबन्धादौ**।

**ऋत्वि**त्यादिना कालावस्थोपवर्णनं लक्षयति। तत्र ऋतुवर्णने शरद्वसन्तग्रीष्मवर्षादिवर्णनानि **सेतुबन्ध-हरिविजय—रघुवंश-हरिवंशादौ**। रात्रिवर्णनं **किरातार्जुनीय-कुमारसंभव-शिशुपालवध-हयग्रीववधादौ**। दिवसवर्णनं प्रभातपूर्वाह्णमध्याह्नापराह्णवर्णनानि **शिशुपालवध-किरातार्जुनीयादौ**। अर्कास्तसमयवर्णन **कुमारसंभव-हरिविजय-रावणविजय-सेतुबन्धादौ चन्द्रोदयवर्णनं कुमारसंभव-किरातार्जुनीय—शिशुपालवध—सेतुबन्धा**दाविति।

**नायके**त्यादिना पात्रविशेषाभिनन्दनं सूचयति। तत्र नायकवर्णनं **हरिविजय-रावणविजय-जानकीहरण-रघुवंशादौ**। नायिकावर्णनं **कुवलयाश्वचरित-कुमारसंभव-जानकीहरण—सुभद्राहरणादौ**। कुमारवर्णनं **रघुवंशादौ**। **वाहन**वर्णनेत्यादिना हस्त्यश्वगरुत्मत्पुष्पकादिवर्णनानि **हरिविजय-रावणविजयादौ**।

**मन्त्रे**त्यादिना अर्थप्रधानचेष्टानामुपदेशाच्चतुर्वर्गफलत्वेऽपि भूयसार्थोपदेशकृन्महाकाव्यं भवतीत्यभिधत्ते। तत्र मन्त्रः पञ्चाङ्गः प्रतिपादितः। स यथा **किरातार्जुनीय-शिशुपालवध-भट्टिकाव्य-हयग्रीववधादौ**। दूतस्त्रिधा-निसृष्टार्थः, परिमितार्थः, शासनहरश्च। निसृष्टार्थो यथा—**उद्योगपर्वणि** वासुदेवः, **हरिविजये** वा सात्यकिः[1]। परिमितार्थो यथा-**रामायणे**ऽङ्गदः। शासनहरो यथा—**कादम्बर्यां** केयूरक इति। **प्रयाणं** त्रिधा-स्वशक्त्युपचये परव्यसने, अभिमतार्थसिद्धये च। तत्र स्वशक्त्युपचये यथा—रघो **रघुवंशे**। परव्यसने यथा-जरासन्धव्यसनिनः शिशुपालस्योच्छेदाय वासुदेवस्य **शिशुपालवधे**। अभिमतार्थस्वसिद्धये यथा-विष्णोः पारिजातहरणाय **हरिविजये**, यथा वा-दिव्यास्त्रलाभायार्जुनस्य **किरातार्जुनीये** इति। **संग्राम**स्त्रिधा-समः, विषमः, समविषम इति। तत्र समः-द्वन्द्वयुद्धे चतुरङ्गयुद्धे च। द्वन्द्व-

1. A. B. C. सत्यकिः

भ्युदयादिवर्णनं, वनविहारजलक्रीडामधुपानमानापगमरतोत्स्वादिवर्णन-
मिति ।

उभयवैचित्र्यं यथा–रसानुरूपसंदर्भत्वं, अर्थानुरूपछन्दस्त्वं, सम-

युद्धं यथा–रामरावणयोः । चतुरङ्गयुद्धं यथा कुरुपाण्डवानाम् । विषमो यथा–
रामस्य खरदूषणत्रिशिरोभिः सह ।  ५

चतुर्दशसहस्राणि चतुर्दश च राक्षसाः ।
हतान्येकेन रामेण मानुषेण पदातिना ॥६१६॥ इति । [ ]

समविषमो यथा—महेश्वरार्जुनयोः **किरातार्जुनीये**, रघुमघोनोर्वा **रघु-
वंश** इति । **अभ्युदय**स्त्रिधा—अरिविजयः, स्त्रीलाभः, पुत्रोत्पत्तिः । तत्रा-
रिविजयो द्विधा–शत्रूच्छेदेन, तदुपनत्या च । स पूर्वो **रावणवधादौ**  १०
द्वितीयो **हरिविजयादौ** । स्त्रीलाभो यथा—इन्दुमतीस्वयंवरे पुत्रलाभो दिली-
पस्य **रघुवंश** इति ।

**वनविहारे**त्यादिना सोद्दीपनविभावस्य संभोगशृङ्गारस्योपदेशात् । मन्त्र-
दूतप्रयाणसंग्रामाभ्युदयादिभिस्तानर्थानधिगम्य तैस्तैर्विलासविशेषैः कामसेवया तदु-
पयोगः कर्तव्य इति शिक्षयति । तत्र वनविहारो द्विधा-मृगयादिः, पुष्पावचा-  १५
यादिश्च । तत्राद्यो यथा—दशरथस्य **रघुवंशे** । द्वितीयो यथा–यदूनां **शिशु-
पालवधे**, अप्सरसां वा **किरातार्जुनीय** इति । **जलक्रीडा** द्विधा–एकस्य
वा बह्वीभिः स्वयोषाभिर्बहूनां वा बह्वीभिर्यथास्वमङ्गनाभिः । तत्राद्या यथा—
कार्तवीर्यस्य नर्मदायाम्, कुशस्य वा सरय्वाम् । द्वितीया यथा–अप्सरसां सिद्ध-
सिन्धौ, यदूनां वा रैवतकह्रद इति । **मधुपानं** द्विधा–गोष्ठीगृहे, वासभवने  २०
च । तत्राद्यं **हरिविजये शिशुपालवधे** च । द्वितीयं **किरातार्जुनीये
कुमारसंभवे** च । **मानापगमो** द्विधा–प्रायत्निकः, नैमित्तिकश्च । प्राय-
त्निको **हरिविजये** सत्यभामायाः । नैमित्तिको रामाल्लङ्कानिशाचरीणां **सेतु-
बन्धे** । **रतोत्सवो**ऽपि । द्विधा–सामान्यतः विशेषतश्च । सामान्यतः
**किरातार्जुनीये शिशुपालवधे**[1] च । विशेषतः **कुमारसंभवे जानकी-**  २५
**हरणे** च ।

**रसानुरूपसन्दर्भत्व**मिति । अनेन रतिप्रकर्षे कोमलः, उत्साहप्रकर्षे
प्रौढः, क्रोधप्रकर्षे कठोरः, शोकप्रकर्षे मृदुः, विस्मयप्रकर्षे तु स्फुटः शब्दसन्दर्भो
विरचनीय इत्युपदिशन्—

1. A. drops शिशुपालवधे च । विशेषतः

स्तलोकरञ्जकत्वं, सदलङ्कारवाक्यत्वं, देशकालपात्रचेष्टाकथान्तरानुषञ्जनं, मार्गद्वयानुवर्तनं चेति ।

(183) नैकमोजः प्रसादो वा रसभावविदः कवेः [ ]
इति ख्यापयति ।

५ **अर्थानुरूपच्छन्दस्त्व**मिति । अनेन शृङ्गारे द्रुतविलम्बितादयः, वीरे वसन्ततिलकादयः, करुणे वैतालीयादयः, रौद्रे स्रग्धरादयः, सर्वत्र शार्दूलविक्रीडितादयो निबन्धनीया इत्युपदिशति ।

**समस्तलोकरञ्जकत्व**मिति । अनेनालौकिकतां परिहरन् प्रीतिनिबन्धन[1]स्य प्रबन्धस्य[2] लोके प्रतिष्ठया प्रयासवैयर्थ्यमपाकरोति ।

१० **सदलङ्कारवाक्यत्व**मिति । अनेन यद्यप्युपात्तलक्षणानां गुणानामलङ्काराणां च स्वरूपसांकर्येणैव काव्यशोभाकरत्वं तथाप्यलङ्कारवत्त्वेनैवं भारं भूयसा उद्वोढुमलमित्येतदुपर्युपदेशेनोपपादयति ।

**देशे**त्यादिना परिपूर्णाङ्गेऽपि संविधानके देशकालाद्यविरोधेन तद्वर्णनादिकं निर्दिशति । तत्र देशान्तरानुषञ्जनं यथा--

१५ मुदे मुरारेरमरैः सुमेरोरानीय यस्योपचितस्य शृङ्गैः ।
भवन्ति नोद्दामगिरां कवीनामुच्छ्रायसौन्दर्यगुणा मृषोद्याः ॥६१७॥
[ शि. व. स. ४. श्लो. ३० ]

**कालान्तरानुषञ्जनं** यथा---

सपदि हरिसखैर्वधूनिदेशाद्ध्वनितमनोरमवल्लकीमृदङ्गैः ।
२० युगपदनुगुणस्य संनिधानं वियति वने च यथायथं वितेने ॥६१८॥
[ कि. अ. स. १०. श्लो. १८ ]

**पात्रान्तरानुषञ्जनं** यथा---

करिष्यसे यत्र सुदुष्कराणि प्रसत्तये गोत्रभिदस्तपांसि ।
शिलोच्चयं चारुशिलोच्चयं[3] तमेष[4] क्षणान्नेष्यति गुह्यकस्त्वाम् ॥६१९॥
२५ [ कि. अ. स. ३. श्लो. २९ ]

**चेष्टान्तरानुषञ्जनं** यथा---

मदस्रुतिश्यामितगण्डलेखाः क्रामन्ति विक्रान्तनराधिरूढाः ।
सहिष्णवो नेह युधामभिज्ञा नागा नगोच्छ्रायमिवाक्षिपन्तः ॥६२०॥
[ कि. अ. स. १६. श्लो. २ ]

---

1. °निबन्धस्य 2. A. B. drop प्रबन्धस्य
3. C. drops चारुशिलोच्चयं 4. C. तामवक्षणान्ने°

तत्र संस्कृतभाषानिबद्धसर्गबन्धं **हयग्रीववधादि**, प्राकृतभाषानिबद्धाश्वासकबन्धं **सेतुबन्धादि**, अपभ्रंशभाषानिबद्धसंधिबन्धं **अब्धिमथनादि**, ग्राम्यापभ्रंशभाषानिबद्धावस्कन्धकबन्धं **भीमकाव्यादि** । प्रायोग्रहणात् संस्कृतभाषयाऽप्याश्वासकबन्धो **हरिप्रबोधादौ**[4] न दुष्यति । प्रायोग्रहणादेव **रावणविजयहरिविजयसेतुबन्धे**ष्वादितः समाप्ति- ५

---

**कथान्तरानुषञ्जनं** यथा—

कुसुमायुधपत्नि दुर्लभस्तव भर्ता न चिराद्भविष्यति ।

शृणु येन गतः[1] स कर्मणा शलभत्वं हरलोचनार्चिषाम् ॥६२१॥

[ कु. सं. स. ४. श्लो. ४० ]

**मार्गद्वयानुवर्तन**मिति । अनेन महाकवीनां समयमुपलक्षयति । तत्र— १०

(184) गुणतः प्रागुपन्यस्य नायकं तेन विद्विषाम् ।

निराकरण[2]मित्येष मार्गः प्रकृतिसुन्दरः ॥

(185) वंशवीर्यश्रुतादीनि वर्णयित्वा रिपोरपि ।

तज्जयान्नायकोत्कर्षकथनं च धिनोति नः[3] ॥ इति ।

[ का. द. परि. १. श्लो. २१–२२ ] १५

अथ किमेतानि नगरार्णववर्णनादीनि समुच्चयप्रयोज्यानि, उत विकल्पप्रयोज्यानि । समुच्चयप्रयोज्यानीति चेत्, **किरातार्जुनीयादौ** नगरार्णवार्कोदयविवाहकुमाराभ्युदयादीनामभणनम् । अथ विकल्पेन यथेष्टकल्पनायामलक्षणत्वप्रसङ्गः, तन्न, अङ्गकल्पनस्योभयथापीष्टत्वात्, यदा कथाशरीरस्य परिपूर्णाङ्गसंभवस्तदा समुच्चयेन । यदा त्वन्यथा तदा विकल्पेनेति । तत्रापि केषाञ्चि- २० देवाङ्गानां विकल्पोऽपरेषां नियमेन प्रयोगः । यानि पुरुषार्थस्यार्थकामादेरासन्नोपकारीणि तानि नियमतः प्रयुज्यन्ते । यथा—'मन्त्रदूतप्रयाणादिनायकाभ्युदयादयः' [ का. द. परि. १. श्लो. १७ ] यथा च शैलर्तूद्यानगमनजलक्रीडाचन्द्रोदयमधुपानरतोत्सवादयः । तानि च यदि कथाशरीरे न स्युस्तदा कथान्तरानुषञ्जनेनापि कर्तव्यानीति प्रचक्षते । २५

---

1. C. गति    2. C. निराकरमि°    3. A B. ते

4 N. हरिप्रबन्ध°

पर्यन्तमेकमेव छन्दो भवतीति । गलितकानि तु तत्र कैरपि विदग्धमानिभिः क्षिप्तानीति तद्विदो भाषन्ते ।

**२०२) नायकाख्यातस्ववृत्ता भाव्यर्थशंसिवक्त्रादिः सोच्छवासा संस्कृता गद्ययुक्ताख्यायिका ॥७॥**

५ धीरप्रशान्तस्य गाम्भीर्यगुणोत्कर्षात्स्वयं स्वगुणोपवर्णनं न संभवतीत्यर्थाद्यस्यां धीरोद्धतादिना नायकेन स्वकीयं[1] वृत्तं सदाचाररूपं चेष्टितं कन्यापहारसंग्रामसमागमाभ्युदयभूषितं मित्रादिष्वाख्यायते, अनागतार्थशंसीनि च वक्त्रापरवक्त्रार्यादीनि यत्र बध्यन्ते, यत्र चावान्तरप्रकरण-

---

**वृत्तमिति** । वृत्तशब्दः सदाचार एव वर्तते। अत एव **मनुराह**—

१० (186) न विद्यया केवलया तपसा वापि पात्रता ।
यस्य वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्तितम् ॥
[ या. स्मृ. अ. १. श्लो. २०० ]

इति तदाह **सदाचाररूपमिति**। **वक्त्रेति** । **वक्त्रशब्देन** वक्त्रप्रकरणं लक्ष्यते । तद्यथा—(187) 'अनुष्टुभि नाद्यात्स्नौ तुर्याद्यो वक्त्रम्' [ छ. शा. अ. ३. सू. ३३ ] इत्यादि । (188) नारलगा नजज्रा अपरवक्त्रम्' [ छ. शा. अ. ३. सू. १५ ] (189) चृगौ षष्ठो जो न्लौ वा पूर्वेऽर्धे परे षष्ठो लआर्या गाथा' [ छ. शा. अ. ४. सू. १ ] इत्येव **छन्दोनुशासने** लक्षितानि । वक्त्रं यथा **हर्षचरिते**—

निजवर्षहितस्नेहा बहुभक्तजनान्विताः ।
२० सुकाला इव जायन्ते प्रजाः पुण्येन भूभृतः ॥६२२॥
[ ह. च. उ. ३. पृ. ८३ ]

**अपरवक्त्रं** यथा—
तरलयसि दृशं किमुत्सुकामकलुषमानसवासलालिते ।
अवतर कलहंसि वापिकां पुनरपि यास्यसि पङ्कजालयम् ॥६२३॥
२५ [ ह. च. उ. १. पृ. १८ ]

**आर्या** यथा—
सकलमहीभृत्कम्पकृदुत्पद्यत एक एव नृपवंशे ।
विपुलेऽपि पृथुप्रतिमो दन्त इव गणाधिपस्य मुखे ॥६२४॥
[ ह. च. उ. ४ पृ. ११९ ]

---

1. I. स्वकीयवृत्तं

समासावुच्छ्वासा बध्यन्ते सा संस्कृतभाषानिबद्धा, अपादः पदसंतानो गद्यं तेन युक्ता। युक्तग्रहणादन्तरान्तरा प्रविरलपद्यनिबन्धेऽप्यदुष्टा आख्यायिका। यथा **हर्षचरिता**दिः।

**२०३) धीरशान्तनायका गद्येन पद्येन वा सर्वभाषा कथा ॥८॥**

५

आख्यायिकावन्न स्वचरितव्यावर्णकोऽपि तु धीरशान्तो नायकः,[1] तस्य तु वृत्तमन्येन कविना वा[2] यत्र वर्ण्यते, या च काचिद् गद्यमयी यथा **कादम्बरी**, काचित्पद्यमयी यथा **लीलावती**, या च सर्वभाषा काचित् संस्कृतेन काचित् प्राकृतेन काचिन्मागध्या काचिच्छूरसेन्या काचित् पिशाच्या काचिदपभ्रंशेन बध्यते सा कथा।

१०

प्रबन्धमध्ये परबोधनार्थं नलाद्युपाख्यानमिवोपाख्यानमभिनयन् पठन् गायन् यदेको[3] ग्रन्थिकः कथयति त**द्गोविन्द**वदाख्यानम्।

तिरश्चामतिरश्चां वा चेष्टाभिर्यत्र कार्यमकार्यं वा निश्चीयते तत्**पञ्चतन्त्रा**दिवत, धूर्तविट**कुट्टनीमत**मयूरमार्जारिकादिवच्च निदर्शनम्।

---

**उपाख्यान**मिति। यदाह—

१५

(190) नलसावित्रीषोडशराजोपख्यानवत्प्रबन्धान्तः।
अन्यप्रबोधनार्थं यदुपाख्यातं ह्युपाख्यानम् ॥

**आख्यान**मिति। तथा चाह—

(191) आख्यानकसंज्ञां तल्लभते यद्यभिनयन् पठन् गायन्।
ग्रन्थिक एकः कथयति **गोविन्द**वदवहिते सदसि ॥

२०

**निदर्शनमिति**। तथा च—

(192) निश्चीयते तिरश्चामतिरश्चां वापि यत्र चेष्टाभिः।
कार्यमकार्यं वा तन्निदर्शनं **पञ्चतन्त्रा**दिः ॥

---

1. P. नायकस्य and drops तस्य  2. I. सा
3. N. यदैको

प्रधानमधिकृत्य यत्र द्वयोर्विवादः सार्धप्राकृतरचिता **चेटका**दिवत् प्रवह्लिका[1]।

प्रेतमहाराष्ट्रभाषया क्षुद्रकथा **गोरोचना–अनङ्गवत्या**दिवन्मन्थल्लिका[2]। यस्यां पुरोहितामात्यतापसादीनां प्रारब्धानिर्वाहे उपहासः सापि मन्थल्लिका।

यस्यां पूर्वं वस्तु न लक्ष्यते पश्चात्तु प्रकाश्यते सा **मत्स्यहसिता**–दिवन्मणिकुल्या[3]।

एकं धर्मादिपुरुषार्थमुद्दिश्य प्रकारवैचित्र्येणानन्तवृत्तान्तवर्णनप्रधाना **शूद्रका**दिवत् परिकथा।

---

(193) धूर्तविटकुट्टनीमतमयूरमार्जारिकादि यल्लोके।
कार्याकार्यनिरूपणरूपमिह निदर्शनं तदपि॥

**प्रवह्लिकेति**। तथा च—

(194) यत्र द्वयोर्विवादः प्रधानमधिकृत्य जायते सदसि।
सार्धप्राकृतरचिता प्रवह्लिका चेटकप्रभृतिः॥

**मन्थल्लिकेति**। तथा च—

(195) क्षुद्रकथा मन्थल्ली प्रेतमहाराष्ट्रभाषया भवति।
गोरोचनेव कार्या सानङ्गवतीव वा कविभिः॥

**सापीति**। तथा च—

(196) यस्यामुपहासः स्यात्पुरोहितामात्यतापसादीनाम्।
प्रारब्धानिर्वाहे सापि हि मन्थल्लिका भवति॥

**मणिकुल्येति**। तथा च—

(197) मणिकुल्यायां जलमिव न लक्ष्यते यत्र पूर्वतो वस्तु।
पश्चात्प्रकाशते सा मणिकुल्या **मत्स्यहसिता**दिः॥

**परिकथेति**। तथा च—

(198) पर्यायेण बहूनां यत्र प्रतियोगिनां कथाः कुशलैः।
श्रूयन्ते शूद्रकवज्जिगीषुभिः परिकथा सा तु॥

---

1. L. प्रवह्लिका 2. L. मथल्लिका 3. L. मानुकुल्या

मध्यादुपान्ततो वा ग्रन्थान्तरप्रसिद्धमितिवृत्तं यस्यां वर्ण्यते सा **इन्दुमत्या**दिवत् खण्डकथा। समस्तफलान्तेतिवृत्तवर्णना **समरादित्या**-[1] दिवत् सकलकथा। एकतरचरिताश्रयेण प्रसिद्धकथान्तरोपनिबन्ध उपकथा। लम्भाङ्किताद्भुतार्था **नरवाहनदत्तादिचरित**वद् बृहत्कथा। **एते च कथाप्रभेदा एवेति न पृथग्लक्षिताः।** ५

**२०४) गद्यपद्यमयी साङ्का सोच्छ्वासा चम्पूः** ॥९॥

संस्कृताभ्यां गद्यपद्याभ्यां रचिता, अभिप्रायेण यान्यङ्कानि स्वनाम्ना परनाम्ना वा कविः करोति तैर्युक्ता उच्छ्वासनिबद्धा चम्पूः। यथा **वासवदत्ता दमयन्ती** वा।

**२०५) अनिबद्धं मुक्तकादि** ॥१०॥ १०

मुक्तकसंदानितकविशेषककलापककुलकपर्याकोशप्रभृत्यनिबद्धम्।

---

**खण्डकथेति**। तथा च—

(199) ग्रन्थान्तरप्रसिद्धं यस्यामितिवृत्तमुच्यते विबुधैः।
मध्यादुपान्ततो वा सा खण्डकथा **यथेन्दुमती** ॥

**सकलकथेति**। चरितमित्यर्थः। १५

**उपकथेति**। तथा च—

(200) यत्राश्रित्य कथान्तरमतिप्रसिद्धं निबध्यते कविभिः।
चरितं विचित्रमन्यत्सोपकथा **चित्रलेखा**दिः॥

**बृहत्कथेति**। तथा च—

(201) लम्भाङ्किताद्भुतार्था पिशाचभाषामयी महाविषया। २०
नरवाहनदत्तादेश्चरितमिव **बृहत्कथा** भवति॥

॥ इति **आचार्यश्रीहेमचन्द्रविरचिते विवेके**ऽष्टमोऽध्यायः॥

---

1. I. समरादित्यवत्

एषां लक्षणमाह :—

**२०६) एकद्वित्रिचतुश्छन्दोभिर्मुक्तकसंदानितकविशेषककलापकानि ॥११॥**

एकेन च्छन्दसा वाक्यार्थसमाप्तौ मुक्तकं यथा—**अमरुकस्य** शृङ्गारशते रसस्यन्दिनो मुक्तकाः । द्वाभ्यां सन्दानितकम् । त्रिभिर्विशेषकम् । चतुर्भिः कलापकम् । एतानि च विशेषानभिधानात् सर्वभाषाभिर्भवन्ति ।

**२०७) पञ्चादिभिश्चतुर्दशान्तैः कुलकम् ॥१२॥**

छन्दोभिरिति वर्तते । मुक्तकानामेक[1]प्रघट्टकोपनिबन्धः पर्या । अवान्तरवाक्यसमाप्तावपि वसन्ताद्येकवर्णनीयोद्देशेन मुक्तकानामुपनिबन्धः पर्या । सा कोशेषु प्रचुरं दृश्यते ।

**२०८) स्वपरकृतसूक्तिसमुच्चयः कोशः[2] ॥१३॥**

[3]यथा **सप्तशतकादिः** । एकप्रघट्टके एककविकृतः सूक्तिसमुदायो **वृन्दावनमेघदूतादिः** संघातः । विप्रकीर्णवृत्तान्तानामेकत्र सन्धानं **यदुवंशदिलीपवंश**ादिवत् संहिता । एवमनन्तोऽनिबद्धगणः । स आदिग्रहणेन गृह्यते ।

इह च सत्सन्धित्वं शब्दार्थवैचित्र्ययोगश्च महाकाव्यवदाख्यायिकाकथाचम्पूष्वपि द्रष्टव्यः ॥

**इति—आचार्यश्रीहेमचन्द्रविरचितायामलङ्कारचूडामणिसंज्ञस्वोपज्ञकाव्यानुशासनवृत्तौ** अष्टमोध्यायः समाप्तः ॥

---

1. I. °नामेव
2. N. does not regard this as a Sutra. P. L and J. regard it as a Sutra because it is preceded by a ठ
3. L drops यथा and त

# अकाराद्यनुक्रमेण–अलङ्कारचूडामणिगतानां विवेकगतानां चोदाहरणानामनुक्रमणिका।



१. अस्यामनुक्रमणिकायां (अ) अलङ्कारचूडामणिं (वि.) च विवेकं सूचयति.

२. प्रथमा संख्या श्लोकाङ्कं सूचयति, अपरा पृष्ठाङ्कम्।

## प्रमाणत्वेनोदाहृतानां संदर्भाणामकराद्यनुक्रमणी*

23 अखण्डबुद्धिनिर्ग्राह्यो (वि.) ५२
52 अगूढमपरस्याङ्ग (वि.) १५७
[ वा. प्र. उ. ५, का. ४५ ]
122 अग्राम्यत्वमुदारता (वि.) २८४
[का. लं. सू. अधि. ३. अ. १. सू. १२]
62 अतिक्रान्ततुलिङ्गं यत् (वि.) १९६
48 अत्र कविरात्मशक्त्या (अ.) ४३४
28 अथ वीरो (वि.) ९०
[ ना. शा. अ. ६. पृ. ६७ ]
20 अनन्वितार्थं पदमप्रयोज्यम् (वि.)४८
90 अनवगीतस्याहीनस्य वा (वि.) २७४
76 अनुवाद्यमनुक्त्वैव (वि.) २४४.
187 अनुष्टुभि नाद्यात्स्नौ (वि.) ४६२
[छ. शा. अ. ३. सू. ३३]
66 अनेकनर्तकीयोज्यं (अ.) ४४६.
16 अनौचित्यादृते नान्यद् (अ.) १९९
[ध्वन्यालोक उ. ३]
68 अन्तर्व्याजं बहिर्व्याजं (वि.) १९८.
44 अन्यदा भूषणं पुंसः (अ.) ४३१.
[ शि. व. स. २, श्लो. ४४ ]
119 अपारुष्यं सौकुमार्यम् (वि.) २८३.
[का. लं. सू. अधि. ३. अ. २, सू. ११]
73 अप्रधान्यं विधेर्यत्र (वि.) २४३.
34 अभिप्रायवान् पाठधर्मः (अ.) ३३३
[ का. मी. अ. ७, पृ. ३१ ]
5 अभ्यासो हि कर्मसु (अ.) १४.
34 अभिधा भावना (वि.) ९६.
3 अमरसदनादिभ्यो भूता (वि.) ४
[ रु. का. १-२२ ]
22 अयमेव हि भेदो (वि.) ५१
6 अर्थः स एव सर्वो (वि.) १४
[ का. मी. अ. १२ ]
112 अर्थदृष्टिः समाधिः (वि.) २८२
[का. लं. सू. अधि. ३. अ २. सू. ६]
109 अर्थस्य गुणान्तरासमाधानाद्
(वि.) २८०
94 अर्थस्य प्रौढिरोजः (वि.) २७६
[का. लं. सू. अधि. ३. अ. २, सू २]
35 अर्थान्तरगतिः (अ.) ३३३.
[ध्वन्या उ. ३. का. ३९ ]
155 अलङ्कारकृतां येषां (वि.) ३८०
89 अवगीतस्य हीनस्य वा (वि.) २७४
55 अविकृतभाषाचारं (अ.) ४४२.
[ना. शा. अ. २०. C. S. S.]
56 अव्युत्पत्तिकृतो दोषः (वि.) १७७
[ ध्व. उ. ३. पृ. १३७ ]
102 अशिथिलं श्लिष्टम् (वि.) २७८
[का. द. परि. १, श्लो. ४३]
172 असम्बन्धे सम्बन्धात् (वि.) ४०३
10 अस्थानहसितं यत्तु (अ.) ११४
[ ना. शा. अ. ६, ५८ ]
161 अस्य स्वभावस्योक्तिर्या (वि.)३८०
43 अहिंसासत्यास्तेय (वि.) १२०.
[ यो. सू. पा. २. सू. ३० ]
10 आकुञ्चिताक्षिगण्डं (अ.) ११४.
[ ना. शा. अ. ६. ५६. ]
191 आख्यानकसंज्ञां (वि.) ४६३.
56 आत्मानुभूतशंसी (अ.) ४४२.

---

* अरब्यङ्कं संदर्भसंख्यां सूचयति, नागर्यङ्कं पृष्ठसंख्याम्। शेषं पूर्ववत्।

---

## प्राकृतपद्यानां संस्कृतच्छाया

अइ दिअर (अ) ५६८, ३६८. [स. श. ५७१; गा. स. श. ६. ७० ]

अयि देवर किं न प्रेक्षसे आकाशं किं मुधा प्रलोकसे ।
जायाया बाहुमूले अर्धचन्द्राणां परिपाटीम् ॥

अज्ज वि हरी (वि.) १५९, ९९

अद्यापि हरिश्चमत्करोति कथंकथमपि न मंदरेण कलितानि ।
चन्द्रकलाकन्दलसच्छायानि लक्ष्म्या अङ्गानि ॥

अत्ता एत्थ (अ.) १४, ५३.

अत्ता अत्र तु मज्जति, अत्राहं, दिवसके प्रलोकस्व ।
मा पथिक रात्र्यन्धक शय्याया मम नु मज्जिष्यसि ॥

अन्नत्थ वच्च (अ) ८५, ८५.

अन्यत्र व्रज बालक स्नान्तीं किं मां प्रलोकसे ।
एतद् भो जायाभीरुकाणां तेषां चेव न भवति ॥

अन्नं लडहत्तणयं (अ) ५६९, ३६८.

अन्यल्लटभत्वं अन्या चैव कापि वर्तनच्छाया ।
श्यामा सामान्यप्रजापते रेखा चैव न भवति ॥

अहयं उज्जुअ (अ.) १७५, १५५. [गा. स. २२. २७; स. श. १२७]

अहकं ऋजुकरूपा तस्यापि उन्मन्थराणि प्रेमाणि ।
सखिकाजनश्च निपुणो अलाहि किं पादरागेण ॥

[अला-निवारणे].

अहिणवमणहर (अ.) २२५, २०७

अभिनवमनोहरविरचितवलयविभूषा विभाति नववधूका ।
कुन्दलतेव समुत्फुल्लगुच्छपरिलीनभ्रमरगणा ॥

आगममणिसुदम० (वि.) ५३२, ३२७. [ दे. श. श्लो. ७९ ]

आगमा मनसि श्रुतमहिमा शमः साम्यदाः कृताः परं यस्य ।

किल सापि भगवती तोषमयमुज्ज्वलभावसहस्रम् ॥

आसाइयं० (अ) १६, ५४. [ स. श. ९५८ ]

आसादितमज्ञातेन यावत् तावता बधान धृतिम ।

उपरम वृषभेदानीं रक्ष्यते गृहपतिक्षेत्रम् ॥

ईसाकलुसस्स० (वि.) १४५, ७६.

ईर्ष्याकलुषस्यापि तव मुखस्य नन्वेष पूर्णिमाचन्द्रः ।

अद्य सदृशत्वं प्राप्य अङ्गे इव न माति ॥

उच्चिणसु० (अ.) २०, ५५. [ स. श. ९५९ ]

उच्चिनु'व पतितकुसुमं मा धुनीहि शेफालिकां हालिकस्नुषे ।

एषोऽवसानविरसाः श्वशुरेण श्रुतो वलयशब्दः ॥

उप्पहजायाए (वि.) ५४७, ३६०.

उत्पथजातायाः अशोभिन्याः फलकुसुमपत्ररहितायाः ।

बदर्या वृत्तिं ददत् पामर भो भो हसिष्यसे ॥

एकत्तो रुअइ (वि.) १८७, १६८.

एकतो रोदिति प्रिया अन्यतः समरतूर्यनिर्घोषः

स्नेहेन रणरसेन च भटस्य दोलायितं हृदयम् ॥

एत्तो वि ण सच्चविओ (अ.) ५७२, ३६९.

आयन्नपि न सत्यापितो यस्याः प्रसरत्पल्लवारुणरागः ।

मज्जनताम्रेषु मदस्तथा मदताम्रेषु लोचनेषु अमर्षः ॥

एद्दहमित्तत्थणिया (अ.) ५२, ६५

एतावन्मात्रस्तनिका एतावन्मात्राभ्यामक्षिपात्राभ्याम् ।

एतावदवस्थां प्राप्ता एतावन्मात्रैर्दिवसैः ॥

एमे अ जणो (वि.) ३४२, २१६.

एवमेव जनो तस्या ददाति कपोलोपमायां शशिबिम्बम् ।

परमार्थविचारे पुनश्चन्द्रश्चन्द्र एव वराकः ॥

कस्स व न होइ (अ.) २५, ५७.

कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम् ।

सभ्रमरपद्माघ्राणशीले वारितवामे सहस्वेदानीम् ॥

कायं खायइ (अ.) २५४, २१५.

काकं खादति क्षुधितः कूरं क्षिपति निर्भरं रुष्टः ।
शुनकं गृह्णाति कण्ठे भेषयति च नप्तारं स्थविरः ॥

काराविऊण खउरं (अ.) ३७९, २६४.

कारयित्वा क्षौरं ग्रामवृद्धो मज्जित्वा जिमित्वा ।
नक्षत्रं तिथिवारौ ज्यौतिषिकं प्रष्टुं चलितः ॥

का विसमा (अ.) ६५०, ३९५.

का विषमा दैवगतिः किं लष्टं यज्जनो गुणग्राही ।
किं सौख्यं सुकलत्रं किं दुर्ग्राह्यं खलो लोकः ॥

कुलबालियाए (अ.) ६९२, ४१३.

कुलबालिकायाः प्रेक्षध्वं यौवनलावण्यविभ्रमविलासाः ।
प्रवसन्तीव प्रोषिते आयन्तीव गृहमायति ॥

गुरुयणपरवश (अ.) ३४, ६१ [ स. श. ८५१ ]

गुरुजनपरवश प्रिय किं भणामि तव मन्दभागिन्यहम् ।
अद्य प्रवासं व्रजसि व्रज स्वयमेव श्रोष्यसि करणीयम् ॥

चन्दमऊएहिं (अ.) ५५१, ३५५.

चन्द्रमयूखैर्निशा नलिनी कमलैः कुसुमगुच्छैर्लता ।
हंसैः शारदशोभा काव्यकथा सज्जनैः क्रियते गुर्वी ॥

चमढियमाणसकञ्चण (वि.) १५०, ७९.

मर्दितमानसकाञ्चनपङ्कजनिर्मथितपरिमलौ यस्य ।
अखण्डितदानप्रसरौ बाहुपरिघौ इव गजेन्द्राः ॥

चूयंकुरावयंसं (अ.) ७४, ७९.

चूताङ्कुरावतंसं क्षणप्रसरमहार्घमनोहरसुरामोदम् ।
अनर्पितमपि गृहीतं कुसुमशरेण मधुमासलक्ष्म्या मुखम् ॥

जं जं असिक्खिअं (अ.) ६५५, ३९६.

यद् यदशिक्षितं नववधूनां तत् तद् धृतिं ददाति ॥

जं जं करेसि (अ.) ७२३, ४२५. [ गा. स. श. ४, ७८; स. श. ३७८ ]

यद्यत् करोषि यद्यच्च जल्पसि यथा त्वं नियमयसि ।
तत्तदनु स्वीकुर्वे दिवसो दिवसो न संपतति ॥

जं भणह तं (अ.) ६५७, ३९६. [ स. श. ८९७ ]

यद् भणथ तत् सख्य आम करिष्यामि तत् तथा सर्वम् ।
यदि त्वरध्वं रोद्धुं मे धैर्यं संमुखागते तस्मिन् ॥

जस्स रणन्तेउरदाए (अ.) ५३८, ३५२.

यस्य रणान्तःपुरे करे कुर्वतो मण्डलाग्रलताम् ।

रससंमुख्यपि सहसा पराङ्मुखी भवति रिपुसेना ॥

जाएज्ज वणुद्दसे (वि.) १४९, ७८. [ गा. स. श. ३, ३०; स. श. २३०. ]

जायेय वनोद्देशे कुब्ज इव पादपः शटितपत्रः ।

मा मानुषे लोके त्यागैकरसो दरिद्रश्च ॥

जामि तारा अनुडिअ (वि.) ५८५, ४४८.

जो तीए अहर (अ.) ६३१, ३८९. [ गा. स. श. २, ६; स. श. १०६. ]

यस्तस्या अधररागो रात्रिमुद्वासितः प्रियतमेन ।

स एव दृश्यते प्रातः सपत्नीनयनेषु संक्रान्तः ॥

ढंढुल्लिंतु मरीहसि (अ.) ५०५, ३४३; ५१३, ३४४.

भ्राम्यन् मरिष्यसि कण्टककलितानि केतकीवनानि ।

मालतीकुसुमेन समं भ्रमर भ्राम्यन् न प्राप्स्यसि ॥

,, °कसदृशं ,, ,,

णहमुहपसाहिअंगो (अ.) २४, ५६. [ स. श. ९३७ ]

नखमुखप्रसाधिताङ्गो निद्राघूर्णल्लोचनो न तथा ।

यथा निर्वर्णाधरः श्यामलाङ्ग दूनयसि मम हृदयम् ॥

णोल्लोइ अणोल्लमणा (अ.) ३१. ६०. [ स. श. ८७५. ]

नुदत्यनार्द्रमना अत्ता मां गृहभारे सकले ।

क्षणमात्रं यदि सन्ध्यायां भवति न वा भवति विश्रामः ॥

तं तँ ताण सिरि (अ.) ७०, ७४ [ वि. बा. ली ]

तत्तेषां श्रीसहोदररत्नाभरणे हृदयमेकरसम् ।

बिम्बाधरे प्रियाणां निवेशितं कुसुमबाणेन ॥

तं ताण हयच्छायं (वि.) १७०, १४५. [ वि. बा. ली. ]

तत् तेषां हतच्छायं निश्चललोचनशिखं प्रोषितप्रतापम् ।

आलेख्यप्रदीपानामिव नियतं प्रकृतिचटुलत्वमपि विगलितम् ॥

तं तिअसबन्दिमोक्ख (वि.) ६१२, ४५६. [ से. ब. आ. १. श्लो. १२ ]

तं त्रिदशबन्दिमोक्षं समस्तलोकस्य हृदयशल्योद्धरणम् ।

शृणुतानुरागचिह्नं सीतादुःखक्षयं दशमुखस्य वधम् ॥

ताला जायन्ति गुणा (अ.) २३५, २०९. [ वि. बा. ली. ]

तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते ।

रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ॥

तुह वल्लहस्स गोसम्मि (अ.) ७६, ८०.

तव वल्लभस्य प्रातरासीदधरो म्लानकमलदलम् ।

इति नववधूः श्रुत्वा करोति वदनं महीसंमुखम् ॥

दिट्ठिआ इमिणा (वि.) ६०१, ४५३. [ र. अं. ३, पृ. १३८. ]

दिष्टयानेन विरचितभट्टिनीवेशेनानभिज्ञातो केनापि इतश्च द्विशालातो निष्क्रान्ते स्वः ।

दे आपसिअ (अ.) २२, २५.

अयि आः प्रसीद निवर्तस्व मुखशशिज्योत्स्नाविलुप्ततमोनिवहे ।

अभिसारिकाणां विघ्नं करोष्यन्यासामपि हताशे ॥

धवलोसि जइ (अ.) ६०६, ३७७. [ स. श. ६६७, ७६५. ]

धवलोऽसि यद्यपि सुन्दर तथापि त्वया मम रंजितं हृदयम् ।

रागभरितेऽपि हृदये सुभग निहितो न रक्तोसि ॥

धीराण रमइ (अ.) ७२, ७५.

धीराणां रमते घुसृणारुणे न तथा प्रियास्तनोत्संगे ।

दृष्टी रिपुगजकुम्भस्थले यथा बहलसिन्दूरे ॥

नियदइय (अ.) १९, ५५. [ स. श. ९५७ ]

निजदयितादर्शनोत्क्षिप्त पथिकान्येन व्रज पथा ।

गृहपतिदुहिता दुर्लङ्घ्यवागुरेह हतग्रामे ॥

निग्गंडदुरारोहं (अ.) ६६६, ४००.

निर्गण्डदुरारोहं मा पुत्रक पाटलं समारोह ।

आरूढनिपतिता केऽनया न कृता इह ग्रामे ॥

निहुयरमणम्मि (अ.) १८७, १६१.

निभृतरमणे लोचनपथे पतिते गुरूणां मध्ये

सकलपरिहारहृदया वनगमनमेव काङ्क्षति वधूः ॥

पणयकुवियाण (अ.) १०५, ११२. [ गा. स. श. २७; स. श. २७ ]

प्रणयकुपितयोर्द्वयोरप्यलीकप्रसुप्तयोर्मानवतोः ।

निश्चलनिरुद्धनिःश्वासयोर्दत्तकर्णयोः को मल्लः ॥

पत्तनिअम्ब (अ.) २४३, २१२. [ गा. स. श. ६, ५५; स. श. ५५६ ]

प्राप्तनितम्बस्पर्शाः स्नानोत्तीर्णायाः श्यामलाङ्गयाः ।

चिकुरा रुदन्ति जलबिन्दुभिर्बन्धस्येव भयेन ॥

पन्थिय न एत्थ (अ.) ५९, ६७. [ स. श. ८७९. ]

पथिक नात्र स्रस्तरमस्ति मनाक् प्रस्तरस्थले ग्रामे ।

उन्नतपयोधरं प्रेक्ष्य यदि वससि तद्वस ॥

परपेसणदूसिदं (वि.) ५९१, ४५१. [ र. अं. १. पृ. ४७ ]

परप्रेषणदूषितमपि शरीरमेतस्य दर्शनेनाद्य मे बहुमतं संपन्नम् ।

परिवट्टइ विन्नाणं (वि.) ६१३, ४५६. [ से. ब. आ. १, श्लो. १० ]

परिवर्तते विज्ञानं संभाव्यते यशो अर्ज्यन्ते गुणाः ।

श्रूयते सुपुरुषचरितं किं तद् येन न हरन्ति कथालापाः ॥

पाआलअले सेसाहिणि (वि.) ५८४, ४४७.

पातालतले शेषाहौ खलु जय जय लक्ष्मीवक्षःस्थलमृदिता । (?)

पोढमहिलाण जं (अ.) ६५५, ३९९.

प्रौढमहिलानां यत् सुष्ठु शिक्षितं तद्रते सुखयति ।

यद्यदशिक्षितं नववधूनां तत्तद् धृतिं ददाति ॥

फुलक्करं (अ.) २८८, २२७. [ कर्पूर. ज. १. श्लो. १९. ]

पुष्पोत्करं कलमौदनसमं वहन्ति ये सिन्धुवारविटपा मम बल्लभास्ते ।

ये गालितस्य महिषीदध्नः सदृशास्ते किं च मुग्धविचकिलप्रसूनपुञ्जाः ॥

बहलतमाहयराइं (अ.) १५, ५३. [ गा. स. श. ४, ३५; स. श. ३३५ ]

बहलतमा हतरात्रिरद्य प्रोषितः पतिर्गृहं शून्यम् ।

तथा जागृहि प्रतिवेशिन् न यथा वयं मुष्यामहे ॥

भम धम्मिअ (अ.) १३, ४७. [ गा. स. श. २, ७६ ]

भ्रम धार्मिक विश्वस्तः स शुनकोऽद्य मारितस्तेन ।

गोदानदीकच्छनिकुञ्जवासिना दृप्तसिंहेन ॥

महिलासहस्स (अ.) १७७, १५५. [ गा. स. श. २, ८२; स. श. १८२ ]

महिलासहस्रभरिते तव हृदये सुभग सा अमान्ती

अनुदिनमनन्यकर्मा अङ्गं तनुकमपि तनयति ॥

महुएहिं (अ.) १७, ५४. [ स. श. ८७७ ]

मधुकैः किंवा पान्थ यदि हरसि निवसनं नितम्बात् ।

शास्मि [कथयामि] कस्यारण्ये ग्रामो दूरेऽहमेकाकिनी ॥

मा पंथ (अ.) ८२, ८४. [ स. श. ९६१ ]

मा पन्थानं रुन्द्धि अपेहि बालक अहो असि अह्रीक ।

वयं परतन्त्राः शून्यगृहं रक्षणीयमस्माकम् ॥

रइकेलिहिय (अ.) ९२, ८७. [ गा. स. श. ५. ५५; स. श. ४५५; ]

रतिकेलिहृतनिवसनकरकिसलयरुद्धनयनयुगलस्य ।

रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं जयति ॥

लीलादाढग्गुवूढ (वि.) १५१, ८१. [ म. वि. ]

लीलादंष्ट्राग्रोद्व्यूढसकलमहीमण्डलस्यैवाद्य ।

कस्मान् मृणालाभरणमपि तव गुरूयतेऽङ्गे ॥

वच्च महं च्चिय (अ.) २३, ५६. [ स. श. ९४४ ]

व्रज ममैवैकस्या भवन्तु निःश्वासरोदितव्यानि ।

मा तवापि तया विना दाक्षिण्यहतस्य जायन्ताम् ॥

वाणियय हत्थिदंता (अ) ३७, ६३; ६५६, ३९६.

वाणिजक हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तयः ।

यावल्लुलितालकमुखी गृहे परिसर्पते स्नुषा ॥

वाणीरकुडंगुड्डीण (अ) १७१, १५२.

वानीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वत्याः ।

गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि ॥

विअसंतरअक्खउरं (वि.) ५५०, ३६१.

विलसद्रजःकलुषं मकरन्दरसाध्मातमुखरमधुकरम् ।

ऋतुना द्रुमाणां दीयते ह्रियते न पुनस्तदात्मनैव कुसुमम् ॥

विवरीयरए लच्छी (वि.) १३८, ५२. [ स. श. ८१५ ]

विपरीतरते लक्ष्मीर्ब्रह्माणं दृष्ट्वा नाभिकमलस्थम् ।

हरेर्दक्षिणनयनं रसाकुला झटिति छादयति ॥

सग्गं अपारिआयं (अ.) ५६०, ३६५. [ से. ब. ४-२० ]

स्वर्गमपारिजातं कौस्तुभलक्ष्मीविरहितं मधुमथनस्योरः ।

स्मरामि मथनपुरतोऽमुग्धचन्द्रं च हरजटाप्राग्भारम् ॥

सयलं चेव निबन्धं (वि.) ६१४, ४५६.

सकल एव निबन्धो द्वाभ्यां पदाभ्यां कलुषं प्रसन्नं च स्थितम् ।

जानन्ति कवीनां कवयः शुद्धस्वभावाभ्यां लोचनाभ्यां च हृदयम् ॥

सह दिअसनिसाहिं (वि) ५४८, ३७८. [ क. मं. ज. २ श्लो. ९ ]

सह दिवसनिशाभिर्दीर्घाः श्वासदण्डाः सहमणिवलयैर्बाष्पधारा गलन्ति ।

तव सुभग वियोगे तस्या उद्वेगशीलायाः सह च तनुलतया दुर्बला जीविताशा ॥

सालोए च्चिय (अ.) ७११, ४१८. [ गा. स. श. २, ३०; स. श. १३०; ]

सालोके एव सूर्ये गृहिणी गृहस्वामिकस्य गृहीत्वा ।

अनिच्छतश्च चरणे धावति हसन्ती हसतः ॥

साहन्ती सहि (अ.) ३६, ६२. [स. श. ८६० ]

साधयन्ती सखि सुभगं क्षणे क्षणे दूनासि मत्कृते ।

सद्भावस्नेहकरणीयसदृशं तावद् विरचितं त्वया ॥

सिहिपिच्छकण्णऊरा (अ.) ७२५, ४२५. [ गा. स. श. २, ७३; स. श. १७३; ]

शिखिपिच्छकर्णपूरा जाया व्याधस्य गर्विणी भ्रमति ।

मुक्ताफलरचितप्रसाधनानां मध्ये सपत्नीनाम् ॥

सुव्वइ समागमिस्सइ (अ.) ३२. ६१. [ स. श. ९६२ ]

श्रूयते समागमिष्यति तव प्रियोऽद्य प्रहरमात्रेण

एवमेव किमिति तिष्ठसि तत्सखि सज्जय करणीयम् ॥

सो नत्थि एत्थ (अ.) ६६१, ३९८.

सो नास्त्यत्र ग्रामे य एतां स्फुरल्लावण्याम् ।

तरुणानां हृदयलुण्टाकीं परिष्वष्कमानां निवारयति ॥

सोह व्व लक्खणमुहं (अ.) ५१७, ३४६.

शोभेव लक्ष्मणमुखं वनमालेव विकटं हरिपतेरुरः ।

कीर्तिरिव पवनतनयमाज्ञेव बलान्यस्य विलगति दृष्टिः ॥

हंसाण सरेहिं (अ.) ५५४, ३५७. [ स. श. ९५३ ]

हंसानां सरोभिः श्रीः सार्यतेऽथ सरसां हंसैः ।

अन्योन्यमेवैते आत्मानं केवल गुरूकुर्वन्ति ॥

हिअयट्ठियमन्नुं (वि.) १४३, ७५.

हृदयस्थापितमन्युं खलु अदृष्टमुखीमपि मां प्रसादयन् ।

अपराद्धस्यापि न खलु ते बहुज्ञ रोषितुं शक्यम् ॥

हुमि अवहत्थिअरेहो (वि.) १५२, ८२. [ वि. ली. ]

भवाम्यहस्तितरेखो निरङ्कुशोऽथ विवेकरहितोऽपि ।

स्वप्नेऽपि तव समते (?) पत्नीकभक्ति न प्रमार्ज्मि ॥

होइ न गुणाणुराओ (अ.) ५४४, ३५३.

भवति न गुणानुरागो जडानां केवलं प्रसिद्धिशरणानाम् ।

किल प्रस्नौति शशिमणिश्चन्द्रे न प्रियामुखे दृष्टे ॥

---

# अकारादिक्रमेण सूत्राणामनुक्रमणी+



+ ) एतच्चिह्नान्तर्गता संख्या सर्वाग्रेण सूत्राङ्कं सूचयति । तत्परं प्रथमा संख्या अध्यायाङ्कं, द्वितीया सूत्राङ्कं, तृतीया च पृष्ठाङ्कम् ।

१८४) स्मितहसितरुदितभयरोषगर्वदुःखश्रमाभिलाषसङ्करः किलकिंचितम् । ७, ४१. ४२६.

२०८) स्वपरकृतसूक्तिसमुच्चयः कोशः । ८, १३. ४६६.

१५२) स्वपरेषु दानाभ्युपपत्तिसंभाषणान्यौदार्यम् । ७, ९. ४०९.

१२७) स्वभावाख्यानं जातिः । ६, १५. ३७९.

१६६) स्वयमूढा शीलादिमती स्वा । ७, २२. ४१३.

१०८) स्वरव्यञ्जनस्थानगत्याकारनियमच्युतगूढादि चित्रम् । ५, ४. ३०७.

१७३) स्वाधीनपतिका प्रोषितभर्तृका खण्डिता कलहान्तरिता विरहोत्कण्ठिता विप्रलब्धाभिसारिका चेति स्वस्त्रीणामष्टावस्थाः । ७, ३०. ४१८.

१४३) स्वातन्त्र्याङ्गत्वसंशयैकपद्यैरेषामेकत्र स्थितिः संकरः । ६, ३१. ३९८.

१५१) हर्षादिविकारानुपलम्भकृद् गाम्भीर्यम् । ७, ८. ४०९.

११३) हृद्यं साधर्म्यमुपमा । ६, १. ३३९.

१३५) हेतोः साध्यावगमोऽनुमानम् । ६, २३. ३९०.

१४०) हेतौ कार्ये चैकत्र हेतुकार्यान्तरोक्तिर्युगपद्गुणक्रियाश्च समुच्चयः । ६, २८. ३९२.

## ग्रन्थकारेण निर्दिष्टानां ग्रन्थानां ग्रन्थकृतां चाकाराद्यनुक्रमणी



× संख्या पृष्ठाङ्कं सूचयति.

## संपादकेन निर्दिष्टानां ग्रन्थानामकाराद्यनुक्रमणी



---

*+ संख्या पृष्ठाङ्कं सूचयति.*

---

# पारिभाषिकाणामन्येषां च विशिष्टानां शब्दानां विशिष्टस्थल-सूचिका अकाराद्यनुक्रमणी



+ संख्या पृष्ठाङ्कं सूचयति

भ्रान्ति (अ.) ३९१ (लक्षण), ३९९; (वि.) ३२९.

## ॥ परिशिष्टम् ॥

# ॥ टिप्पणम् ॥

[ सालङ्कारचूडामणिकस्य काव्यानुशासनस्येदं टिप्पणं P संज्ञितताडपत्रादर्शादुद्धृत्यात्रास्माभिः संपादितम् । अज्ञातकर्तृकमेतत्ताडपत्रोपान्तेषु केनापि विदुषा लिखितं स्यात् । ]

### ॥ प्रथमोऽध्यायः ॥

| पृष्ठ. | पंक्ति. | | |
|---|---|---|---|
| १ | ३ | **समुचित°** | अधिकृत° ॥ |
| १ | ७ | **जिनोपज्ञा** | जिनस्योपज्ञेति क्लीबत्वं स्यादिति उपजानंतीति कः। जिना उपज्ञातार आदिकर्तारो यस्याः ॥ |
| १ | ७ | **अनेन** | पदेन ॥ |
| १ | ८ | **उपादेयतां** | ग्राह्यताम् ॥ |
| १ | ८ | **भाषाद्रव्य°** | शब्दारम्भकाणि श्रोत्रग्राह्याणि द्रव्याणि भाषाद्रव्याणीत्युच्यन्ते ॥ |
| १ | ९ | **योगप्रणिधानम्** | योगा मनोवाक्कायाः तेषां प्रणिधानमैकाग्र्यम्॥ |
| १ | १० | **नामिकादीनि** | नाम प्रयोजनमस्य नामिकम् । आदिशब्दादाख्यातिकम् ॥ |
| १ | १० | **अनाहार्य°** | अनारोप्यमाधुर्याणि ॥ |
| १ | ११ | **गुणमात्रवचना** | पर्यायमात्रवादिनो यथाऽयं स्वच्छो गुणः अयं स्वादु गुणोऽयं तु दुर्गुण इत्यादि। न हि क्वापि द्रव्यमंतरेण पर्यायाः प्राप्यन्ते तत्तु पदोपादानं ॥ |
| २ | ४ | **गीतादि°** | गीतमपि मधुरादि गुणयुक्तं स्यात् ॥ |
| २ | ८ | **अर्धमागधी** | अर्धं मागध्याः सा चासौ भावात् ॥ |
| २ | १० | **शबराः** | भिल्लाः ॥ |
| ३ | ३ | **प्रेक्षावत्** | प्रेक्षावतां प्रज्ञावतां प्रवृत्तेरङ्गभूतम् ॥ |
| ३ | ९ | **°काव्यानुशासनयोः** | य एव शब्दानुशासनस्य कर्ता स एव काव्यानुशासनस्यापि इति भावः ॥ |

| पृष्ठ. | पंक्ति. | | |
|---|---|---|---|
| ३ | १० | प्रायोगिकम् | संस्कृतप्राकृतादिभाषाव्युत्पत्तिहेतु सूत्रादिकम् ॥ |
| ३ | १० | अन्यैः | आचार्यैः ॥ |
| ३ | १३ | कान्तातुल्यतया | अनेन प्रभुसंमितमित्रसंमितौ निरस्तौ ॥ |
| ३ | १५ | °उल्लेख° | उल्लेख उन्मीलनम् ॥ |
| ३ | १६ | तदनुप्राणना° | तस्याः प्रतिभायाः अनुप्राणनं अनुजीवनं तेन आजीवंती या वर्णना तस्यां निपुणः ॥ |
| ३ | १७ | तस्य | कवेः ॥ |
| ३ | १८ | निरस्तवेद्यान्तरा | निरस्तं वेद्यांतरं ज्ञेयान्तरं यस्यां तस्याम् ॥ |
| ३ | १९ | इदम् | आनन्दरूपम् ॥ |
| ४ | ३ | संमितेभ्यः | तुल्येभ्यः ॥ |
| ४ | ४ | गुणभावे | गौणत्वे ॥ |
| ४ | ४ | रसप्राधान्ये | काव्ये हि शब्दार्थौ गौणौ रस एव प्रधानवृत्तिः ॥ |
| ४ | ४ | विलक्षणं | विपरीतम् ॥ |
| ५ | २ | तत्त्वेन | अर्थे प्राधान्येन युक्ते आख्यानं (पुराणादि) वदन्ति ॥ |
| ५ | २ | एतयोः | एतयोर्द्वयोः शब्दार्थयोर्गुणत्वे गौणभागे व्यापारस्य रसव्यापारस्य प्राधान्ये ॥ |
| ५ | ४ | धनमनैकांतिकं | काव्याद्धनं स्याद्वा न वा ततोऽर्थकृते इति प्रयोजनं निरस्तम् ॥ |
| ५ | ४ | व्यवहारकौशलं | व्यवहार.....नीतिशास्त्रादिभ्योपि स्यात् व्यवहारविदे अनर्थनिवारणं प्रकारान्तरे...॥ |
| ६ | ४ | मात्रात् | अवधारणवाचिमात्रशब्दः ॥ |
| ६ | १० | मन्त्रादि | आदिशब्दात्क... ॥ |
| ६ | ११ | °क्षयोपशम° | नहि क्षयोपशममंतरेण कृतमपि मंत्रादिकं फलति ॥ |
| ६ | १२ | दृष्टोपाधि° | उपाधिर्मन्त्रादिकः ॥ |
| ६ | १६ | तौ | व्युत्पत्त्यभ्यासौ ॥ |
| ६ | १६ | प्रतिभो° | प्रतिभाया उपकारिणौ ॥ |
| ७ | ४ | °इतिहासागम° | इतिहासः पुरावृत्तं ॥ |

| पृ. | पं. | | |
|---|---|---|---|
| ७ | ४ | योगादिग्रन्थेषु | आदिशब्दाद् गजतुरगादिशास्त्रेषु ॥ |
| १३ | ५ | जानन्ति | विदंक् ज्ञाने इति ज्ञानार्थः विदप् विचारणे इति विचारार्थः ॥ |
| १४ | ३ | निपतित° | निपतनं निपतितं क्लिबे क्तः ॥ |
| १४ | ६ | लक्षयति | कथयति ॥ |
| १४ | ७ | अनिबंधो | अग्रथनं ॥ |
| १४ | ९ | जातिद्रव्य° | जातिसामान्यम् ॥ |
| १६ | १ | प्रख्यतया | समतया ॥ |
| २१ | १ | मालत्या वसन्ते | सत्यपि मालती वसंते न वर्ण्यते ॥ |
| २१ | २ | द्रव्यस्य यथा | सतोप्यनिबंधः ॥ |
| २१ | ४ | गुणस्य यथा | सतोऽप्यनिबंधः ॥ |
| २२ | १ | क्रियाया यथा | सत्याऽप्यनिबंधः ॥ |
| २४ | १ | द्रव्यस्य यथा | [अ]ऽसतोपि निबंधः ॥ |
| २४ | १ | मुष्टिग्राह्यत्वस्य | मुष्टिग्राह्यं सूचिभेद्यं च तमो वर्णनीयमित्यर्थः ॥ |
| २६ | १ | ताम्रपर्ण्यामेव | मौक्तिकानि गजकुंभेऽपि वर्ण्यन्ते परमिदं नयपेक्षयावधारणम् ॥ |
| २६ | १ | समुद्रेषु एव | नान्यत्र वर्णनीयाः ॥ |
| २७ | ४ | कृष्णनीलयोः | वर्णयोः ॥ |
| ३४ | २ | निर्वर्ण्य | दृष्ट्वा ॥ |
| ३४ | ४ | लज्जानम्रमुखी | लज्जानम्र इति क्रियाद्वयापेक्षया आलोक्यस्य एककर्तृकत्वं उक्तं लज्जमाना नम्रमुखीत्यर्थः ॥ |
| ३४ | ७ | रसस्योत्कर्ष° | रसस्यैव गुणदोषौ ॥ |
| ३४ | ७ | भक्त्या | उपचारेण ॥ |
| ३४ | ११ | गुणाः | रसे एव गुणा रसाभावे न गुणा इति गुणस्यान्वयव्यतिरेकौ स्वयमभ्यूह्यौ ॥ |
| ३४ | १२ | कष्टत्वादयः | इमे हि अर्थस्य दोषाः ॥ |
| ३४ | १३ | अश्लीलत्वादयः | शब्दार्थयोरश्लीलत्वादयः दोषा न गुणा भवेयुः ॥ |
| ३४ | १७ | अङ्गाश्रिता | येत्वंगिनि रसे भवन्ति ते गुणाः येत्वङ्गयोः शब्दार्थयोराश्रितास्तेऽलङ्काराः ॥ |

| पृ. | पं. | | |
|---|---|---|---|
| ३५ | २ | अनुपकारिणः | बाधकत्वादिना ॥ |
| ३५ | ३ | वाच्य | अर्थ ॥ |
| ३५ | ३ | वाचक | शब्द ॥ |
| ३५ | ३ | °पर्यवसिता | न तु रसपर्यवसिता ॥ |
| ३६ | ५ | तत्परत्वे | तस्य रसस्य परत्वं उपकारकत्वं ॥ |
| ३६ | १ | चलापाङ्गां° | दुष्यन्तः शकुन्तलायां नाटके वक्ति ॥ |
| ३६ | २ | रहस्याख्यायीव | साधु रहस्यमाख्याति साधौ णिन् ॥ |
| ३७ | १ | रसपरत्वेन | शृंगाररसपरत्वेन ॥ |
| ३८ | २ | लीलावधूत° | लीलयावधूता पद्मा लक्ष्मीर्यथा पक्षे लीलयावधूतं पद्मं कमलं यया सा ॥ |
| ३८ | ५ | सागरिका | नाम श्री रत्नावल्या नामांतरमिदं ॥ |
| ३८ | ७ | गुणीकृतो | गौणीकृतः ॥ |
| ३८ | ७ | अपरिजिघटिषया | वत्सराजसागरिकयो—रपरि—॥ |
| ३८ | ९ | उद्दामोत्कलिकां | उत्कृष्टा कलिका पक्षे रणरणकम् ॥ |
| ३८ | ९ | जृम्भां | विकासम् ॥ |
| ३८ | १० | श्वसनो° | श्वस...॥ |
| ३८ | ११ | समदनाम् | वृक्षः कामः च ॥ |
| ३८ | १५ | प्रमुखीभावदशायां | संमुखीभावदशायाम् ॥ |
| ३८ | १६ | यथा° | भर्तृहरिवचः ॥ |
| ३९ | ९ | निर्वेदस्यांगताम् | उपकारकताम् ॥ |
| ३९ | १७ | व्यतिरेक° | व्यतिरेकनामाऽलंकारः ॥ |
| ३९ | १९ | यथा | बालरामायणे सीतास्वयंवरे जनक आह ॥ |
| ४० | २ | धर्मवीरं | रसं प्रति ॥ |
| ४० | २ | अनुभावतां | कार्यताम् ॥ |
| ४० | ३ | अभिजनः | कुलम् ॥ |
| ४० | ७ | धर्मवीर° | धर्मवीरो हि स उच्यते यो गुणान् अगुणांश्च याथातथ्येन वक्ति । अत्र तु क्व नु पुनरिति भणता दोषः आच्छादितः ॥ |
| ४० | ९ | कोपात् | विक्रमादित्यस्यामात्येनोक्तम् ॥ |
| ४१ | २ | ताडेन | आघातेन ॥ |
| ४१ | १० | न ते भीरु | अन्यो हि धनीयो भवति स धनं न एकत्र स्थापयति ॥ |

| पृ. | पं. | | |
|---|---|---|---|
| ४१ | १२ | अनुप्राणकं | अनुजीवकम् ॥ |
| ४२ | २ | रसस्यांगत्वेन | उपकारकत्वेन ॥ |
| ४२ | ६ | मुख्यः | मुखस्य तुल्यः शाखादेर्यः ॥ |
| ४२ | १३ | वाचके इति | वाचक इति मुख्यस्यैव नामांतरम् ॥ |
| ४३ | १ | प्रकृतानुपयोगात् | प्रारब्धे शास्त्रे उपकाररहितत्वात् ॥ |
| ४५ | १ | उपचरित° | उपचारे......इति पर्यायांतरम् ॥ |
| ४५ | ३ | °भेदस्य | बीजं [ इति शेषः ] ॥ |
| ४५ | ८ | संबंधे | संबंधनाम्नि ॥ |
| ४५ | १७ | तत्त्वेन | अभेदेन ॥ |
| ४६ | २ | प्रयोगाद्येषां | पावनत्वरौद्रत्वादीनाम् ॥ |
| ४६ | ४ | अनुबन्ध्य इति | विनाश्यः ॥ |
| ४६ | ७ | विशेष्यं | व्यक्तिम् ॥ |
| ४६ | ७ | अभिधा | मुख्यशब्दव्यापारः ॥ |
| ४६ | ७ | विशेषणे | जातौ ॥ |
| ४७ | ५ | गोलाणइकच्छ° | गोदावरीनदीकच्छनिकुंजवासिना ॥ |
| ५३ | २ | अत्ता एत्थ | अत्ता श्वश्रूरत्र शय्यायां शेते ॥ |
| ५३ | २ | दियसयं | अह्नि ॥ |
| ५३ | १० | सयज्झय | हे प्रातिवेश्मिक ॥ |
| ५४ | ५ | अणाएण | अज्ञातेन अन्यायेन वा ॥ |
| ५४ | ५ | दिहिं | धृतिम् ॥ |
| ५४ | ६ | ओरमसु | निवर्तस्व ॥ |
| ५४ | ६ | गहवइच्छित्तं | गृहपतिक्षेत्रम् ॥ |
| ५४ | ११ | महुएहिं | मधूकैः ॥ |
| ५५ | २ | नियदइय | निजदयितादर्शनाक्षिप्त ॥ |
| ,, | ५ | विधिनिषेधयो | व्रज इति विधिः। नानेन पथा इति निषेधः ॥ |
| ५५ | ६ | °विकत्थनः | वर्णनशीलः ॥ |
| ५५ | १७ | वत्थयत्थणि | हे विस्तृतस्तनि ॥ |
| ५५ | २२ | दे | संमुखीकरणे ॥ |
| ५५ | २२ | पसीअ | प्रसीद ॥ |
| ५६ | ४ | नीसासरो° | निःश्वासरोदितव्याभि ॥ |
| ५६ | ५ | दक्खिणहयस्स | दक्षिणहतस्य ॥ |

| पृ. | पं. | | |
|---|---|---|---|
| ५६ | ९ | °व्यलीक° | °अपराधः ॥ |
| ५६ | ११ | णहमुह | नखमुखैर्नखक्षतैः प्रसाधितांगः। यथेष्टं परस्त्रियं संभुज्य समागतं प्रियतमं विलोक्य कापि नायिका एवमाह ॥ |
| ५६ | १२ | निव्वणाहरः | निर्व्रणाधरः ॥ |
| ५७ | ३ | उपभोगोद्भेदेन | संभोगप्रकाशनेन ॥ |
| ५७ | ३ | तद्बलसमुत्थस्तु | तस्य वाच्यार्थस्य बलं तद्बलं तस्मात् समुत्थः॥ |
| ५७ | १० | सभमर° | हे सभ्रमरपद्माघ्रायिनि हे वारितप्रतिकूले ॥ |
| ५७ | १४ | तद्विषयः | व्यङ्ग्यार्थवाचकः ॥ |
| ५८ | ३ | समयापेक्षा | संकेतापेक्षा ॥ |
| ५८ | ४ | मुख्यार्थबाधादि° | आदिशब्दान्निमित्तप्रयोजनपरिग्रहः मुख्यार्थ-बाधादिसहकारिणी अपेक्षा यस्याः ॥ |
| ५८ | ५ | तच्छक्त्युपजनित° | ताश्च मुख्यागौणीलक्षणाः च ताः शक्तयः च ॥ |
| ५८ | ८ | वाक्यविषयौ एव | .........विचार्यमाणत्वात् वाक्यं हि शब्दसमुदयः ॥ |
| ५८ | ९ | वक्त्रादि° | पूर्वं हि अर्थो व्यङ्ग्य एवोक्तः सांप्रतं अर्थस्यापि व्यञ्जकत्वमाह ॥ |
| ५८ | १० | प्रतिपाद्य° | बोध्य° ॥ |
| ५८ | ११ | मुख्यामुख्य° | अमुख्येत्युक्ते गौणलक्षणयोर्ग्रहणम् ॥ |
| ५९ | २ | जरठच्छेदाः | जरठः कठिनश्छेदो यासां ताः ॥ |
| ५९ | ८ | बांधवजनस्य | मल्लक्षणस्य ॥ |
| ५९ | १३ | पाञ्चालतनयां | द्रौपदीम् ॥ |
| ५९ | १६ | गुरुः | युधिष्ठिरः ॥ |
| ५९ | १६ | मयि | भीमे ॥ |
| ६० | १० | उद्देशः | प्रदेशः ॥ |
| ६० | ११ | कुञ्जोत्कर्ष° | कुञ्जोत्कर्षेण अंकुरितो रमणीविभ्रमो येन ॥ |
| ६० | १६ | अन्यासक्तेः | नैकट्यादित्यर्थे ॥ |
| ६० | १७ | णोल्लेइ | नोदयति ॥ |
| ६० | १७ | अणोल्लमणा | अनार्द्रमनाः कठोरचित्तः ॥ |
| ६१ | ४ | किंति | किमिति ॥ |
| ६१ | १४ | अभिधा° | मुख्या° ॥ |

| पृ. | पं. | | |
|---|---|---|---|
| ६४ | २ | अनवच्छेदे | अनवबोधे ॥ |
| ६४ | ७ | दाशरथौ | दशरथापत्ये रामे न तु परशुरामादौ ॥ |
| ६४ | ९ | ग्रहविशेषे | न तु विदुषि नरकासुरे च ॥ |
| ६४ | ११ | भार्गवकार्तवीर्ययोः | परशुरामार्जुनयोः ॥ |
| ६४ | १२ | अश्वे | न तु लवणे ॥ |
| ६४ | १४ | युष्मदर्थे | देवशब्दः प्रतीयते ॥ |
| ६५ | १ | रतिव्यत्यये | विपरीतरते ॥ |
| ६५ | २ | प्रसादसाम्मुख्ये | प्रस्तावात् प्रसादरूपे पालने तन्मुखं प्रसन्नं भवतु इत्यर्थः ॥ |
| ६५ | ४ | राजनि | महेश्वरशब्दो नियंत्र्यते ॥ |
| ६५ | ७ | सुहृदि | सुहृदर्थे मित्रशब्दः क्लिबव्यक्तिमान् सूर्ये तु पुल्लिंगव्यक्तिमान् ॥ |
| ६५ | ८ | काव्यमार्गे | किंतु वेदमार्गे उपयोगिनी ॥ |
| ६५ | ९ | समरे न | अपि तु मथ्नाम्येव ॥ |
| ६५ | १३ | पदहमित्तत्थणिया | कुंभस्तनी ॥ |
| ६५ | १३ | पदहमित्तेहिं | प्रसृतिप्रमाणाभ्याम् ॥ |
| ६५ | १३ | अच्छिवत्तेहिं | अक्षिपत्राभ्याम् ॥ |
| ६५ | १३ | एयावत्थं | ऊर्ध्वांगुली ॥ |
| ६५ | १४ | एत्तियमित्तेहिं | पञ्चभिरंगुलीभिः ॥ |
| ६५ | १६ | अपदेशो यथा | अपदेशः स्वगतः इतः अनेन पदेन सूचितः॥ |
| ६५ | १७ | इतः | मत्तः प्रजापतेः ॥ |
| ६५ | १७ | नेतः | मत्तः ॥ |
| ६५ | १८ | स्वयं | आत्मनि ॥ |
| ६५ | २० | निर्देशो यथा | निर्देशः परगतः ॥ |
| ६५ | २१ | कोऽपि | कोऽपि इति-पदेन निर्देशः सूचितः ॥ |
| ६५ | २२ | माम् | वत्सराजम् ॥ |
| ६५ | २२ | आख्यातवत्यः | सख्यः ॥ |
| ६६ | २ | अनंगशासनम् | रुद्रं ॥ |
| ६६ | ३ | वीक्षितेन | वीक्षणेन ॥ |
| ६६ | ६ | आकीर्णे | जनाकुले स्थाने ॥ |
| ६६ | ७ | अवेत्य | ज्ञात्वा ॥ |
| ६६ | ७ | लीलापद्मं न्यमीलयत् | सन्ध्यायां संकेत इत्यर्थः ॥ |
| ६६ | १३ | अभिधायां | मुख्यशब्दव्यापारो मुख्या इत्यर्थः ॥ |

| पृ. | पं. | | |
|---|---|---|---|
| ६६ | १५ | संकेत° | नहि पावित्र्ये गंगाशब्दः संकेतितः ॥ |
| ६६ | १७ | लक्ष्यं | गंगा [तट] लक्षणं ॥ |
| ६६ | १८ | तत्र शब्दः° | यथा हि तटे गंगात्वे आरोप्यमाणे यो गंगाया मुख्यभूतो जलवाहादिः शब्दः स स्खलद्गतिर्नात्र तथा ॥ |
| ६६ | १९ | लक्ष्यं | गङ्गातटादि ॥ |
| ६६ | २१ | विषयप्रयोजनयोः | गङ्गापावित्र्ययोः ॥ |
| ६६ | २३ | अर्थाधिगतिः | अर्थाधिगतिर्नैयायिकादीनां प्राकटयं भट्टमते संवित्तिः प्रभाकरमते ॥ |
| ६७ | २ | एकान्त | एकांतं निर्व्यंजनं पक्षे निश्चयः ॥ |
| ६७ | १६ | अनुदारः | अनुगता दारा यस्य ॥ |
| ६७ | १५ | अशनि | वज्रम् ॥ |
| ६८ | २ | विटङ्कित | दूरोन्नत ॥ |
| ६८ | ६ | प्रोलसद्धारः | प्रोल्लसन्तो हारा यस्मिन्, प्रोल्लसन्त्यो धारा यस्य ॥ |
| ६८ | ६ | कालागुरु | वत्, पक्षे तेन ॥ |
| ६८ | १२ | °चंद्रा | सुवर्ण ॥ |
| ६८ | १८ | श्यामा | अप्रसूता भवेत् श्यामा ॥ |
| ६९ | १ | विरोधालंकारो | यदि हि विरोधालंकारो स्यात् तदा हस्तिगामिन्य इत्यादीनि कुर्यात् ॥ |
| ६९ | १७ | निशा | अत्र निशाशब्दो लक्षणया सम्यग्द्रष्टौ वर्तते॥ |
| ६९ | १८ | यस्यां | लक्षणया मिथ्याद्रष्टौ ॥ |
| ७० | २ | उपदेश्यं | धिष्ण्यम् ॥ |
| ७० | ३ | अवधानं | जागरणम् ॥ |
| ७१ | ४ | त्रिकनिर्देशात् | अस्मि इति निर्देशात् ॥ |
| ७२ | २ | शूरकृतविद्यसेवकानां | असंभाव्यपराक्रमेण दुर्घटकार्यकारी शूरः कृता परं धाराधिरोहं नीता विद्या तत्त्वावबोधहेतुर्येन, सेवा द्विधा आकारेंगितादिभिः प्रभुमनो विज्ञानं अकृत्यादेशाद्यगणनं च ॥ |
| ७२ | ४ | वस्तुअलंकार° | अत्र चतुर्भंगी । वस्तु वस्तु व्यनक्ति १<br>वस्तु अलंकारं व्यनक्ति २<br>अलंकारो वस्तु व्यनक्ति ३<br>अलंकारोऽलंकारं व्यनक्ति ॥ ४ |

| पृ. | पं. | | |
|---|---|---|---|
| ७४ | ३ | तं | वस्तु कर्तृ ॥ |
| ७४ | ४ | बिंबाहरं | श्रीसहोदरं यद्रत्नममृतलक्षणं तस्याहरणे यदेकरसं तत्कामेन रामाधरपानलम्पटं कृतम्॥ |
| ७४ | ४ | कुसुमबाणेण | तद् हृदयं येत्तभ्योऽसुरेभ्योपि अकम्प्रं कठोरं कुसुमबाणेनापि निवेशितम् ॥ |
| ७४ | ६ | पइं | वस्तु कर्मभूतम् ॥ |
| ७७ | ५ | सरित्सात् | सरिदायत्त ॥ |
| ७९ | २ | छण° | उत्सवप्रसरे महर्घ्यो मनोहरः सुरामोदो यत्र॥ |
| ८० | २ | एवंभूतं | मधुमासस्याग्रमपि मुखमपि ईदृशं स प्रौढः सन् किंकरिष्यतीति न ज्ञायते ॥ |
| ८० | ४ | समोसरइ | समवसरति ॥ |
| ८० | ८ | गोसम्मि | प्रातः ॥ |
| ८० | १५ | अंबुकुम्भैः | जलघटैः ॥ |
| ८१ | २ | आक्षेपः | अलङ्कारः ॥ |
| ८१ | २ | तद्विशेष° | गुणः ॥ |
| ८१ | ३ | गृध्रगोमायु | नाम्नि प्रबंधे ॥ |
| ८१ | ४ | °संकुले | कंकालबहुले भीते सर्वप्राणिभयंकरे । उत्तरार्धम् ॥ |
| ८१ | ५ | उपागतः | प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी । उत्तरार्धम् ॥ |
| ८१ | ७ | प्रभवतो | समर्थस्य ॥ |
| ८१ | ९ | मुहूर्तोऽयं | मृत्योरप्यत्र मुहूर्ते विघ्नो भवतीति ॥ |
| ८१ | १३ | °व्यावर्तनः | पश्चाद्वालनम् ॥ |
| ८१ | १६ | वस्तुनः | प्रबन्धे ॥ |
| ८१ | १७ | भेदत्रयम् | प्रबन्धे वस्तुनो वस्तुव्यञ्जकत्वमुदाहृतम् ॥ |
| ८४ | २ | अहिरीओ | अह्रीकः ॥ |
| ८४ | ३ | अणिरिक्काओ | परतंत्राः ॥ |
| ८४ | ३ | णो | अस्माकम् ॥ |
| ८४ | ८ | नालैः° | मेघदूते ॥ |
| ८४ | ९ | यां | कांचनवासयष्टिम् ॥ |
| ८५ | ५ | तूहंच्चिय | तीर्थमेव ॥ |
| ८५ | १२ | एकपदे | युगपत् ॥ |

| पृ. | पं. | | |
|---|---|---|---|
| ८५ | १३ | निरातपत्ररम्यैः | निरातपत्राण्यपि रम्याणि जलदेनैव तत्कार्यकरणत्वात् अथवा निश्चितान्यातपत्राणि भूमिस्फोटकानि तैर्वा रम्याणि ॥ |
| ८६ | ११ | उपांशु | रहस्यम् ॥ |
| ८६ | ११ | अनुजिघृक्षा | अनुग्रहीतुमिच्छा ॥ |
| ८७ | ५ | निवंसणर° | रतिकेलिहृतनिवसनकरकिसलयरुद्धनयनयुगलस्य ॥ |

## —: द्वितीयोऽध्याय :—

| पृ. | पं. | | |
|---|---|---|---|
| ८८ | ६ | आलम्बन | शृंगाररसस्येमे ॥ |
| ८८ | ९ | कारण° | विभाव° ॥ |
| ८८ | ९ | कार्य° | अनुभाव° ॥ |
| ८८ | १० | सहचारि° | व्यभिचारि° ॥ |
| ८८ | १० | शब्दव्यपदेश्यैः | विभावादीनां कारणकार्यसहचारिशब्दव्यपदेश्यत्वं स्थायिभावानुमापकत्वेनैव न तु तात्त्विकं स्वयमेवाग्रे निषेधयिष्यत्याचार्यः ॥ |
| ८८ | १२ | वासना | संस्कारः ॥ |
| ८८ | १४ | चर्व्यमाणतैकप्राणो | चर्व्यमाणतैव एकं प्राणं यस्य सः ॥ |
| १०३ | १ | तद्विनाशेऽपि | कुलालाभावे घटसंभव इव ॥ |
| १०३ | २ | नापि ज्ञाप्यः | यथा दीपस्य घटो ज्ञाप्यः ॥ |
| १०३ | २ | सिद्धस्य | पूर्वनिष्पन्नस्य रसस्याभावात् न हि घट इव पूर्वं निष्पन्नःसन् रसः पश्चाद्दीपेनेव विभावादिना ज्ञाप्यते ॥ |
| १०३ | ३ | दूषणम् | न क्वचिद्दृष्टमिति वाक्यम् ॥ |
| १०३ | ५ | व्याघ्रादयो विभावाः | व्यस्तत्वं व्यभिचरद् दर्शयति। यदि केवलं विभावा एव रसस्य अभिव्यंजका प्रतिपाद्यन्ते तर्हि व्याघ्रादयो भयानकरसस्य विभावा वीराद्भुतरौद्ररसानां अभिव्यंजकाः न स्युस्ततो विभावानुभावव्यभिचारिणां समस्तानामेव रसव्यंजकत्वशक्तिर्न तु व्यस्तानाम् ॥ |

| पृ. | पं. | | |
|---|---|---|---|
| १०४ | ४ | आपाते | आरंभेपि ॥ |
| १०४ | ७ | विभावानाम् | अत्र विभावानामेव केवलानां ग्रहणं कृतं इति भावः ॥ |
| १०४ | १३ | उत्सुकम् | प्रेयसि दूरस्थे चक्षुरुत्सुकं जातम् ॥ |
| १०५ | १ | व्यभिचारिणाम् | केवलानामेव ग्रहणम् |
| १०६ | ६ | तद्विपरीत | शृंगारविपरीतः ॥ |
| १०६ | ६ | तन्निमित्तम् | शृंगारनिमित्तम् ॥ |
| १०६ | ६ | अर्थप्रधानो | दृश्यंते हि राजानः शृंगारपुष्टिकृतो अर्थस्य कृते समरसंरम्भं विदधाना रौद्रं रसं भजंते ॥ |
| १०६ | ८ | तद्विभाव° | तस्य भयानकरसस्य विभावाः तद् विभावाः ॥ |
| १०६ | ९ | त्रिवर्गात्मकप्रवृत्ति° | त्रिवर्गात्मकप्रवृत्तौ शृंगारवीराद्भुतरूपरसत्रयप्रवृत्तौ ये धर्मास्तद्विपरीता निवृत्तिः संसाराद्विरमणं तस्य ये धर्मास्तदात्मकः ततो द्वन्द्वसमासः ॥ |
| १०६ | ११ | परस्परासंकीर्णाः | परस्परं अमिलिताः ॥ |
| १०६ | ११ | आर्द्रतास्थायिकः | आर्द्रता स्थायी भावो यस्य ॥ |
| १०६ | १२ | रतौ | अंतर्भवति ॥ |
| १०६ | १३ | धर्मवीरे | वीररसप्रथमभेदेऽतंर्भवति ॥ |
| १०६ | १४ | एवं | भये ॥ |
| १०६ | १४ | गर्धस्थायिकस्य | गर्धः अभिलाषः स्थायी भावो यस्य ॥ |
| १०७ | १ | स्त्रीपुंसौ | आलंबन° ॥ |
| १०७ | १ | माल्यर्तु° | उद्दीपन° ॥ |
| १०७ | ३ | वर्जितव्यभिचारिणी | एतद्वर्जितैर्व्यभिचारिभिः व्यभिचारिणी ॥ |
| १०७ | ४ | समग्रविषयग्राम° | समस्तविषयसमूहसंपूर्णयोः ॥ |
| १०७ | ४ | संप्रयोग° | सुरत° ॥ |
| १०७ | ६ | सुखोत्तरा | सुखप्रधाना ॥ |
| १०७ | ६ | आस्थाबन्धात्मिका | अयं मम मम इयं एवंरूपा आस्था ॥ |
| १०७ | ८ | °विषया | रतिः ॥ |
| १०८ | ३ | गोत्वस्येव | व्यतिरेकदृष्टांतः ॥ |
| १०८ | ६ | तथा हि | संभोगे विप्रलम्भः विप्रलम्भेपि संभोगः रतिः शृङ्गारस्य उभयात्मकत्वं व्यनक्ति ॥ |

| पृ. | पं. | | |
|---|---|---|---|
| १०८ | ७ | निराशत्वे | संभोगाशारहितत्वे ॥ |
| १०८ | ८ | वामत्वात् | विपरीतत्वात् ॥ |
| १०८ | ९ | मुनिः | भरतः ॥ |
| १०९ | २ | कष्ठग्रहम् | यथा भवति ॥ |
| १०९ | ३ | न...गोत्वस्येव शाबलेयबाहुलेयौ | यथा हि ग्रामकैदेशे ग्राम उपचर्यते तथा संभोगे शृंगारैकदेशेऽपि शृंगारशब्द उपचर्यते। न हि इमौ गोत्वस्येव शाबलबाहुलेयौ शृंगारस्य द्वौ भेदौ किंतु एतयोर्द्वयोर्मिलितयोरेव शृंगाररसो जायते न हि केवले संभोगे विप्रलंभे वा शृंगार इत्यर्थः ॥ |
| १०९ | ४ | वस्तुतः | तत्त्वतः ॥ |
| १०९ | ९ | स च | संभोगः ॥ |
| ११० | १० | विशेषेण प्रलभ्यते | वक्ष्यते ॥ |
| ११० | १० | निद्रासुप्त° | किञ्चित् स्वपनं निद्रा सुप्तं निर्भरं स्वप्नम् ॥ |
| १११ | ११ | मरण° | मरणस्य प्रागवस्था मरणं मृतस्य हि शृंगाराभावात् ॥ |
| १११ | १२ | उच्छिरसः | उद्गतशिखरस्य ॥ |
| १११ | १८ | गुरुसेतुभिः | मातापितृरूपसेतुभिः ॥ |
| ११२ | १ | लिखितप्रख्यैः | लिखितसदृशैः ॥ |
| ११२ | १ | उन्मुखाः | संमुखाः ॥ |
| ११२ | १० | ससंभ्रमबिस्मृत° | संभ्रमेण भयेन बिस्मृतं विस्मरणं प्रस्तावाद्गंगायास्तेन सह वर्तते सः ॥ |
| ११२ | १२ | तया | पार्वत्या ॥ |
| ११२ | २२ | माणइत्ताण | मानवतोः ॥ |
| ११२ | २३ | निच्चलनिरुद्ध | निश्चलो निरुद्धनिःश्वासं यथा भवत्येवं दत्तौ कर्णौ याभ्यां ॥ |
| ११३ | ९ | तद्दत्तझम्पानतां | तेन मधुरिपुणा याः दत्ता झंपास्ताभिर्नतां॥ |
| ११३ | ११ | गद्गद° | अव्यक्त निम्नीभवद् ॥ |
| ११३ | १२ | येन | गीतेन ॥ |
| ११३ | २० | कलितोऽहं | ज्ञातोऽहं भवत्या पुरापीति संटंकः ॥ |

| पृ. | पं. | | |
|---|---|---|---|
| ११४ | २ | असत्प्रलापः | असत् शब्दो द्वयोरपि योज्यः ॥ |
| ११४ | ३ | दृष्टिव्याकोश | दृष्टयोर्व्याकोशो विकास आकुञ्चनं संकोचः॥ |
| ११४ | ५ | आत्मस्थः परस्थः | आत्मीयां चेष्टां दृष्ट्वा यत् हस्यते स आत्मस्थः परं हसंतं दृष्ट्वा परचेष्टया वा यत् हस्यते स परस्थः ॥ |
| ११४ | ११ | सौष्ठवान्वितैः | सुष्ठोभविः सौष्ठवं अविकृतैः ॥ |
| ११४ | १२ | अलक्षितद्विजं | अदृष्टदंतं ॥ |
| ११४ | १६ | °अंसक° | °स्कन्ध° ॥ |
| ११५ | ४ | जिह्म° | वक्र ॥ |
| ११५ | ११ | °कुटिल | °विषमः ॥ |
| ११५ | ११ | गजेन्द्राजिनम् | गजेन्द्रचर्म्म ॥ |
| ११५ | १८ | असितसिचय° | श्यामवस्त्र° ॥ |
| ११५ | १८ | उत्क्षिपन् | उत्पादयन् ॥ |
| ११६ | ४ | तानव° | कार्श्य° ॥ |
| ११६ | १५ | अभिजन° | कुल° ॥ |
| ११६ | १८ | आवेगः | संभ्रमः ॥ |
| ११७ | ४ | °प्रभाव° | प्रतिनायकवर्तीति सर्वत्र योज्यम् ॥ |
| ११७ | ५ | °वैशारद्यम्° | सामाद्युपायनियोजने दक्षत्वम् ॥ |
| ११८ | १ | अनिष्ठा | यागं अकृत्वा ॥ |
| ११८ | ९ | विवेकः | रौद्रवीररसयोर्भेदः ॥ |
| ११९ | २ | मृदून् | न पुनः कठोरचेष्टितानि पूत्करणादीनि ॥ |
| ११९ | १२ | नासामुखविकुणनाच्छादन° | नासामुखयोः विकूणनं नासामुखयोः एव आच्छादनम् ॥ |
| ११९ | ११ | उद्वान्त° | वमन° ॥ |
| ११९ | १७ | प्रेतरङ्कः | पिशाचः ॥ |
| १२० | ५ | कृष्णेनाम्ब° | बाल्ये बलदेवः कृष्णमातरं देवकीं प्रति वक्ति॥ |
| १२० | ७ | व्यादेहि | प्रसारय ॥ |
| १२० | १३ | परमेश्वरानुग्रह° | देवविषये चित्तप्रसन्नता° ॥ |
| १२१ | २ | यथा | भर्तृहरिः ॥ |
| १२३ | २ | पर्यन्तनिर्वाहे | यदा हि शांतरसस्य परिपूर्णो निर्वाहो जायते तदा मूलत एव जुगुप्सा क्षीयते वीतरागद्वेषत्वात्तस्य ॥ |

| पृ. | पं. | | |
|---|---|---|---|
| १२४ | १ | धर्मवीरे | रसेऽन्तर्भवति ॥ |
| १२४ | २ | अस्य | शान्तरसस्य ॥ |
| १२४ | २ | तयोः | धर्मवीरशान्तयोः ॥ |
| १२४ | ३ | सर्वाकार° | सर्वप्रकारैः ॥ |
| १२४ | ५ | विविक्ताः | भिन्नाः ॥ |
| १२४ | ९ | चित्तवृत्तयः | सन्तः ॥ |
| १२४ | ९ | वाचिकाद्य° | वाचिकांगिकसात्त्विकाहार्याः ॥ |
| १२४ | १२ | एतावतामेव | नवानामेव ॥ |
| १२४ | १३ | संविद्भिः | ज्ञानैः ॥ |
| १२४ | १३ | परीतः | वेष्टितः ॥ |
| १२४ | १४ | सर्वः | सर्वजीवः ॥ |
| १२४ | १४ | रिरंसया | रत्या ॥ |
| १२५ | १ | उत्कर्षापायशंकया | उत्कर्षः प्रौढिमा तस्य शङ्कया विघ्नशंकया ॥ |
| १२५ | ५ | न° भवति | कियन्तोऽवस्थायिनो भावाः सर्वेऽस्य युगपन्न भवन्तीत्याह ॥ |
| १२५ | ६ | काचिदेव | उचितविषयनियंत्रिता ॥ |
| १२५ | १० | यस्य | नरस्य ॥ |
| १२५ | ११ | हेतुप्रक्षये | व्याध्यादिक्षये ॥ |
| १२५ | ११ | संस्कारशेषतां | मूलत एव विनश्यन्तीत्यर्थः ॥ |
| १२५ | १२ | रत्यादयस्तु | स्थायिभावाः ॥ |
| १२५ | १३ | नातिवर्तन्ते | नातिक्रामन्ति ॥ |
| १२५ | १७ | अमी | त्रयस्त्रिंशद्व्यभिचारिणो भावाः ॥ |
| १२५ | १८ | वैचित्र्यशतसहस्र-धर्माणम् | उदयास्तमयानां वैचित्र्येण व्यभिचारिणो हि भावाः कदाचिदुदयंति कदाचिदस्तमयंते ...कमनेकधा वैचित्र्यं भजन्ते ॥ |
| १२५ | २० | अत्र | रामे ॥ |
| १२६ | २ | तदभावे ते सर्वथैव निरुपाख्याः | न विभावानामभावे ते रत्युत्साहादयः, सर्वथैव असद्रूपाः ॥ |
| १२६ | ३ | तन्मयत्वेन | रत्यादिमयत्वेन ॥ |
| १२६ | ६ | वैधुर्य | [ अस्पष्टम् ] |
| १२६ | ८ | एषाम् | रत्यादीनाम् ॥ |

| पृ. | पं. | | |
|---|---|---|---|
| १२७ | ३ | °संभेदः | °मिश्र ॥ |
| १२७ | ७ | दैन्यमनौजस्यम् | उजस्विनो भाव औजस्यं । अतद्वतो हि भाव एव न संभवति ॥ |
| १२७ | ८ | प्रतिचिकीर्षा | प्रतीकारं कर्तु वाञ्छा ॥ |
| १२७ | ९ | चित्तचमत्कारः | पूर्वापरविचाररहितः ॥ |
| १२७ | १० | आवेशः | रोगः ॥ |
| १२७ | ११ | मृतिर्म्रियमाणता | मरणस्य प्रागवस्था न तु मरणम् ॥ |
| १२७ | १३ | तिष्ठेत्° | विक्रमोर्वशीं अपश्यन् पुरूरवा आह |
| १२७ | १५ | विबुधद्विषोऽपि | असुराः अपि ॥ |
| १२७ | १६ | विधिः | वितर्कस्थितिः ॥ |
| १२७ | २१ | गोत्र | नाम ॥ |
| १२८ | ४ | मानस्योदयः | न तु स्थितिः यदि मानस्य स्थितिः स्यात्तदा नाम विपर्यये श्रुते साऽहंकाराऽऽदावेव परिवर्त्तनमरिकष्यत् परं मानस्योदय आरंभ एवास्ति न तु स्थितिः ॥ |
| १२८ | ६ | मुकुलितं | मानेन संकुचितम् ॥ |
| १२८ | ७ | न्यग्भूतं | नीचीभूतम् । मानेन इति सर्वत्र योज्यम् ॥ |
| १२८ | १३ | उत्सिक्तस्य | उत्सेकं गतस्य ॥ |
| १२८ | १३ | तपःपराक्रमनिधेः | परशुरामे समागते रामस्य वाक्यम् ॥ |
| १२८ | १४ | वीररभसोत्फालः | तपोनिधित्वे शिष्टसंगप्रियता पराक्रमनिधित्वे वीररभसोत्फालः ॥ |
| १२८ | १८ | अत्रावेगहर्षयोःसन्धिः | परशुरामे आवेगः सीतायां हर्षः ॥ |
| १२८ | १९ | शबलत्वम् | मिश्रत्वम् ॥ |
| १२९ | १५ | सदृश° | सदृशशब्दो दर्शनस्पर्शनयोर्लगति ॥ |
| १२९ | १५ | प्रणिधान° | ध्यान° |
| १३० | १ | मैनाकः | पर्वतः ॥ |
| १३० | २ | तस्य | मैनाकस्य ॥ |
| १३० | २ | भीतो महेन्द्रादपि | मत्तो यो भीतस्तस्मादपि भीत इत्यर्थः ॥ |
| १३० | ३ | तार्क्ष्यः | गरुडः ॥ |
| १३० | ३ | विभुना | विष्णुना ॥ |
| १३० | ७ | ऊहापोह | ऊहा वितर्कमात्रं अपोहो निश्चयः ॥ |

| पृ. | पं. | | |
|---|---|---|---|
| १३० | ९ | असंशयं | दुष्यन्तः शकुन्तलामुद्दिश्याह । असंशयं निश्चितं इयं शकुन्तला क्षत्रपरिग्रहक्षमा क्षत्रियपरिग्रहयोग्या यत् मम आर्यं सद्-वृत्ति मनः अस्यां शकुन्तलायां अभिलाषि॥ |
| १३० | १४ | वस्त्राङ्गुलीयकर्णस्पर्शेन | वस्त्रांगुलीयकयोः प्रत्येकं स्पर्शनशब्दो योग्यः |
| १३० | १४ | नखनिस्तोद | नखमलस्फेटन ॥ |
| १३० | १६ | परिभोग° | परिभोगो नखक्षतादि ॥ |
| १३० | १६ | प्रणयिनः | रुद्रस्य ॥ |
| १३० | १६ | निषेदुषः | उपविष्टस्य ॥ |
| १३० | १७ | बिम्बमनुबिम्बात्मनः | आत्मनो बिंबमनुगतं अनुबिंबं रुद्रस्य ॥ |
| १३० | १७ | कानि कानि न | चेष्टितानि । पार्वती प्रस्तावात् ॥ |
| १३० | २० | तत् | जाड्यं |
| १३० | २२ | साध्वसं | भयरहितं यथा भवति ॥ |
| १३० | २३ | सा | गौरी ॥ |
| १३० | २३ | प्रमुखवर्तिनि | संमुखवर्तिनि ॥ |
| १३१ | २ | °अभावनाशाभ्याम् | अभावनाशयोरुपायशब्दो योज्यः ॥ |
| १३१ | ६ | व्यर्थ° | शमो विषादापन्नश्चिन्तयति ॥ |
| १३१ | ६ | कपीन्द्र° | सुग्रीव° ॥ |
| १३१ | ७ | पुत्रस्य वायोः | हनुमतः ॥ |
| १३१ | ८ | नलो | नलनामा यक्षः ॥ |
| १३१ | ९ | सौमित्रेः | लक्ष्मणस्य बाणानाम् ॥ |
| १३१ | १४ | °विध्यकुटिल° | जिह्म° |
| १३१ | १५ | सन्न° | जिह्म° |
| १३१ | १६ | प्रथमो मदः | मध्यमाधमयोरुत्तममदस्यापि गुणा भवंतीति प्रथमः त्रिष्वपि एवमग्रेपि ॥ |
| १३२ | ३ | मनोरोगः | कामः ॥ |
| १३२ | ४ | प्रमाथी | प्रमथनशीलो मनोरोग एव ॥ |
| १३२ | ५ | ज्वरः | मनोरोग ॥ |
| १३२ | १० | सन्नगात्र° | मद° |
| १३२ | १७ | उत्स्वपनायितादि° | झंषित° ॥ |
| १३२ | २३ | स्वपनायमानः | झंषमानः ॥ |

| पृ. | पं. | | |
|---|---|---|---|
| १३३ | ४ | उद्वेष्टनवान्तमाल्यः | उद्वेष्टनेन बन्धनाभावेन वान्तं माल्यं येन ॥ |
| १३३ | ९ | येन | आकारसवरणमित्यर्थः ॥ |
| १३३ | १६ | °उत्प्रेक्षा | चिन्तनम् ॥ |
| १३३ | २१ | दूराद् दवीयो | काचित् राक्षसी भणति ॥ |
| १३३ | २१ | ताडकेयं | ताडका राक्षसी तस्याः पुत्रं ॥ |
| १३३ | २२ | सा राजपुत्रः | रामः ॥ |
| १३४ | १ | नंदयन्त्यां | भार्यायाम् ॥ |
| १३४ | ८ | भ्रमयांचकार | कश्चित् स्वयंवरे ॥ |
| १३४ | ११ | °सौहित्य | आघ्राणम् ॥ |
| १३५ | ८ | ब्राह्मणातिक्रमत्यागो | परशुरामदूतो रावणं प्रति वक्ति ब्राह्मणानां अतिक्रम त्यागोऽवज्ञा त्यागोऽवमाननमित्यर्थः ॥ |
| १३५ | ९ | जामदग्न्यस्तथा | तथा तेन ब्राह्मणमनेन प्रकारेण । अन्यथा यदि ब्राह्मणान्न मानयसि ॥ |
| १३५ | १५ | एकविंशत्यवधि | एकविंशतिं वारान् यथा भवति ॥ |
| १३५ | १५ | विशसतः | विनाशयतः ॥ |
| १३६ | २ | आकेकरा | ईषद्वक्रा ॥ |
| १३६ | ६ | °क्षामनेत्रकपोलोक्तिः | क्षामनेत्र क्षामकपोल क्षामोक्तिः ॥ |
| १३६ | ७ | प्रवेपन° | कम्पः ॥ |
| १३६ | १४ | मृजात्याग | शरीरसंस्कारत्यागः ॥ |
| १३६ | १६ | अस्मान्साधु° | शकुन्तलापिता छात्रान् संदेशं कथयति दुष्यन्तस्य ॥ |
| १३६ | १७ | अस्याः | शकुन्तलायाः ॥ |
| १३६ | १७ | ताम् | विचिन्त्य ॥ |
| १३६ | २२ | अंगभङ्गमर्दन° | अंगस्य भंगोऽङ्गस्य मर्दनम् ॥ |
| १३७ | ४ | अवाप्ता | तत् इदं स्थानं इति रामः सीतां प्रत्याह॥ |
| १३७ | १८ | अभिषङ्ग° | दुःखसंबंधः ॥ |
| १३८ | २ | कोऽसौ | कान्तः ॥ |
| १३८ | १२ | आसज्य | संबंध्य ॥ |
| १३८ | १५ | विद्यैश्वर्यबलाधिककृतेभ्यः | विद्याधिक ऐश्वर्याधिक बलाधिकैः कृता ये आक्षेपावमानादयः ॥ |
| १३८ | १८ | सभाप्रवेश° | द्यूतसभाः° |

| पृ. | पं. | | |
|---|---|---|---|
| १३८ | १९ | चित्तनिचयेषु | लाक्षागृहानलविषान्नाभ्यां प्राणेषु द्यूतेन चित्तेषु प्रहृत्येति संबंधः ॥ |
| १३८ | २१ | स्वस्था | काकु ॥ |
| १३८ | २१ | मयि | भीमे |
| १३८ | २४ | रक्षः स्थूल | रक्षः फेत्कारदक्ष पशुताडन ॥ |
| १३९ | १ | परिस्फुरन् | अर्जुनक्षोभनाय जलक्रीडां कुर्वन्त्योऽप्सरसो वर्ण्यन्ते ॥ |
| १३९ | ५ | ब्रह्मराक्षस° | राक्षसभेदः ॥ |
| १३९ | १० | असौ | कृष्णः ॥ |
| १४१ | ३ | उपनिपतन् | आगच्छन् ॥ |
| १४२ | १ | शस्त्री | शस्त्रयुक्तः ॥ |
| १४२ | १ | संभाव्यम् | पूर्वं संगृह्य पश्चाद् विमुच्यते ॥ |
| १४२ | २ | दैत्याधिनाथः | हिरण्यकशिपुः ॥ |
| १४२ | ७ | संप्रधारण° | अवधारण° ॥ |
| १४२ | ७ | मुहुर्ग्रहण° | संशये हि केचिदर्था गृह्यन्ते, केचिन्मुच्यन्ते॥ |
| १४२ | १३ | सेर्ष्योक्ति° | सेर्ष्यशब्द उत्तयालोकितयोर्योज्यः ॥ |
| १४२ | १३ | वृद्धास्ते | रामादयः ॥ |
| १४२ | १६ | सुन्दस्त्री° | ताडका ॥ |
| १४३ | १ | खरायोधने | दूषणबन्धोः खरस्य आयोधने संग्रामे ॥ |
| १४३ | २,१० | इन्द्रसूनु° | वालि° ॥ |
| १४३ | १० | निरासे | मुक्तः ॥ |
| १४३ | १२ | मरणाध्यवसायः | न साक्षान्मरणं निबध्यत इत्यर्थः ॥ |
| १४३ | १५ | निश्चित्य | मरणादौ निश्चयं कृत्वा ॥ |
| १४४ | १० | सीदति | गच्छति अस्मिन् प्राणे...॥ |
| १४४ | १० | व्युत्पत्तेः | सत्त्वशब्दस्य तिस्रो व्युत्पत्तयः ॥ |
| १४४ | १२ | प्राणभूमिप्रसृतरत्यादिसंवेदनवृत्तयः | प्राणभूमौ प्रसृतं रत्यादिज्ञानं तत्र वृत्तिर्येषाम् ॥ |
| १४५ | ३ | जलभागप्रधाने | प्राणे |
| १४५ | ४ | तेजसः प्राणनैकट्याद् | तेजो हि प्राणस्य सत्त्वस्य निकटं तत-स्तीव्रत्वे स्वेदो नाम सात्त्विकः अतितीव्रत्वे तु कालमुखत्वम् ॥ |

